यं योगिनो योगबलेन साध्यं कुर्वन्ति तं कः स्तवनेन स्तौति ।
अतः प्रणामेन सुसिद्धिदोऽस्तु तमेकदन्तं शरणं व्रजामः ॥२३॥

गृत्समद उवाच—
एवं स्तुत्वा च प्रह्लाद देवाः समुनयश्च वै ।
तूष्णीम्भावं प्रपद्येव ननृतुर्हर्षसंयुताः ॥२४॥

॥ इति एकदन्तस्तोत्रं सम्पूर्णम् ॥

---

## ॥ महागणपतिस्तोत्रम् ॥

योगं योगविदां विधूतविविधव्यासङ्गशुद्धाशय
प्रादुर्भूतसुधारसप्रसृमरध्यानास्पदाध्यासिनाम् ।
आनन्दप्लवमानबोधमधुरामोदच्छटामेदुरं
तं भूमानमुपास्महे परिणतं दन्तावलास्यात्मना ॥१॥

तारश्रीपरशक्तिकामवसुधारूपानुगं यं विदु-
स्तस्मै स्तात्प्रणतिर्गणाधिपतये यो रागिणाभ्यर्थ्यते ।
आमन्त्र्य प्रथमं वरेति वरदेत्यार्तेन सर्वं जनं
स्वामिन्मे वशमानयेति सततं स्वाहादिभिः पूजितः ॥२॥

कल्लोलाञ्चलचुम्बिताम्बुदतताविक्षुद्रवाम्भोनिधौ
द्वीपे रत्नमये सुरद्रुमवनामोदैकमेदस्विनि ।
मूले कल्पतरोर्महामणिमये पीठेऽक्षराम्भोरुहे
षट्कोणाकलितत्रिकोणरचनासत्कर्णिकेऽमुं भजे ॥३॥

चक्रप्रासरसालकार्मुकगदासद्बीजपूरद्विज
व्रीह्यग्रोत्पलपाशपङ्कजकरं शुण्डाग्रजाग्रद्घटम् ।
आश्लिष्टं प्रियया सरोजकरया रत्नस्फुरद्भूषया
माणिक्यप्रतिमं महागणपतिं विश्वेशमाशास्महे ॥४॥

दानाम्भःपरिमेदुरप्रसृमरव्यालम्बिरोलम्बभृ-
त्सिन्दूरारुणगण्डमण्डलयुगव्याजात्प्रशस्तिद्वयम् ।
त्रैलोक्येष्टविधानवर्णसुभगं यः पद्मरागोपमं
धत्ते स श्रियमातनोतु सततं देवो गणानां पतिः ॥५॥

भ्राम्यन्मन्दरघूर्णनापरवशक्षीराब्धिवीचिच्छटा
सच्छायाश्चलचामरव्यतिकरश्रीगर्वसर्वंकषाः ।
दिक्कान्ताघनसारचन्दनरसासाराः श्रयन्तां मनः
स्वच्छन्दप्रसरप्रलिप्तवियतो हेरम्बदन्तत्विषः ॥६॥

मुक्ताजालकरम्बितप्रविकसन्माणिक्यपुञ्जच्छटा
कान्ताः कम्बुकदम्बचुम्बितवनाभोगप्रवालोपमाः ।
ज्योत्स्नापूरतरङ्गमन्थरतरत्सन्ध्यावयस्याश्चिरं
हेरम्बस्य जयन्ति दन्तकिरणाकीर्णाः शरीरत्विषः ॥७॥

शुण्डाग्राकलितेन हेमकलशेनावर्जितेन क्षर-
न्नानारत्नचयेन साधकजनान्सम्भावयन्कोटिशः ।
दानामोदविनोदलुब्धमधुपप्रोत्सारणाविर्भव-
कर्णान्दोलनखेलनो विजयते देवो गणग्रामणीः ॥८॥

हेरम्बं प्रणमामि यस्य पुरतः शाण्डिल्यमूले श्रिया
बिभ्रत्याम्बुरुहे समं मधुरिपुस्ते शङ्खचक्रे वहन् ।
न्यग्रोधस्य तले सहाद्रिसुतया शम्भुस्तया दक्षिणे
बिभ्राणः परशुं त्रिशूलमितया देव्या धरण्या सह ॥९॥

पश्चात्पिप्पलमाश्रितो रतिपतिर्देवस्य रत्योत्पले
बिभ्रत्या सममैक्षवं धनुरिषून्पौष्पान्वहन्पञ्च च ।
वामे चक्रगदाधरः स भगवान्क्रोडः प्रियागोस्तले
हस्ताद्यच्छुकशालिमञ्जरिकया देव्या धरण्या सह ॥१०॥

षट्कोणाश्रिषु षट्सु षड्गजमुखाः पाशाङ्कुशाभीवरा-
न्बिभ्राणाः प्रमदासखाः पृथुमहाशोणाश्मपुञ्जत्विषः ।
आमोदः पुरतः प्रमोदसुमुखौ तं चाभितो दुर्मुखः
पश्चात्पार्श्वगतोऽस्य विघ्न इति यो यो विघ्नकर्तेति च ॥११॥

आमोदादिगणेश्वरप्रियतमास्तत्रैव नित्यं स्थिताः
कान्ताश्लेषरसज्ञमन्थरदृशः सिद्धिः समृद्धिस्ततः ।
कान्तिर्या मदनावतीत्यपि तथा कल्पेषु या गीयते
सान्या यापि मदद्रवा तदपरा द्राविण्यमूः पूजिताः ॥१२॥

आश्लिष्टौ वसुधेत्यथो वसुमती ताभ्यां सितालोहितौ
वर्षन्तौ वसुपार्श्वयोर्विलसतस्तौ शङ्खपद्मौ निधी ।
अङ्गान्यन्वथ मातरश्च परितः शक्रादयोऽब्जाश्रया-
स्तद्बाह्ये कुलिशादयः परिपतत्कालानलज्योतिषः ॥१३॥

इत्थं विष्णुशिवादितत्त्वतनवे श्रीवक्रतुण्डाय हुं-
काराक्षिप्तसमस्तदैत्यपृतनाव्राताय दीप्तत्विषे ।
आनन्दैकरसावबोधलहरीविध्वस्तसर्वोर्मये
सर्वत्र प्रथमानमुग्धमहसे तस्मै परस्मै नमः ॥१४॥

सेवाहेवाकिदेवासुरनरनिकरस्फारकोटीरकोटी-
कोटिव्याटीकमानद्युमणिसममणिश्रेणिभावेणिकानाम् ।
राजन्नीराजनश्रीसुखचरणनखद्योतविद्योतमानः
श्रेयः स्थेयः स देयान्मम विमलदृशो बन्धुरं सिन्धुरास्यः ॥१५॥

एतेन प्रकटरहस्यमन्त्रमाला गर्भेण स्फुटतरसंविदा स्तवेन ।
यः स्तौति प्रचुरतरं महागणेशं तस्येयं भवति वशंवदा त्रिलोकी ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यवर्य श्रीराघवचैतन्यविरचितं
॥ महागणपतिस्तोत्रं समाप्तम् ॥

---

## ॥ गणेशपञ्चरत्नम् ॥

मुदा करात्तमोदकं सदा विमुक्तिसाधकं
कलाधरावतंसकं विलासिलोकरञ्जकम् ।
अनायकैकनायकं विनाशितेभदैत्यकं
नताशुभाशुनाशकं नमामि तं विनायकम् ॥१॥

नतेतरातिभीकरं नवोदितार्कभास्वरं
नमत्सुरारिनिर्जरं नताधिकापदुद्धरम् ।

सुरेश्वरं निधीश्वरं गजेश्वरं गणेश्वरं
महेश्वरं तमाश्रये परात्परं निरन्तरम् ॥२॥

समस्तलोकशङ्करं निरस्तदैत्यकुञ्जरं
दरेतरोदरं वरं वरेभवक्त्रमक्षरम् ।
कृपाकरं क्षमाकरं मुदाकरं यशस्करं
मनस्करं नमस्कृतां नमस्करोमि भास्वरम् ॥३॥

अकिंचनार्तिमार्जनं चिरन्तनोक्तिभाजनं
पुरारिपूर्वनन्दनं सुरारिगर्वचर्वणम् ।
प्रपञ्चनाशभीषणं धनञ्जयादिभूषणं
कपोलदानवारणं भजे पुराणवारणम् ॥४॥

नितान्तकान्तदन्तकान्तिमन्तकान्तकात्मजं
अचिन्त्यरूपमन्तहीनमन्तरायकृन्तनम् ।
हृदन्तरे निरन्तरं वसन्तमेव योगिनां
तमेकदन्तमेव तं विचिन्तयामि सन्ततम् ॥५॥

महागणेशपञ्चरत्नमादरेण योऽन्वहं
प्रजल्पति प्रभातके हृदि स्मरन्गणेश्वरम् ।
अरोगतामदोषतां सुसाहितीं सुपुत्रतां
समाहितायुरष्टभूतिमभ्युपैति सोऽचिरात् ॥६॥

इति श्रीपरमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
॥ श्रीशङ्करभगवतः कृतौ गणेशपञ्चरत्नं समाप्तम् ॥

---

## ॥ गणेशभुजङ्गम् ॥

रणत्क्षुद्रघण्टानिनादाभिरामं चलत्ताण्डवोद्दण्डवत्पद्मतालम् ।
लसत्तुन्दिलाङ्गोपरिव्यालहारं गणाधीशमीशानसूनुं तमीडे ॥१॥
ध्वनिध्वंसवीणालयोल्लासिवक्त्रं स्फुरच्छुण्डदण्डोल्लसद्बीजपूरम् ।
गलद्दर्पसौगन्ध्यलोलालिमालं गणाधीश मीशानसूनुं तमीडे ॥२॥
प्रकाशज्जपारक्तरत्नप्रसूनप्रवालप्रभातारुणज्योतिरेकम् ।
प्रलम्बोदरं वक्रतुण्डैकदन्तं गणाधीश मीशानसूनुं तमीडे ॥३॥
विचित्रस्फुरद्रत्नमालाकिरीटं किरीटोल्लसच्चन्द्ररेखाविभूषम् ।
विभूषैकभूषं भवध्वंसहेतुं गणाधीश मीशानसूनुं तमीडे ॥४॥
उदञ्चद्भुजावल्लरीदृश्यमूलोच्चलद्भ्रूलता विभ्रमभ्राजदक्षम् ।
मरुत्सुन्दरीचामरैः सेव्यमानं गणाधीश मीशानसूनुं तमीडे ॥५॥
स्फुरन्निष्ठुरालोलपिङ्गाक्षितारं कृपाकोमलोदार लीलावतारम् ।
कलाबिन्दुगं गीयते योगिवर्यैर्गणाधीश मीशानसूनुं तमीडे ॥६॥
यमेकाक्षरं निर्मलं निर्विकल्पं गुणातीतमानन्दमाकारशून्यम् ।
परं परमोङ्कार माम्नायगर्भं वदन्ति प्रगल्भं पुराणं तमीडे ॥७॥
चिदानन्दसान्द्राय शान्ताय तुभ्यं नमो विश्वकर्त्रे च हर्त्रे च तुभ्यम् ।
नमोऽनन्तलीलाय कैवल्यभासे नमो विश्वबीज प्रसीदेशसूनो ॥८॥
इमं सुस्तवं प्रातरुत्थाय भक्त्या पठे द्यस्तु मर्त्यो लभेत्सर्वकामान् ।
गणेशप्रसादेन सिद्ध्यन्ति वाचो गणेशे विभौ दुर्लभं किं प्रसन्ने॥९॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
॥ श्रीशङ्करभगवतः कृतौ गणेशभुजङ्गस्तोत्रं सम्पूर्णम् ॥

॥ श्रीः ॥

# ॥ बृहत्स्तोत्ररत्नाकरः ॥



## ॥ अथ सुब्रह्मण्याष्टोत्तरशतनामस्तोत्रम् ॥

शक्तिहस्तं विरूपाक्षं शिखिवाहं षडाननम् ।
दारुणं रिपुरोगघ्नं भावये कुक्कुटध्वजम् ॥

(इति ध्यानम्.)

स्कन्दो गुहष्षण्मुखश्च फालनेत्रसुतः प्रभुः ।
पिङ्गळः कृत्तिकासूनुः शिखिवाहो द्विषड्भुजः ॥१॥

द्विषण्णेत्रश्शक्तिधरः पिशिताशप्रभञ्जनः ।
तारकासुरसंहारी रक्षोबलविमर्दनः ॥२॥

मत्तः प्रमत्तोन्मत्तश्च सुरसैन्यसुरक्षकः ।
देवसेनापतिः प्राज्ञः कृपालुर्भक्तवत्सलः ॥३॥

उमासुतश्शक्तिधरः कुमारः क्रौञ्चदारणः ।
सेनानीरग्निजन्मा च विशाखः शङ्करात्मजः ॥४॥

शिवस्वामी गणस्वामी सर्वस्वामी सनातनः ।
अनन्तशक्तिरक्षोभ्यः पार्वतीप्रियनन्दनः ॥५॥

गङ्गासुतश्शरोद्भूत आहूतः पावकात्मजः ।
जृम्भः प्रजृम्भ उज्जृम्भः कमलासनसंस्तुतः ॥६॥
एकवर्णो द्विवर्णश्च त्रिवर्णस्सुमनोहरः ।
चतुर्वर्णः पञ्चवर्णः प्रजापतिरहर्पतिः ॥७॥
अग्निगर्भश्शमीगर्भो विश्वरेतास्सुरारिहा ।
हरिद्वर्णश्शुभकरो वटुश्च पटुवेषभृत् ॥८॥
पूषा गभस्तिर्गहनश्चन्द्रवर्णः कलाधरः ।
मायाधरो महामायी कैवल्यश्शङ्करात्मजः ॥९॥
विश्वयोनिरमेयात्मा तेजोनिधिरनामयः ।
परमेष्ठी परब्रह्मा वेदगर्भो विराट्सुतः ॥१०॥
पुळिन्दकन्याभर्ता च महासारस्वतावृतः ।
आश्रिताखिलदाताच रोगघ्नो रोगनाशनः ॥११॥
अनन्तमूर्तिरानन्दः शिखण्डिकृतकेतनः ।
डम्भः परमडम्भश्च महाडम्भो वृषाकपिः ॥१२॥
कारणोत्पत्तिदेहश्च कारणातीतविग्रहः ।
अनीश्वरोऽमृतः प्राणः प्राणायामपरायणः ॥१३॥
विरुद्धहन्ता वीरघ्नः रक्तश्यामगळोऽपिच ।
सुब्रह्मण्यो गुहः प्रीतः ब्राह्मण्यो ब्राह्मणप्रियः ॥१४॥
वंशवृद्धिकरो वेदवेद्योऽक्षयफलप्रदः ॥

॥ सुब्रह्मण्याष्टोत्तरशतनामस्तोत्रं सम्पूर्णम् ॥

## ॥ अथ सुब्रह्मण्यसहस्रनामस्तोत्रम् ॥

ऋषयः—

सर्वशास्त्रार्थतत्वज्ञ सर्वलोकोपकारक ।
वयं चातिथयः प्राप्ता आतिथेयोऽसि सुव्रत ॥१॥
ज्ञानदानेन संसारसागरात्तारयस्व नः ।
कलौ कलुषचित्ता ये नराः पापरतास्सदा ॥२॥
केन स्तोत्रेण मुच्यन्ते सर्वपातकबन्धनैः ।
इष्टसिद्धिकरं पुण्यं दुःखदारिद्र्यनाशनम् ॥३॥
सर्वरोगहरं स्तोत्रं सूत नो वक्तुमर्हसि ।

सूतः—

शृणुध्वं ऋषयस्सर्वे नैमिशारण्यवासिनः ॥४॥
तत्वज्ञास्तपसा निष्ठास्सर्वशास्त्रविशारदाः ।
स्वयम्भुवा पुरा प्रोक्तं नारदाय महात्मने ॥५॥
तदहं सम्प्रवक्ष्यामि श्रोतुं कौतूहलं यदि ।

ऋषयः—

किमाह भगवान्ब्रह्मा नारदाय महात्मने ॥६॥
सूतपुत्र महाभाग वक्तुमर्हसि साम्प्रतम् ।

सूतः—

दिव्यसिंहासनासीनं सर्वदेवैरभिष्टुतम् ॥७॥
साष्टाङ्गं प्रणिपत्यैनं ब्रह्माणं भुवनेश्वरम् ।
नारदः परिपप्रच्छ कृताञ्जलिरुपस्थितः ॥८॥

नारदः—

लोकनाथ सुरश्रेष्ठ सर्वज्ञ करुणाकर ।
षण्मुखस्य परं स्तोत्रं पावनं पापनाशनम् ॥९॥

हे धातः पुत्रवात्सल्यात्तद्वद प्रणताय मे ।
उपदिश्य तु मामव रक्ष रक्ष कृपानिधे ॥१०॥

ब्रह्मा—

शृणु वक्ष्यामि देवर्षे स्तवराजमिदं परम् ।
मातृकामालिकायुक्तं ज्ञानमोक्षसुखप्रदम् ॥११॥

सहस्राणि च नामानि षण्मुखस्य महात्मनः ।
यानि नामानि दिव्यानि दुःखरोगहराणि च ॥१२॥

जपमात्रेण सिध्यन्ति मनसा चिन्तितान्यपि ।
इहामुत्र परं भोगं लभते नात्र संशयः ॥१३॥

इदं स्तोत्रं परं पुण्यं कोटियज्ञफलप्रदम् ।
सन्देहो नात्र कर्तव्यः शृणु मे निश्चितं वचः ॥१४॥

ओं अस्य श्रीसुब्रह्मण्यसहस्रनामस्तोत्रमालामहामन्त्रस्य, ब्रह्मा ऋषिः, अनुष्टुप्छन्दः, सुब्रह्मण्यो देवता । शरजन्मा क्षय इति बीजम् । शक्तिधरः क्षयः कार्तिकेय इति शक्तिः । क्रौञ्चधर इतिकीलकम् । शिखिवाहन इति कवचम् । षण्मुखाय इति ध्यानम् । श्रीसुब्रह्मण्य-प्रसादसिद्ध्यर्थे जपे विनियोगः । ओं शं ओंकारस्वरूपाय ओजो-धराय ओजस्विने नमस्संहृताय इष्टचित्तात्मने भास्वररूपाय अङ्गुष्ठा-भ्यां नमः । रं षट्कोणमध्यनिलयाय षट्किरीटधराय श्रीमते षडा-

धाराय तर्जनीभ्यां नमः । हं षण्मुखाय शरजन्मने शुभलक्षणाय शिखिवाहनाय मध्यमाभ्यां नमः । णं कृशानुसम्भवाय कवचिने कुक्कुटध्वजाय अनामिकाभ्यां नमः । भं कन्दर्पकोटिदीप्यमानाय द्विषड्बाहवे द्वादशाक्षाय कनिष्ठिकाभ्यां नमः । वं खेटधराय खड्गिने शक्तिहस्ताय करतलकरपृष्ठाभ्यां नमः । ओं शं ओंकार-स्वरूपाय ओजोधराय ओजस्विने नमस्संहृताय इष्टचित्तात्मने भास्वर-रूपाय हृदयाय नमः । रं षट्कोणमध्यनिलयाय षट्किरीटधराय श्रीमते षडाधाराय शिरसे स्वाहा । हं षण्मुखाय शरजन्मने शुभ-लक्षणाय शिखिवाहनाय शिखायै वौषट् । णं कृशानुसम्भवाय कव-चिने कुक्कुटध्वजाय कवचाय हुम् । भं कन्दर्पकोटिदीप्यमानाय द्विषड्बाहवे द्वादशाक्षाय नेत्रत्रयाय वौषट् । वं खेटधराय खड्गिने शक्तिहस्ताय अस्त्राय फट् । ओं भूर्भुवस्सुवरोमिति दिग्बन्धः । ध्यानम्.

ध्याये षण्मुखमिन्दुकोटिसदृशं रत्नप्रभाशोभितं
बालार्कद्युतिषट्किरीटविलसत्केयूरहारान्वितम् ।
कर्णालम्बितकुण्डलप्रविलसद्गण्डस्थलाशोभितं
किञ्चित्कङ्कणकिङ्किणीरवयुतं शृङ्गाररसारोदयम् ॥१॥

ध्यायेदीप्सितसिद्धिदं शिवसुतं श्रीद्वादशाक्षं गुहं
खेटं कुक्कुटमङ्कुशं च वरदं पाशं धनुश्चक्रकम् ।
वज्रं शक्तिमसिं च शूलमभयं दोर्भिधृतं षण्मुखं
ध्यायेच्चित्रमयूरवाहनशुभं चित्राम्बरालङ्कृतम् ॥२॥

(इति ध्यानम्.)

॥ सहस्रनामप्रारम्भः ॥

ओं अचिन्त्यशक्तिरनघस्त्वक्षोभ्यो ह्यपराजितः ।
अनाथवत्सलोऽमोघस्त्वशोकोऽप्यजरोऽभयः ॥१॥
अत्युदारोऽप्यघहरोऽप्यग्रगण्योऽद्रिजासुतः ।
अनन्तमहिमाऽपारोऽनन्तसौख्यप्रदोऽव्ययः ॥२॥
अनन्तमोक्षदोऽनादिरप्रमेयोऽक्षरोऽच्युतः ।
अकल्मषोऽभिरामोऽग्रधुर्यश्चामितविक्रमः ॥३॥
अतुलस्त्वमृतो घोरस्त्वनन्तोऽनन्तविक्रमः ।
अनाथनाथो ह्यमलो ह्यप्रमत्तोऽमरप्रभुः ॥४॥
अरिन्दमोऽखिलाधारस्त्वणिमादिगुणाग्रणीः ।
अचञ्चलोऽमरस्तुत्यो ह्यकळङ्कोऽमिताशनः ॥५॥
अग्निभूरनवद्याङ्गो ह्यद्भुतोऽभीष्टदायकः ।
अतीन्द्रियोह्यमेयात्मा ह्यदृश्योऽव्यक्तलक्षणः ॥६॥
आपद्विनाशकस्त्वार्यश्चाढ्यस्त्वागमसंस्तुतः ।
आर्तसंरक्षणस्त्वाद्यस्त्वानन्दस्त्वार्यसेवितः ॥७॥
आश्रितेष्टार्थवरदो ह्यानन्द्यार्तफलप्रदः ।
आश्चर्यरूपस्त्वानन्द आपन्नार्तिविनाशनः ॥८॥
इभवक्त्रानुजस्त्विष्टस्त्विभासुरहरात्मजः ।
इतिहासश्रुतिस्तुत्य इन्द्रभोगफलप्रदः ॥९॥
इष्टापूर्तफलप्राप्तिरिष्टेष्टवरदायकः ।
इहामुत्रेष्टफलदस्त्विष्टदस्त्विन्द्रवन्दितः ॥१०॥

ईडनीयस्त्वीशपुत्र ईप्सितार्थप्रदायकः ।
ईतिभीतिहरश्चेड्य ईषणात्रयवर्जितः ॥११॥
उदारकीर्तिरुद्योगी चोत्कृष्टोरुपराक्रमः ।
उत्कृष्टशक्तिरुत्साह उदारश्चोत्सवप्रियः ॥१२॥
उज्जृम्भश्चोद्भवश्चोग्रश्चोदग्रश्चोग्रलोचनः ।
उन्मत्तश्चोष्णशमन उद्वेगघ्नोरगेश्वरः ॥१३॥
उरुप्रभावश्चोदीर्णश्चोमासूनुरुदारधीः ।
ऊर्ध्वरेतस्सुतस्तूर्ध्वगतिदस्तूर्विपालकः ॥१४॥
ऊर्जितस्तूर्ध्वगस्तूर्ध्व ऊर्ध्वलोकैकनायकः ।
ऊर्जस्वानूर्जितोदारस्तूर्जितोर्जितशासनः ॥१५॥
ऋषिदेवगणस्तुत्यो ऋणत्रयविमोचनः ।
ऋजुरूपो ऋजुकरो ऋजुमार्गप्रदर्शकः ॥१६॥
ऋतम्भरो ह्यृजुप्रीतो ऋषभो ह्यृद्धिदो ऋतः ।
लृलुतोद्धारको लृतभवपाशप्रभञ्जनः ॥१७॥
एणाङ्कधरसत्पुत्रस्त्वेक एनौघनाशनः ।
ऐश्वर्यदश्चैन्द्रभोगी चैतिहश्चैन्द्रवन्दितः ॥१८॥
ओजस्वी चोषधीस्थानश्चोजोदश्चोदनप्रियः ।
औदासीनिस्त्वौपमेय औग्रस्त्वौन्नत्यदायकः ॥१९॥
औदार्यस्त्वौषधाकारस्त्वौषस्त्वौषधधारकः ।
अंशुमाल्यंशुमालाढ्य अम्बिकातनयोऽन्नदः ॥२०॥

अन्धकारिसुतोऽन्धत्वहारीत्वम्बुजलोचनः ।
अस्तमायोऽमराधीशो ह्यस्पष्टोऽस्तोकपुण्यदः ॥२१॥
अस्तामित्रोऽस्तरूपश्चास्खलत्सुगतिदायकः ।
कार्तिकेयः कामरूपः कुमारः क्रौञ्चदारणः ॥२२॥
कामदः कारणः काम्यः कमनीयः कृपाकरः ।
काञ्चनाभः कान्तियुक्तः कामी कामप्रदः कविः ॥२३॥
कीर्तिकृत् कुक्कुटधरः कूटस्थः कुवलेक्षणः ।
कुङ्कुमाङ्गक्लमहरः कुशलः कुक्कुटध्वजः ॥२४॥
कृशानुसम्भवः क्रूरः क्रूरघ्नः कलितापहृत् ।
कामरूपः कल्पतरुः कान्तः कामितदायकः ॥२५॥
कल्याणकृत् क्लेशनाशः कृपालुः करुणाकरः ।
कलुषघ्नः क्रियाशक्तिः कठोरः कवची कृतिः ॥२६॥
कोमलाङ्गः कुशप्रीतः कुत्सितघ्नः कलाधरः ।
ख्यातः खेटधरः खड्गी खट्वाङ्गी खलनिग्रहः ॥२७॥
ख्यातिप्रदः खेचरेशः ख्यातेहः खेचरस्तुतः ।
खरतापहरः खस्थः खेचरः खेचराश्रयः ॥२८॥
खण्डेन्दुमौलितनयः खेलाखेचरपालकः ।
खस्थलः खण्डितार्कश्च खेचरीजनपूजितः ॥२९॥
गाङ्गेयो गिरिजापुत्रो गणनाथानुजो गुहः ।
गोप्ता गीर्वाणसंसेव्यो गुणातीतो गुहाश्रयः ॥३०॥

गतिप्रदो गुणनिधिर्गम्भीरो गिरिजात्मजः ।
गूढरूपो गदहरो गुणाधीशो गुणाग्रणीः ॥३१॥
गोधरो गहनो गुप्तो गर्वघ्नो गुणवर्धनः ।
गुह्यो गुणज्ञो गीतज्ञो गतातङ्को गुणाश्रयः ॥३२॥
गद्यपद्यप्रियो गुण्यो गोस्तुतो गगनेचरः ।
गणनीयचरित्रश्च गतक्लेशो गुणार्णवः ॥३३॥
घूर्णिताक्षो घृणानिधिः घनगम्भीरघोषणः ।
घण्टानादप्रियो घोराघौघनाशो घनप्रियः ॥३४॥
घनानन्दो घर्महन्ता घृणिवान् घृष्टिपातकः ।
घृणी घृणाकरो घोषो घोरदैत्यप्रहारकः ॥३५॥
घटितैश्वर्यसन्दोहो घनार्थी घनसंक्रमः ।
चित्रकृत् चित्रवर्णश्च चञ्चलश्चपलद्युतिः ॥३६॥
चिन्मयश्चित्स्वरूपश्च चिदानन्दश्चिरंतनः ।
चित्रचेलश्चित्ररथश्चिन्तनीयश्चमत्कृतः ॥३७॥
चोरघ्नश्चतुरश्चारुचामीकरविभूषणः ।
चन्द्रार्ककोटिसदृशश्चन्द्रमौलितनूभवः ॥३८॥
छादिताङ्गश्छद्महन्ता छेदिताखिलपातकः ।
छेदीकृततमःक्लेशः छत्रीकृतमहायशाः ॥३९॥
छादिताशेषसन्तापश्चरितामृतसागरः ।
छन्नत्रैगुण्यरूपश्च छातेहश्छिन्नसंशयः ॥४०॥

छन्दोमयश्छन्नगामी छिन्नपाशश्छविच्छदः ।
जगद्धितो जगत्पूज्यो जगज्ज्येष्ठो जगन्मयः ॥४१॥

जनको जाह्नवीसूनुर्जितामित्रो जगद्गुरुः ।
जयी जितेन्द्रियो जैत्रो जरामरणवर्जितः ॥४२॥

ज्योतिर्मयो जगन्नाथो जगज्जीवो जनाश्रयः ।
जगत्सेव्यो जगत्कर्ता जगत्साक्षी जगत्प्रियः ॥४३॥

जम्भारिवन्द्यो जयदो जगज्जनमनोहरः ।
जगदानन्दजनको जनजाड्यापहारकः ॥४४॥

जपाकुसुमसङ्काशो जनलोचनशोभनः ।
जनेश्वरो जितक्रोधो जनजन्मनिबर्हणः ॥४५॥

जयदो जन्तुतापघ्नो जितदैत्यमहाव्रजः ।
जितमायो जितक्रोधो जितजम्भो जनप्रियः ॥४६॥

झंझानिलमहावेगो झरिताशेषपातकः ।
झर्झरीकृतदैत्यौघो झल्लरीवाद्यसंप्रियः ॥४७॥

ज्ञानमूर्तिर्ज्ञानगम्यो ज्ञानी ज्ञानमहानिधिः ।
टङ्कारनृत्यविभवष्टङ्कवज्रध्वजाङ्कितः ॥४८॥

टङ्किताखिललोकश्च टङ्कितैनस्तमोरविः ।
डम्बरप्रभवो डम्भो डमड्डमरुकप्रियः ॥४९॥

डमरोत्कटसन्नादो डमरोत्कटजाण्डजः ।
ढक्कानादप्रीतिकरो ढुलितासुरसङ्कुलः ॥ ॥५०॥

ढाकितामरसन्दोहो ढुण्डीविघ्नेश्वरानुजः ।
तत्त्वज्ञस्तत्त्वगस्तीव्रस्तपोरूपस्तपोमयः ॥५१॥

त्रयीमयस्त्रिकालज्ञस्त्रिमूर्तिस्त्रिगुणात्मकः ।
त्रिदशेशस्तारकारिस्तापघ्नस्तापसप्रियः ॥५२॥

तुष्टिदस्तुष्टिकृत्तीक्ष्णस्तपोरूपस्त्रिकालवित् ।
स्तोता स्तव्यः स्तवप्रीतस्स्तुतस्तोत्रस्स्तुतिप्रियः ॥५३॥

स्थितिस्थायी स्थापकश्च स्थूलसूक्ष्मप्रदर्शकः ।
स्थविष्ठः स्थविरः स्थूलः स्थानदः स्थैर्यदः स्थिरः ॥५४॥

दान्तो दयापरो दाता दुरितघ्नो दुरासदः ।
दर्शनीयो दयासारो देवदेवो दयानिधिः ॥५५॥

दुराधर्षो दुर्विगाह्यो दक्षो दर्पणशोभितः ।
दुर्धरो दानशीलश्च द्वादशाक्षो द्विषड्भुजः ॥५६॥

द्विषट्कर्णो द्विषड्बाहुर्दीनसन्तापनाशनः ।
दन्दशूकेश्वरो देवो दिव्यो दिव्याकृतिर्दमः ॥५७॥

दीर्घवृत्तो दीर्घबाहुर्दीर्घदृष्टिर्दिवस्पतिः ।
दण्डो दमयिता दर्पो देवसिंहो दृढव्रतः ॥५८॥

दुर्लभो दुर्गमो दीप्तो दुष्प्रेक्ष्यो दिव्यमण्डनः ।
दुरोदरघ्नो दुःखघ्नो दुरितघ्नो दिशांपतिः ॥५९॥

दुर्जयो देवसेनेशो दुर्ज्ञेयो दुरतिक्रमः ।
दम्भो दृप्तो देवऋषिर्दैवज्ञो दैवचिन्तकः ॥६०॥

धुरन्धरो धर्मधरो धनदो धृतिवर्धनः ।
धर्मेशो धर्मशास्त्रज्ञो धन्वी धर्मपरायणः ॥६१॥

धनाध्यक्षो धनपतिर्धृतिमान् धृतकिल्बिषः ।
धर्महेतुर्धर्मशूरो धर्मकृद्धर्मविद् ध्रुवः ॥६२॥

धाता धीमान् धर्मचारी धन्यो धुर्यो धृतव्रतः ।
नित्योत्सवो नित्यतृप्तो निर्लेपो निश्चलात्मकः ॥६३॥

निरवद्यो निराधारो निष्कलङ्को निरञ्जनः ।
निर्ममो निरहङ्कारो निर्मोहो निरुपद्रवः ॥६४॥

नित्यानन्दो निरातङ्को निष्प्रपञ्चो निरामयः ।
निरवद्यो निरीहश्च निर्द्वन्द्वो निर्मलात्मकः ॥६५॥

नित्यानन्दो निर्जरेशो निस्सङ्गो निगमस्तुतः ।
निष्कलङ्को निरालम्बो निष्प्रत्यूहो निजोद्भवः ॥६६॥

नित्यो नियतकल्याणो निर्विकल्पो निराश्रयः ।
नेता निधिर्नैकरूपो निराकारो नदीसुतः ॥६७॥

पुलिन्दकन्यारमणः पुरजित्परमप्रियः ।
प्रत्यक्षमूर्तिः प्रत्यक्षः परेशः पूर्णपुण्यदः ॥६८॥

पुण्याकरः पुण्यरूपः पुण्यः पुण्यपरायणः ।
पुण्योदयः परञ्ज्योतिः पुण्यकृत्पुण्यवर्धनः ॥६९॥

परानन्दः परतरः पुण्यकीर्तिः पुरातनः ।
प्रसन्नरूपः पुण्येशः पन्नगः पापनाशनः ॥७०॥

प्रणतार्तिहरः पूर्णः पार्वतीनन्दनः प्रभुः ।
पूतात्मा पुरुषः प्राणः प्रभवः पुरुषोत्तमः ॥७१॥

प्रसन्नः परमस्पष्टः परः परिवृढः परः ।
परमात्मा परब्रह्म परार्थः प्रियदर्शनः ॥७२॥

पवित्रः पुष्टिदः पूर्तिः पिङ्गळः पुष्टिवर्धनः ।
पापहारी पाशधरः प्रमत्तासुरशिक्षकः ॥७३॥

पावनः पावकः पूज्यः पूर्णानन्दः परात्परः ।
पुष्कळः प्रवरः पूर्वः पितृभक्तः पुरोगमः ॥७४॥

प्राणदः प्राणजनकः प्रतिष्ठः पावकोद्भवः ।
परब्रह्मस्वरूपश्च परमैश्वर्यकारणः ॥७५॥

परार्थदः पुष्टिकरः प्रकाशात्मा प्रतापवान् ।
प्रज्ञापरः प्रकृष्टार्थः पृथुः पृथुपराक्रमः ॥७६॥

फणीश्वरः फणिवरः फणामणिविभूषणः ।
फलदः फलहस्तश्च फुल्लाम्बुजविलोचनः ॥७७॥

पुटच्छमितपापौघः फणिराजविभूषणः ।
बाहुलेयो ब्रह्मरूपो बलिष्ठो बलवान् बली ॥७८॥

ब्रह्मेशविष्णुरूपश्च बुद्धो बुद्धिमतां वरः ।
बालरूपो ब्रह्मगर्भो ब्रह्मचारी बुधप्रियः ॥७९॥

बहुश्रुतो बहुमतिर्ब्रह्मण्यो ब्राह्मणप्रियः ।
बलप्रमथनो ब्रह्मा बहुरूपो बहुप्रदः ॥८०॥

बृहद्भानुतनूभूतो बृहत्सेनो बिलेशयः ।
बहुबाहुर्बलश्रीमान् बहुदैत्यविनाशकः ॥८१॥
बिलद्वारान्तरालस्थो बृहच्छक्तिधनुर्धरः ।
बालार्कद्युतिमान् बालो बृहद्वक्षो बृहत्तनुः ॥८२॥
भव्यो भोगीश्वरो भाव्यो भवनाशो भवप्रियः ।
भक्तिगम्यो भयहरो भावज्ञो भक्तसुप्रियः ॥८३॥
भुक्तिमुक्तिप्रदो भोगी भगवान् भाग्यवर्धनः ।
भ्राजिष्णुर्भावनो भर्ता भीमो भीमपराक्रमः ॥८४॥
भूतिदो भूतिकृद्भोक्ता भूतात्मा भुवनेश्वरः ।
भावको भाग्यकृद्भेषो भावकेष्टो भवोद्भवः ॥८५॥
भवतापप्रशमनो भोगवान् भूतभावनः ।
भोज्यप्रदो भ्रान्तिनाशो भानुमान् भुवनाश्रयः ॥८६॥
भूरिभोगप्रदो भद्रो भजनीयो भिषग्वरः ।
महासेनो महोदारो महाशक्तिर्महाद्युतिः ॥८७॥
महाबुद्धिर्महावीर्यो महोत्साहो महाबलः ।
महाभोगी महामायी मेधावी मेखली महान् ॥८८॥
मुनिस्तुतो महामान्यो महानन्दो महायशाः ।
महोर्जितो माननिधिर्मनोरथफलप्रदः ॥८९॥
महोदयो महापुण्यो महाबलपराक्रमः ।
मानदो मतिदो माली मुक्तामालाविभूषणः ॥९०॥

मनोहरो महामुख्यो महर्धिर्मूर्तिमान्मुनिः ।
महोत्तमो महापायो मोक्षदो मङ्गलप्रदः ॥९१॥

मुदाकरो मुक्तिदाता महाभोगो महोरगः ।
यशस्करो योगयोनिर्योगिष्ठो यमिनां वरः ॥९२॥

यशस्वी योगपुरुषो योग्यो योगनिधिर्यमी ।
यतिसेव्यो योगयुक्तो योगविद्योगसिद्धिदः ॥९३॥

यन्त्रो यन्त्री च यन्त्रज्ञो यन्त्रवान् यन्त्रवाहकः ।
यातनारहितो योगी योगीशो योगिनां वरः ॥९४॥

रमणीयो रम्यरूपो रसज्ञो रसभावकः ।
रञ्जनो रञ्जितो रागी रुचिरो रुद्रसम्भवः ॥९५॥

रणप्रियो रणोदारो रागद्वेषविनाशनः ।
रत्नार्चीरुचिरो रम्यो रूपलावण्यविग्रहः ॥९६॥

रत्नाङ्गदधरो रत्नभूषणो रमणीयकः ।
रुचिकृद्रोचमानश्च रञ्जितो रोगनाशनः ॥९७॥

राजीवाक्षो राजराजो रत्नमाल्यानुलेपनः ।
ऋग्यजुस्सामसंस्तुत्यो रजस्सत्त्वगुणान्वितः ॥९८॥

रजनीशकलारम्यो रत्नकुण्डलमण्डितः ।
रत्नसन्मौलिशोभाढ्यो रणन्मञ्जीरभूषणः ॥९९॥

लोकैकनाथो लोकेशो ललितो लोभनाशकः ।
लोकरक्षो लोकशिक्षो लोकलोचनरञ्जितः ॥१००॥

लोकबन्धुर्लोकधाता लोकत्रयसमाहितः ।
लोकचूडामणिर्लोकवन्द्यो लावण्यविग्रहः ॥१०१॥
लोकाध्यक्षस्तु लीलावान् लोकोत्तरगुणान्वितः ।
लोकबन्धुर्लोकनाथो लोकत्रयमहाहितः ॥१०२॥
वरिष्ठो वरदो वैद्यो विशिष्टो विक्रमो विभुः ।
विबुधाग्रचरो वश्यो विकल्पपरिवर्जितः ॥१०३॥
विपाशो विगतातङ्को विचित्राङ्गो विरोचनः ।
विद्याधरो विशुद्धात्मा वेदाङ्गो विबुधप्रियः ॥१०४॥
वचस्करो व्यापकश्च विज्ञानी विनयान्वितः ।
विद्वत्तमो विरोधिघ्नो वीरो विगतरागवान् ॥१०५॥
वीतभावो विनीतात्मा वेदगर्भो वसुप्रदः ।
विश्वदीप्तिर्विशालाक्षो विजितात्मा विभावनः ॥१०६॥
वेदवेद्यो विधेयात्मा वीतदोषश्च वेदवित् ।
विश्वकर्मा वीतभयो वागीशो वासवार्चितः ॥१०७॥
वीरध्वंसो विश्वमूर्तिर्विश्वरूपो वराननः ।
विशाखो विमलो वाग्मी विद्वान् वेदधरो वटुः ॥१०८॥
वीरचूडामणिर्वीरो विद्येशो विबुधाश्रयः ।
विजयी विनयी वेत्ता वरीयान् वीरजो वसुः ॥१०९॥
वीरघ्नो विज्वरो वेद्यो वेगवान् वीर्यवान् वशी ।
वरशीलो वरगुणो विशोको वज्रधारकः ॥११०॥

शरजन्मा शक्तिधरश्शत्रुघ्नश्शिखिवाहनः ।
श्रीमान् शिष्टश्शुचिश्शुद्धश्शाश्वतः श्रुतिसागरः ॥१११॥
शरण्यश्शुभदश्शर्मा शिष्टेष्टश्शुभलक्षणः ।
शान्तश्शूलधरः श्रेष्ठश्शुद्धात्मा शङ्करप्रियः ॥११२॥
शितिकण्ठात्मजश्शूरश्शान्तिदश्शोकनाशनः ।
षण्मातुरष्षण्मुखश्च षड्गुणैश्वर्यसंयुतः ॥११३॥
षट्चक्रस्थष्षडूर्मिघ्नष्षडङ्गश्रुतिपारगः ।
षड्भावरहितष्षट्कष्षट्छास्त्रस्मृतिपारगः ॥११४॥
षड्वर्गदाता षड्ग्रीवः षडरिघ्नः षडाश्रयः ।
षट्किरीटधरश्श्रीमान् षडाधारश्च षट्क्रमः ॥११५॥
षट्कोणमध्यनिलयष्षण्डत्वपरिहारकः ।
सेनानीस्सुभगस्स्कन्दस्सुरानन्दस्सतां गतिः ॥११६॥
सुब्रह्मण्यसुराध्यक्षस्सर्वज्ञस्सर्वदस्सुखी ।
सुलभस्सिद्धिदस्सौम्यस्सिद्धेशस्सिद्धिसाधनः ॥११७॥
सिद्धार्थस्सिद्धसङ्कल्पस्सिद्धस्साधुस्सुरेश्वरः ।
सुभुजस्सर्वदृक्साक्षी सुप्रसादस्सनातनः ॥११८॥
सुधापतिस्स्वयञ्ज्योतिस्स्वयम्भूस्सर्वतोमुखः ।
समर्थस्सत्कृतिस्सूक्ष्मस्सुघोषस्सुखदस्सुकृत् ॥११९॥
सुप्रसन्नस्सुरश्रेष्ठस्सुशीलस्सत्त्वसायकः ।
संभाव्यस्सुमनस्सेव्यस्सकलागमपारगः ॥१२०॥

सुव्यक्तस्सच्चिदानन्दस्सुवीरस्सुजनाश्रयः ।
सर्वलक्षणसम्पन्नस्सत्यधर्मपरायणः ॥१२१॥
सर्वदेवमयस्सत्यस्सदामृष्टान्नदायकः ।
सुधापी सुमनास्सत्यस्सर्वविघ्नविनाशनः ॥१२२॥
सर्वदुःखप्रशमनस्सुकुमारस्सुलोचनः ।
सुग्रीवस्सुधृतिस्सारस्सुराराध्यस्सुविक्रमः ॥१२३॥
सुरारिघ्नस्स्वर्णवर्णस्सर्पराजस्सदाशुचिः ।
सप्तार्चिर्भूस्सुरवरस्सर्वायुधविशारदः ॥१२४॥
हस्तिचर्माम्बरसुतो हस्तिवाहनसेवितः ।
हस्तचित्रायुधधरो हृताघो हसिताननः ॥१२५॥
हेमभूषो हरिद्वर्णो हृष्टदो हृष्टिवर्धनः ।
हेमाद्रिभिद्धंसरूपो हुङ्कारो हतकिल्बिषः ॥१२६॥
हेमाद्रिजातातनुजो हरिकेशो हिरण्मयः ।
हृद्यो हृष्टो हरिसखो हंसो हंसगतिर्हविः ॥१२७॥
हिरण्यवर्णो हितकृत् हर्षदो हेमभूषणः ।
हरप्रियो हितकरो हतपापो हरोद्भवः ॥१२८॥
क्षेमदः क्षेमकृत् क्षेम्यः क्षेत्रज्ञः क्षामवर्जितः ।
क्षेत्रपालः क्षमाधारः क्षेमक्षेत्रः क्षमाकरः ॥१२९॥
क्षुद्रघ्नः क्षान्तिदः क्षेमः क्षितिभूषः क्षमाश्रयः ।
क्षालिताघः क्षितिधरः क्षीणसंरक्षणक्षमः ॥१३०॥

क्षणभङ्गुरसम्बद्धघनशोभी कपर्दकः ।
क्षितिभृन्नाथतनयामुखपङ्कजभास्करः ॥१३१॥
इति नाम्नां सहस्राणि षण्मुखस्य च नारद ।
यः पठेच्छृणुयाद्वापि भक्तियुक्तेन चेतसा ॥१३२॥
स सद्यो मुच्यते पापैर्मनोवाक्कायसम्भवैः ।
आयुर्वृद्धिकरं पुंसां स्थैर्यवीर्यविवर्धनम् ॥१३३॥
वाक्येनैकेन वक्ष्यामि वाञ्छितार्थं प्रयच्छति ।
तस्मात् सर्वात्मना ब्रह्मन् नियमेन जपेत्सुधीः ॥१३४॥

इति श्रीस्कन्दपुराणे ईश्वरप्रोक्ते ब्रह्मनारदसंवादे
॥ षण्मुखसहस्रनामस्तोत्रं संपूर्णम् ॥

---

## ॥ अथ सुब्रह्मण्याष्टकम् ॥

हे स्वामिनाथ करुणाकर दीनबन्धो श्रीपार्वतीशमुखपङ्कजपद्मबन्धो ।
श्रीशादिदेवगणपूजितपादपद्म वल्लीसनाथ मम देहि करावलम्भम् ॥
देवाधिदेवसुत देवगणाधिनाथ देवेन्द्रवन्द्यमृदुपङ्कजमञ्जुपाद ।
देवर्षिनारदमुनीन्द्रसुगीतकीर्ते वल्लीसनाथ मम देहि करावलम्बम् ॥
नित्यान्नदाननिरताखिलरोगहारिन् भाग्यप्रदानपरिपूरितभक्तकाम ।
श्रुत्यागमप्रणववाच्यनिजस्वरूप वल्लीसनाथ मम देहि करावलम्बम् ॥
क्रौञ्चासुरेन्द्रपरिखण्डन शक्तिशूलचापादिशस्त्रपरिमण्डितदिव्यपाणे ।
श्रीकुण्डलीशधरतुण्डशिखीन्द्रवाह वल्लीसनाथ मम देहि करावलम्बम् ॥
देवाधिदेवरथमण्डलमध्यवेऽद्य देवेन्द्रपीठनकरं दृढचापहस्तम् ।
निहत्य सुरकोटिभिरीड्यमान वल्लीसनाथ मम देहि करावलम्बम् ॥

हारादिरत्नमणियुक्तकिरीटहार केयूरकुण्डललसत्कवचाभिरामम् ।
हे वीर तारकजयामरबृन्दवन्द्य वल्लीसनाथ मम देहि करावलम्बम् ॥
पञ्चाक्षरादिमनुमन्त्रितगाङ्गतोयैः पञ्चामृतैः प्रमुदितेन्द्रमुखैर्मुनीन्द्रैः ।
पट्टाभिषिक्तहरियुक्त परासनाथ वल्लीसनाथ मम देहि करावलम्बम् ॥
श्रीकार्तिकेय करुणामृतपूर्णदृष्ट्या कामादिरोगकलुषीकृतदुष्टचित्तम् ।
सिक्त्वा तु मामव कलाधरकान्तिकान्त्या वल्लीसनाथ मम देहि करा-[वलम्बम्॥
सुब्रह्मण्याष्टकं पुण्यं ये पठन्ति द्विजोत्तमाः ।
ते सर्वे मुक्तिमायान्ति सुब्रह्मण्यप्रसादतः ॥
सुब्रह्मण्याष्टकमिदं प्रातरुत्थाय यः पठेत् ।
कोटिजन्मकृतं पापं तत्क्षणादेव नश्यति ॥

॥ सुब्रह्मण्याष्टकं संपूर्णम् ॥

---

## ॥ सुब्रह्मण्यभुजङ्गप्रयातम् ॥

भजेऽहं कुमारं भवानीकुमारं गळोल्लासिहारं नमस्कृद्विहारम् ।
रिपुस्तोमसारं नृसिंहावतारं सदा निर्विकारं गुहं निर्विचारम् ॥१॥
नमामीशपुत्रं जपाशोणगात्रं सुरारातिशत्रुं रवीन्द्वग्निनेत्रम् ।
महाबर्हिपत्रं शिवास्याब्जमित्रं प्रभासत्कळत्रं पुराणं पवित्रम् ॥२॥
अनेकार्ककोटिप्रभावज्वलन्तं मनोहारिमाणिक्यभूषोज्ज्वलं तम् ।
श्रितानामभीष्टं सुशान्तं नितान्तं भजे षण्मुखं तं शरच्चन्द्रकान्तम्
कृपावारिकल्लोलभास्वत्कटाक्षं विराजन्मनोहारिशोणाम्बुजाक्षम् ।
प्रयोगप्रदानप्रवाहैकदक्षं भजे कान्तिकान्ताम्बरस्तोमरक्षम् ॥४॥

सुकस्तूरिकाबिन्दुभास्वल्ललाटं दयापूर्णचित्तं महादेवपुत्रम् ।
रवींदूल्लसद्रत्नराजत्किरीटं भजे क्रीडिताकाशगङ्गामुकूटम् ॥५॥

मुकुन्दप्रसूनावलीशोभितान्तं शरत्पूर्णचन्द्रस्य षट्कान्तिकान्तम् ।
शिरीषप्रसूनाभिरामं भवन्तं भजे देवसेनापतिं वल्लभं तम् ॥६॥

सुलावण्यसत्सूर्यकोटिप्रकाशं प्रभुं तारकारिं द्विषड्बाहुमीशम् ।
निजार्कप्रभादीप्यमानाखिलाशं भजे पार्वतीप्राणपुत्रं सुकेशम् ॥७॥

भजं सर्वलोकप्रियं लोकनाथं गुहं शूरपद्मादिदम्भोळिधारम् ।
सुबाहुं सुनासापुटं सच्चरित्रं भजे कार्तिकेयं सदा बाहुलेयम् ॥८॥

शरारण्यसम्भूतमिन्द्रादिवन्द्यं द्विषड्बाहुसङ्ख्यायुधश्रेणिरम्यम् ।
मरुत्सारथिं कुक्कुटेशं सुकेतुं भजे योगिहृत्पद्मव्याधिवासम् ॥९॥

वेरींचीन्द्र वल्लीशच्चीदेवेशमुख्य प्रशस्तामरस्तोमसंस्तूयमान ।
देश त्वं दयाळो श्रियं निश्चलां मे विना त्वां गतिः का प्रभो मे प्रसीद ॥

पदाम्भोजसेवासमायातबृन्दारकश्रेणिकोटीरभास्वल्ललाटम् ।
कळत्रोल्लसत्पार्श्वयुग्मं वरेण्यं भजे देवमाद्यं त्वहीनप्रभावम् ॥११॥

भवाम्भोधिमध्ये तरङ्गेपतन्तं प्रभो मां सदा पूर्णदृष्ट्या समीक्ष्य ।
भवद्भक्तिनावोद्धर त्वं दयाळो सुगत्यन्तरं नास्ति देव प्रसीद ॥१२॥

गळे रत्नभूषं तनौ मञ्जुवेषं करे ज्ञानशक्तिं दरस्मेरमास्ये ।
कटिन्यस्तपाणिं शिखिस्थं कुमारं भजेऽहं गुहादन्यदेवं न मन्ये ॥

याहीनचित्तं परद्रोहपात्रं सदा पापशीलं गुरोर्भक्तिहीनम् ।
नन्यावलम्बं भवन्नेत्रपात्रं कृपाशील मां भो पवित्रं कुरु त्वम् ॥

महासेन गाङ्गेय वल्लीसहाय प्रभो तारकारे षडास्यामरेश ।
सदा पायसान्नप्रदातर्गुहेति स्मरिष्यामि भक्त्या सदाऽहं विभो त्वाम् ॥
प्रतापस्य बाहो नमद्वीरबाहो प्रभो कार्तिकेयेष्टकामप्रदेति ।
यदा ये पठन्ते भवन्तं तदैव प्रसन्नस्तु तेषां बहुश्रीं ददासि ॥१६॥
अपारेऽतिदारिद्र्यपाथोधिमध्ये भ्रमन्तं जानिग्राहपूर्णे नितान्तम् ।
महासेन मामुद्धर त्वं कटाक्षावलोकेन किञ्चित्प्रसीद प्रसीद ॥१७॥
स्थिरां देहि भक्तिं भवत्पादपद्मे श्रियं निश्चलां देहि मह्यं कुमार ।
गुहं चन्द्रतारं स्ववंशाभिवृद्धिं कुरु त्वं प्रभो मे मनःकल्पसाल ॥
नमस्ते नमस्ते महाशक्तिपाणे नमस्ते नमस्ते लसद्वज्रपाणे ।
नमस्ते नमस्ते कटिन्यस्तपाणे नमस्ते नमस्ते सदाभीष्टपाणे ॥१९॥
नमस्ते नमस्ते महाशक्तिधारिन् नमस्ते सुराणां महासौख्यदायिन
नमस्ते सदा कुक्कुटेशाख्यक त्वं समस्तापराधं विभो मे क्षमस्व ॥
य एको मुनीनां हृदब्जाधिवासः शिवाङ्कं समारुह्य सत्पीठकल्पम्
विरिञ्चाय मन्त्रोपदेशं चकार प्रमोदेन सोऽयं तनोतु श्रियं मे ॥
यमाहुः परं वेद शूरेषु मुख्यं सदा यस्यशक्त्या जगद्भीतभीतम् ।
यमालोक्य देवाः स्थिरं स्वर्गपालाः सदोङ्काररूपं चिदानन्दमीडे ॥
गुहस्तोत्रमेतन् कृतान्तारिसूनोः भुजङ्गप्रयातेन पद्येन कान्तम् ।
जना ये पठन्ते सदा ते महान्तो मनोवाञ्छितं सर्वकामान्लभन्ते ॥

॥ इति सुब्रह्मण्यभुजङ्गप्रयातं संपूर्णम् ॥

---

॥ श्रीः ॥

# ॥ बृहत्स्तोत्ररत्नाकरः ॥



## ॥ श्रीशिवाष्टोत्तरशतनामस्तोत्रम् ॥

शिवो महेश्वरश्शंभुः पिनाकी शशिशेखरः ।
वामदेवो विरूपाक्षः कपर्दी नीललोहितः ॥१॥

शङ्करश्शूलपाणिश्च खट्वाङ्गी विष्णुवल्लभः ।
शिपिविष्टोऽम्बिकानाथः श्रीकण्ठो भक्तवत्सलः ॥२॥

भवश्शर्वस्त्रिलोकेशश्शितिकण्ठश्शिवाप्रियः ।
उग्रः कपाली कामारिरन्धकासुरसूदनः ॥३॥

गङ्गाधरो ललाटाक्षः कालकालः कृपानिधिः ।
भीमः परशुहस्तश्च मृगपाणिर्जटाधरः ॥४॥

कैलासवासी कवची कठोरस्त्रिपुरान्तकः ।
वृषाङ्को वृषभारूढो भस्मोद्धूलितविग्रहः ॥५॥

सामप्रियस्स्वरमयस्त्रयीमूर्तिरनीश्वरः ।
सर्वज्ञः परमात्मा च सोमसूर्याग्निलोचनः ॥६॥

हविर्यज्ञमयस्सोमः पञ्चवक्त्रस्सदाशिवः ।
विश्वेश्वरो वीरभद्रो गणनाथः प्रजापतिः ॥७॥

हिरण्यरेता दुर्धर्षो गिरीशो गिरिशोऽनघः ।
भुजङ्गभूषणो भर्गो गिरिधन्वा गिरिप्रियः ॥८॥
कृत्तिवासाः पुरारातिर्भगवान् प्रमथाधिपः ।
मृत्युञ्जयस्सूक्ष्मतनुर्जगद्व्यापी जगद्गुरुः ॥९॥
व्योमकेशो महासेनजनकश्चारुविक्रमः ।
रुद्रो भूतपतिः स्थाणुरहिर्बुध्न्यो दिगम्बरः ॥१०॥
अष्टमूर्तिरनेकात्मा सात्त्विकश्शुद्धविग्रहः ।
शाश्वतः खंडपरशुरजः पाशविमोचकः ॥११॥
मृडः पशुपतिर्देवो महादेवोऽव्ययो हरिः ।
पूषदन्तभिदव्यग्रो दक्षाध्वरहरो हरः ॥१२॥
भगनेत्रभिदव्यक्तस्सहस्राक्षस्सहस्रपात् ।
अपवर्गप्रदोऽनन्तस्तारकः परमेश्वरः ॥१३॥
एवं श्रीशंभुदेवस्य नाम्नामष्टोत्तरं शतम् ॥

॥ श्रीशिवाष्टोत्तरशतनामस्तोत्रं समाप्तम् ॥

---

## ॥ श्रीशिवसहस्रनामस्तोत्रम् ॥

वन्दे शंभुमुमापतिं सुरगुरुं वन्दे जगत्कारणं
वन्दे पन्नगभूषणं मृगधरं वन्दे पशूनां पतिम् ।
वन्दे सूर्यशशाङ्कवह्निनयनं वन्दे मुकुन्दप्रियं
वन्दे भक्तजनाश्रयं च वरदं वन्दे शिवं शङ्करम् ॥

वासुदेवः—

ततस्स प्रयतो भूत्वा मम तात युधिष्ठिर ।
प्रांजलिः प्राह विप्रर्षिर्नामसंग्रहमादितः ॥१॥

उपमन्युः—

ब्रह्मप्रोक्तै ऋषिप्रोक्तैर्वेदवेदांगसंभवैः ।
सर्वलोकेषु विख्यातं स्तुत्यं स्तोष्यामि नामभिः ॥२॥

महद्भिर्विहितैस्सत्यैसिद्धैस्सर्वार्थसाधकैः ।
ऋषिणा तण्डिना भक्त्या कृतैर्वेदकृतात्मना ॥३॥

यथोक्तैस्साधुभिः ख्यातैर्मुनिभिस्तत्त्वदार्शिभिः ।
प्रवरं प्रथमं स्वर्ग्यं सर्वभूतहितं शुभम् ॥४॥

श्रुतैस्सर्वत्र जगति ब्रह्मलोकावतारितैः ।
सत्यैस्तत्परमं ब्रह्म ब्रह्मप्रोक्तैस्सनातमम् ॥५॥

वक्ष्ये यदुकुलश्रेष्ठ शृणुष्वावहितो मम ।
वरयैनं भवं देवं भक्तस्त्वं परमेश्वरम् ॥६॥

तेन ते श्रावयिष्यामि यत्तद्ब्रह्म सनातनम् ।
न शक्यं विस्तरात्कृत्स्नं वक्तुं शर्वस्य केनचित् ॥७॥

युक्तेनापि विभूतीनामपि वर्षशतैरपिं ।
यस्यादिमध्यमांतानि गम्यंते न सुरैरपि ॥८॥

कस्तस्य शक्नुयाद्वक्तुं गुणान् कार्त्स्न्येन माधव ।
किंतु देवस्य महतस्संक्षिप्तार्थपदाक्षरम् ॥९॥

शक्तितश्चरितं वक्ष्ये प्रसादात्तस्य धीमतः ।
अप्राप्य तु ततोऽनुज्ञां न शक्यः स्तोतुमीश्वरः ॥१०॥
यदा तेनाभ्यनुज्ञातस्स्तुतो वै स तदा मया ।
अनादिनिधनस्याहं जगद्योनेर्महात्मनः ॥११॥
नाम्नां किंचित्समुद्देशं वक्ष्याम्यव्यक्तयोनिनः ।
वरदस्य वरेण्यस्य विश्वरूपस्य धीमतः ॥१२॥
शृणु नाम्नां चयं कृष्ण यदुक्तं पद्मयोनिना ।
दशनामसहस्राणि यान्याह प्रपितामहः ॥१३॥
तानि निर्मथ्य मनसा दध्नो घृतमिवोद्धृतम् ।
गिरेस्सारं यथा हेम पुष्पसारं यथा मधु ॥१४॥
घृतात्सारं यथा मंडं तथैतत्सारमुद्धृतम् ।
सर्वपापापहमिदं चतुर्वेदसमन्वितम् ॥१५॥
प्रयत्नेनाधिगंतव्यं धार्यं च प्रयतात्मना ।
मांगळ्यं पौष्टिकं चैव रक्षोघ्नं पावनं महत् ॥१६॥
इदं भक्ताय दातव्यं श्रद्धयाऽनास्तिकाय च ।
नाश्रद्दधानरूपाय नास्तिकायाजितात्मने ॥१७॥
यश्चाभ्यसूयते देवं कारणात्मानमीश्वरम् ।
स कृष्ण नरकं याति सह पूर्वैस्सहात्मजः ॥१८॥
इदं ध्यानमिदं योग मिदं ध्येयमनुत्तमम् ।
इदं जप्यमिदं ज्ञानं रहस्यमिदमुत्तमम् ॥१९॥

यं ज्ञात्वा ह्यंतकालेऽपि गच्छेत परमां गतिम् ।
पवित्रं मंगळं मेध्यं कल्याणमिदमुत्तमम् ॥२०॥

इदं ब्रह्म पुरा कृत्वा सर्वलोकपितामहः ।
सर्वस्तवानां राजत्वे दिव्यानां समकल्पयत् ॥२१॥

तदाप्रभृति चैवायमीश्वरस्य महात्मनः ।
स्तवराज इति ख्यातो जगत्यमरपूजितः ॥२२॥

ब्रह्मलोकादयं स्वर्गे स्तवराजोऽवतारितः ।
यतस्तण्डिः पुरा प्राप तेन तण्डिकृतोऽभवत् ॥२३॥

स्वर्गाच्चैवात्र भूलोकं तंडिना ह्यवतारितः ।
सर्वमङ्गळमाङ्गल्यं सर्वपापप्रणाशनम् ॥२४॥

निगदिष्ये महाबाहो स्तवानामुत्तमं स्तवम् ।
ब्रह्मणामपि यद्ब्रह्म पराणामपि यत्परम् ॥२५॥

तेजसामपि यत्तेजस्तपसामपि यत्तपः ।
शांतानामपि यश्शांतो द्युतीनामपि या द्युतिः ॥२६॥

दांतानामपि यो दांतो धीमतामपि या च धीः ।
देवानामपि यो देव ऋषीणामपि यस्त्वृषिः ॥२७॥

यज्ञानामपि यो यज्ञश्शिवानामपि यश्शिवः ।
रुद्राणामपि यो रुद्रः प्रभा प्रभवतामपि ॥२८॥

योगिनामपि यो योगी कारणानां च कारणम् ।
यतो लोकास्संभवन्ति न भवन्ति यतः पुनः ॥२९॥

सर्वभूतात्मभूतस्य हरस्यामिततेजसः ।
अष्टोत्तरसहस्रं तु नाम्नां सर्वस्य मे शृणु ॥३०॥
यच्छ्रुत्वा मनुजव्याघ्र सर्वान् कामानवाप्स्यसि ।
स्थिरः स्थाणुः प्रभुर्भीमः प्रवरो वरदो वरः ॥३१॥
सर्वात्मा सर्वविख्यातः सर्वस्सर्वकरो भवः ।
जटी चर्मी शिखंडी च सर्वाङ्गस्सर्वभावनः ॥३२॥
हरश्च हरिणाक्षश्च सर्वभूतहरः प्रभुः ।
प्रवृत्तिश्च निवृत्तिश्च नियतश्शाश्वतो ध्रुवः ॥३३॥
श्मशानवासी भगवान् खचरो गोचरोऽर्दनः ।
अभिवाद्यो महाकर्मा तपस्वी भूतभावनः ॥३४॥
उन्मत्तवेषः प्रच्छन्नस्सर्वलोकप्रजापतिः ।
महारूपो महाकायो वृषरूपो महायशाः ॥३५॥
महात्मा सर्वभूतात्मा विश्वरूपो महाहनुः ।
लोकपालोऽन्तर्हितात्मा प्रसादो नीललोहितः ॥३६॥
पवित्रं च महांश्चैव नियमो नियमाश्रितः ।
सर्वकर्मा स्वयंभूत आदिरादिकरो निधिः ॥३७॥
सहस्राक्षो विशालाक्षस्सोमोनक्षत्रसाधकः ।
चन्द्रस्सूर्यश्शनिः केतुर्ग्रहो ग्रहपतिर्वरः ॥३८॥
आदिरंतो लयः कर्ता मृगबाणार्पणोऽनघः ।
महातपा घोरतपा अदीनो दीनसाधकः ॥३९॥

संवत्सरकरो मन्त्रः प्रमाणं परमं तपः ।
योगी योज्यो महाबीजो महारेता महाबलः ॥४०॥
सुवर्णरेतास्सर्वज्ञस्सुबीजो बीजवाहनः ।
दशबाहुस्त्वनिमिषो नीलकण्ठ उमापतिः ॥४१॥
विश्वरूपस्स्वयंश्रेष्ठो बलवीरो बलो गणः ।
गणकर्ता गणपतिर्दिग्वासाः काम एव च ॥४२॥
मंत्रवित्परमो मन्त्रः सर्वभावकरो हरः ।
कमण्डलुधरो धन्वी बाणहस्तः कपालवान् ॥४३॥
अशनी शतघ्नी खड्गी पट्टसी चायुधी महान् ।
स्रुवहस्तस्सुरूपश्च तेजस्तेजस्करो निधिः ॥४४॥
उष्णीषी च सुवक्त्रश्च उदग्रो विनतस्तथा ।
दीर्घश्च हरिकेशश्च सुतीर्थः कृष्ण एव च ॥४५॥
सृगालरूपः सिद्धार्थो मुंडस्सर्वशुभंकरः ।
अजश्च बहुरूपश्च गन्धाधारी कपर्द्यपि ॥४६॥
ऊर्ध्वरेता ऊर्ध्वलिङ्ग ऊर्ध्वशायी नभःस्थलः ।
त्रिजटश्चीरवासाश्च रुद्रस्सेनापतिर्विभुः ॥४७॥
नक्तंचरोऽहश्चरश्च तिग्ममन्युस्सुवर्चसः ।
गजहा दैत्यहा कालो लोकधाता गुणाकरः ॥४८॥
सिंहशार्दूलरूपश्च व्याघ्रचर्माम्बरावृतः ।
कालयोगी महानाथस्सर्वकामश्चतुष्पथः ॥४९॥

निशाचरः प्रेतराजो भूतचारी महेश्वरः ।
बहुभूतो बहुधरः स्वर्भानुरमितो गतिः ॥५०॥
नृत्यप्रियो नित्यनर्तो नर्तकस्सर्वलालसः ।
महाघोरतपाश्शूरो नित्योऽनीहो निरालयः ॥५१॥
सहस्रहस्तो विजयो व्यवसायो ह्यतंद्रितः ।
अमर्षणोऽमर्षणात्मा यज्ञहा कामनाशकः ॥५२॥
दक्षयागापहारी च सुसहो मध्यमस्तथा ।
तेजोपहारी बलहा मुदितोऽर्थोऽजिता वरः ॥५३॥
गंभीरघोषो गंभीरो गंभीरबलवाहनः ।
न्यग्रोधरूपो न्यग्रोधवृक्षकर्णस्थितिर्विभुः ॥५४॥
सुतीक्ष्णदशनश्चैव महाकायो महाननः ।
विष्वक्सेनो हरिर्यज्ञस्संयुगापीडवाहनः ॥५५॥
तीक्ष्णतापश्च हर्यश्वस्सहायः कर्मकालवित् ।
विष्णुप्रसादितो यज्ञस्समुद्रो वडवामुखः ॥५६॥
हुताशनसहायश्च प्रशांतात्मा हुताशनः ।
उग्रतेजा महातेजा जन्यो विजयकालवित् ॥५७॥
ज्योतिषामयनंसिद्धिस्सर्वविग्रह एव च ।
शिखी मुंडी जटी ज्वाली मूर्तिजो मूर्धगो बली ॥५८॥
वैष्णवः प्रजवी ताली खेली कालकटंकटः ।
नक्षत्रविग्रहमतिर्गुणबुद्धिर्लयोऽगमः ॥५९॥

प्रजापतिर्विश्वबाहुर्विभागः सर्वतोमुखः ।
विमोचस्सुमरणो हिरण्यकवचोद्भवः ॥६०॥

मेघजो बलचारी च महीचारी स्तुतस्तथा ।
सर्वतूर्यविनोदी च सर्ववाद्यपरिग्रहः ॥६१॥

व्याळरूपो गुहावासी ग्रहमाली तरङ्गवित् ।
त्रिदशः कालहृत्कर्मसर्वबन्धविमोचनः ॥६२॥

बन्धनस्त्वसुरेन्द्राणां युधि शत्रुविनाशनः ।
सांख्यप्रसादो दुर्वासास्सर्वसाधुनिषेवितः ॥६३॥

प्रस्कन्दनो विभागज्ञो ह्यतुल्यो यज्ञभागवित् ।
सर्ववासस्सर्वचारी दुर्वासा वासवोऽमरः ॥६४॥

हैमो हेमकरो यज्ञस्सर्वधारी धरोत्तमः ।
लोहिताक्षो महाक्षश्च विजयाक्षो विशारदः ॥६५॥

संग्रहो निग्रहः कर्ता सर्पचीरनिवासनः ।
मुख्योऽमुख्यश्च देहश्च काहळिस्सर्वकामदः ॥६६॥

सर्वकालप्रसादश्च सुबलो बलरूपभृत् ।
सर्वकामप्रदश्चैव सर्वदस्सर्वतोमुखः ॥६७॥

आकाशनिर्विरूपश्च निपाती ह्यवशः खगः ।
रौद्ररूपोंऽशुरादित्यो बहुरश्मिस्सुवर्चसी ॥६८॥

वसुवेगो महावेगो मनोवेगो निशाचरः ।
सर्ववासी श्रियावासी उपदेशकरोऽकरः ॥६९॥

मुनिरात्मा निरालोकस्संभग्नश्च सहस्रदः ।
पक्षी च प्लक्षरूपश्च अतिदीप्तो विशां पतिः ॥७०॥
उन्मादो मदनः कामो ह्यश्वत्थोऽर्थकरो यशः ।
वामदेवश्च वामश्च प्राग्दक्षिण उदङ्मुखः ॥७१॥
सिद्धयोगी महर्षिश्च सिद्धार्थस्सिद्धसाधकः ।
भिक्षुश्च भिक्षुरूपश्च विपणो मृदुरव्ययः ॥७२॥
महासेनो विशाखश्च षष्टिभागो गवां पतिः ।
वज्रहस्तश्च विष्कम्भी चमूस्तंभन एव च ॥७३॥
वृत्तवृत्तकरस्तालो मधुर्मधुकलोचनः ।
वाचस्पत्यो वाजसनो नित्यमाश्रितपूजितः ॥७४॥
ब्रह्मचारी लोकचारी सर्वचारी विचारवित् ।
ईशान ईश्वरः कालो निशाचारी पिनाकभृत् ॥७५॥
निमित्तस्थो निमित्तं च नंदिर्नंदिकरो हरिः ।
नंदीश्वरश्च नंदी च नंदनो नंदिवर्धनः ॥७६॥
भगहारी निहन्ता च कालो ब्रह्मा पितामहः ।
चतुर्मुखो महालिङ्गश्चारुलिङ्गस्तथैव च ॥७७॥
लिङ्गाध्यक्षस्सुराध्यक्षो योगाध्यक्षो युगावहः ।
बीजाध्यक्षो बीजकर्ता अध्यात्मानुगतो बलः ॥७८॥
इतिहासस्सकल्पश्च गौतमोऽथ निशाकरः ।
दंभो ह्यदंभो वैदंभो वश्यो वशकरः कलिः ॥७९॥

लोककर्ता पशुपतिर्महाकर्ता ह्यनौषधः ।
अक्षरं परमं ब्रह्म बलवान् शक्र एव च ॥८०॥

नीतिर्ह्यनीतिश्शुद्धात्मा शुद्धो मान्यो गतागतः ।
बहुप्रसादस्सुस्वप्नो दर्पणोऽथ त्वमित्रजित् ॥८१॥

वेदकारो मंत्रकारो विद्वान्समरमर्दनः ।
महामेघनिवासी च महाघोरो वशीकरः ॥८२॥

अग्निज्वालो महाज्वालो ह्यतिधूम्रो हुतो हविः ।
वृषभश्शङ्करो नित्यं वर्चस्वी धूमकेतनः ॥८३॥

नीलस्तथांगलुब्धश्च शोभनो निरवग्रहः ।
स्वस्तिदस्स्वस्तिभागश्च भागी भागकरो लघुः ॥८४॥

उत्सङ्गश्च महाङ्गश्च महागर्भपरायणः ।
कृष्णवर्णस्सुवर्णश्च इन्द्रियं सर्वदेहिनाम् ॥८५॥

महापादो महाहस्तो महाकायो महायशाः ।
महामूर्द्धा महामात्रो महानेत्रो निशालयः ॥८६॥

महान्तको महाकर्णो महोष्ठश्च महाहनुः ।
महानासो महाकंबुर्महाग्रीवश्श्मशानभाक् ॥८७॥

महावक्षा महोरस्को ह्यन्तरात्मा मृगालयः ।
लंबनो लंबितोष्ठश्च महामायः पयोनिधिः ॥८८॥

महादन्तो महादंष्ट्रो महाजिह्वो महामुखः ।
महानखो महारोमा महाकेशो महाजटः ॥८९॥

प्रसन्नश्च प्रसादश्च प्रत्ययो गिरिसाधनः ।
स्नेहनोऽस्नेहनश्चैव अजितश्च महामुनिः ॥९०॥
वृक्षाकारो वृक्षकेतुरनलो वायुवाहनः ।
गण्डली मेरुधामा च देवाधिपतिरेव च ॥९१॥
अथर्वशीर्षस्सामास्य ऋक्सहस्रामितेक्षणः ।
यजुःपादभुजो गुह्यः प्रकाशो जङ्गमस्तथा ॥९२॥
अमोघार्थः प्रसादश्च अभिगम्यस्सुदर्शनः ।
उपकारः प्रियस्सर्वः कनकः कांचनच्छविः ॥९३॥
नाभिर्नंदिकरो भावः पुष्करस्थपतिः स्थिरः ।
द्वादशस्त्रासनश्चाद्यो यज्ञो यज्ञसमाहितः ॥९४॥
नक्तं कलिश्च कालश्च मकरः कालपूजितः ।
सगणो गणकारश्च भूतवाहनसारथिः ॥९५॥
भस्माशयो भस्मगोप्ता भस्मभूतस्तरुर्गणः ।
लोकपालस्तथा लोको महात्मा सर्वपूजितः ॥९६॥
शुक्लस्त्रिशुक्लसंपन्नश्शुचिर्भूतनिषेवितः ।
आश्रमस्थः क्रियावस्थो विश्वकर्ममतिर्वरः ॥९७॥
विशालशाखस्ताम्रोष्ठोह्यंबुजालस्सुनिश्चलः ।
कपिलः कपिशश्शुक्ल आयुश्चैव परोऽपरः ॥९८॥
गन्धर्वो ह्यदितिस्तार्क्ष्यस्सुविज्ञेयस्सुशारदः ।
परश्वधायुधो देवो ह्यनुकारी सुबान्धवः ॥९९॥

तुंबवीणो महाक्रोधो ऊर्ध्वरेता जलेशयः ।
उग्रो वंशकरो वंशो वंशनादो ह्यनिंदितः ॥१००॥

सर्वांगरूपो मायावी सुहृदो ह्यनिलोऽनलः ।
बंधनो बंधकर्ता च सुबन्धनविमोचनः ॥१०१॥

स यज्ञारिस्स कामारिर्महादंष्ट्रो महायुधः ।
बहुधाऽनिंदितस्सर्वश्शङ्करश्चन्द्रशेखरः ॥१०२॥

अमरेशो महादेवो विश्वदेवस्सुरारिहा ।
अहिर्बुध्न्योऽनिलाभश्च चेकितानो हरिस्तथा ॥१०३॥

अजैकपाच्च कापाली त्रिशङ्कुरजितश्शिवः ।
धन्वंतरिर्धूमकेतुस्स्कन्दो वैश्रवणस्तथा ॥१०४॥

धाता शक्रश्च विष्णुश्च मित्रस्त्वष्टा ध्रुवो धरः ।
प्रभावस्सर्वगो वायुरर्यमा सविता रविः ॥१०५॥

उषंगुश्च विधाता च मांधाता भूतभावनः ।
विभुर्वर्णविभावी च सर्वकामगुणावहः ॥१०६॥

पद्मनाभो महागर्भश्चन्द्रवक्त्रोऽनिलोऽनलः ।
बलवांश्चोपशांतश्च पुराणः पुण्यचंचुरी ॥१०७॥

कुरुकर्ता कुरुवासी कुरुभूतो गुणौषधः ।
सर्वाशयो दर्भचारी सर्वेषां प्राणिनां पतिः ॥१०८॥

देवदेवस्सुखासक्तस्सदसत्सर्वरत्नवित् ।
कैलासगिरिवासी च हिमवद्गिरिसंश्रयः ॥१०९॥

कूलहारी कूलकर्ता बहुविद्यो बहुप्रदः ।
वणिजो वर्धकी वृक्षो वकुळश्चन्दनच्छदः ॥११०॥

सारग्रीवो महाजत्रुरलोलश्च महौषधः ।
सिद्धार्थकारी सिद्धार्थश्छंदोव्याकरणोत्तरः ॥१११॥

सिंहनादस्सिंहदंष्ट्रस्सिंहगस्सिंहवाहनः ।
प्रभावात्मा जगत्कालः कालो लोकहितस्तरुः ॥११२॥

सारंगो नवचक्रांगः केतुमाली सभावनः ।
भूतालयो भूतपतिरहोरात्रमनिंदितः ॥११३॥

वर्धितस्सर्वभूतानां निलयश्च विभुर्भवः ।
अमोघस्संयतो ह्यश्वो भोजनः प्राणधारणः ॥११४॥

धृतिमान् मतिमान् दक्षः सत्कृतश्च युगाधिपः ।
गोपाली गोपतिर्ग्रामो गोचर्मवसनो हरिः ॥११५॥

हिरण्यबाहुश्च तथा गुहापालः प्रवेशकः ।
प्रकृष्टारिर्महाहर्षो जितकामो जितेंद्रियः ॥११६॥

गान्धारश्च सुवासश्च तपस्सक्तो रतिर्नरः ।
महागीतो महानृत्यो ह्यप्सरोगणसेवितः ॥११७॥

महाकेतुर्महाधातुर्नैकसानुचरश्चलः ।
आवेदनीय आवेशः सर्वगन्धसुखावहः ॥११८॥

तोरणस्तारणो वातः परिधीपतिखेचरः ।
संयोगो वर्धनो वृद्धो ह्यतिवृद्धो गुणाधिकः ॥११९॥

नित्य आत्मा सहायश्च देवासुरपतिः पतिः ।
युक्तश्च युक्तबाहुश्च देवो दिवि सुपर्वणः ॥१२०॥

आषाढश्च सुषाढश्च ध्रुवोऽथ हरिणो हरः ।
वपुरावर्तमानेभ्यो वसुश्रेष्ठो महापथः ॥१२१॥

शिरोहारी विमर्शश्च सर्वलक्षणलक्षितः ।
अक्षश्च रथयोगी च सर्वयोगी महाबलः ॥१२२॥

समाम्नायोऽसमाम्नायस्तीर्थदेवो महारथः
निर्जीवो जीवनो मंत्रश्शुभाक्षो बहुकर्कशः ॥१२३॥

रत्नप्रभूतो रक्ताङ्गो महार्णवनिपानवित् ।
मूलं विशालो ह्यमृतो व्यक्ताव्यक्तस्तपोनिधिः ॥१२४॥

आरोहणोऽधिरोहश्च शीलधारी महायशाः ।
सेनाकल्पे महाकल्पे योगो योगकरो हरिः ॥१२५॥

युगरूपो महारूपो महानागहनो वधः ।
न्यायनिर्वपणः पादः पण्डितो ह्यचलोपमः ॥१२६॥

बहुमालो महामालश्शशी हरिसुलोचनः
विस्तारो लवणः कूपस्त्रियुगः सफलोदयः ॥१२७॥

त्रिलोचनो विषण्णाङ्गो मणिविद्धो जटाधरः ।
बिन्दुर्विसर्गस्सुमुखः शरस्सर्वायुधस्सहः ॥१२८॥

निवेदनस्सुखाजातः सुगन्धारो महाधनुः ।
गन्धपाली च भगवानुत्थानस्सर्वकर्मणाम् ॥१२९॥

मंथानो बहुळो वायुः सकलस्सर्वलोचनः ।
तलस्तालः करस्थाली ऊर्ध्वसंहननो महान् ॥१३०॥
छत्रं सुछत्रो विख्यातो लोकस्सर्वाश्रयः क्रमः ।
मुण्डो विरूपो विकृतो दंडी कुंडी विकुर्वणः ॥१३१॥
हर्यक्षः ककुभो वज्री शतजिह्वस्सहस्रपात् ।
सहस्रमूर्धा देवेन्द्रस्सर्वदेवमयो गुरुः ॥१३२॥
सहस्रबाहुस्सर्वाङ्गः शरण्यस्सर्वलोककृत् ।
पवित्रं त्रिककुन्मन्त्रः कनिष्ठः कृष्णपिङ्गळः ॥१३३॥
ब्रह्मदण्डविनिर्माता शतघ्नीपाशशक्तिमान् ।
पद्मगर्भो महागर्भो ब्रह्मगर्भो जलोद्भवः ॥१३४॥
गभस्तिर्ब्रह्मकृद्ब्रह्म ब्रह्मविद्ब्राह्मणो गतिः ।
अनन्तरूपश्चैकात्मा तिग्मतेजास्स्वयंभुवः ॥१३५॥
ऊर्ध्वगात्मा पशुपतिर्वातरंहा मनोजवः ।
चन्दनी पद्मनाळाग्रस्सुरभ्युत्तरणो नरः ॥१३६॥
कर्णिकारमहास्रग्वी नीलमौळिः पिनाकभृत् ।
उमापतिरुमाकान्तो जाह्नवी भृदुमाधवः ॥१३७॥
वरो वराहो वरदो वरेण्यस्सुमहास्वनः ।
महाप्रसादो दमनः शत्रुहा श्वेतपिङ्गळः ॥१३८॥
प्रीतात्मा परमात्मा च प्रयतात्मा प्रधानधृत् ।
सर्वपार्श्वमुखस्त्र्यक्षो धर्मसाधारणो वरः ॥१३९॥

चराचरात्मा सूक्ष्मात्मा अमृतो गोवृषेश्वरः ।
साध्यर्षिर्वसुरादित्यो विवस्वान् सविताऽमृतः ॥१४०॥

व्यासस्सुर्गस्सुसंक्षेपो विस्तरः पर्ययो नरः ।
ऋतुस्संवत्सरो मासः पक्षस्संख्यासमापनः ॥१४१॥

कळा काष्ठा लवा मात्रा मुहूर्ताहःक्षपाक्षणाः ।
विश्वक्षेत्रं प्रजाबीजं लिङ्गमाद्यस्सुनिर्गमः ॥१४२॥

सदसद्व्यक्तमव्यक्तं पिता माता पितामहः ।
स्वर्गद्वारं प्रजाद्वारं मोक्षद्वारं त्रिविष्टपम् ॥१४३॥

निर्वाणं ह्लादनश्चैव ब्रह्मलोकः परा गतिः ।
देवासुरविनिर्माता देवासुरपरायणः ॥१४४॥

देवासुरगुरुर्देवो देवासुरनमस्कृतः ।
देवासुरमहामात्रो देवासुरगणाश्रयः ॥१४५॥

देवासुरगणाध्यक्षो देवासुरगणाग्रणीः ।
देवादिदेवो देवर्षिर्देवासुरवरप्रदः ॥१४६॥

देवासुरेश्वरो विश्वो देवासुरमहेश्वरः ।
सर्वदेवमयोऽचिन्त्यो देवतात्मात्मसंभवः ॥१४७॥

उद्भित्त्रिविक्रमो वैद्यो विरजो नीरजोऽमरः ।
ईड्यो हस्तीश्वरो व्याघ्रो देवसिंहो नरर्षभः ॥१४८॥

विबुधोऽग्रवरस्सूक्ष्मस्सर्वदेवस्तपोमयः ।
सुयुक्तश्शोभनो वज्री प्रासानां प्रभवोऽव्ययः ॥१४९॥

गुहः कांतो निजस्सर्गः पवित्रं सर्वपावनः ।
शृङ्गी शृङ्गप्रियो बभ्रू राजराजो निरामयः ॥१५०॥
अभिरामस्सुरगणो विरामस्सर्वसाधनः ।
ललाटाक्षो विश्वदेवो हरिणो ब्रह्मवर्चसः ॥१५१॥
स्थावराणां पतिश्चैव नियमेंद्रियवर्धनः ।
सिद्धार्थस्सिद्धभूतार्थोऽचिंत्यस्सत्यव्रतश्शुचिः ॥१५२॥
व्रताधिपः परं ब्रह्म भक्तानुग्रहकारकः ।
विमुक्तो मुक्ततेजाश्च श्रीमान् श्रीवर्धनो जगत् ॥१५३॥
यथाप्रधानं भगवानिति भक्त्या स्तुतो मया ।
यं न ब्रह्मादयो देवा विदुस्तत्त्वेन नर्षयः ॥१५४॥
स्तोतव्यमर्च्यं वंद्यं च कः स्तोष्यति जगत्पतिम् ।
भक्त्या त्वेवं पुरस्कृत्य मया यज्ञपतिर्विभुः ॥१५५॥
ततोऽभ्यनुज्ञां संप्राप्य स्तुतो मतिमतां वरः ।
शिवमेभिः स्तुवन् देवं नामभिः पुष्टिवर्धनैः ॥१५६॥
नित्ययुक्तश्शुचिर्भूतः प्राप्नोत्यात्मानमात्मना ।
एतद्धि परमं ब्रह्म परं ब्रह्माधिगच्छति ॥१५७॥
ऋषयश्चैव देवाश्च स्तुवंत्येतेन तत्पराः ।
स्तूयमानो महादेवस्तुष्यते नियतात्मभिः ॥१५८॥
भक्तानुकंपी भगवानात्मसंस्थाकरो विभुः ।
तथैव च मनुष्येषु ये मनुष्याः प्रधानतः ॥१५९॥

आस्तिकाश्श्रद्दधानाश्च बहुभिर्जन्मभिस्स्तवैः ।
भक्त्या ह्यनन्यमीशानं परं देवं सनातनम् ॥१६०॥
कर्मणा मनसा वाचा भावेनामिततेजसः ।
शयाना जाग्रमाणाश्च व्रजन्नुपविशंस्तथा ॥१६१॥
उन्मिषन्निमिषंश्चैव चिन्तयंतः पुनः पुनः ।
श्रृण्वन्तश्श्रावयन्तश्च कथयन्तश्च ते भवम् ॥१६२॥
स्तुवंतस्स्तूयमानाश्च तुष्यंति च रमंति च ।
जन्मकोटिसहस्रेषु नानासंसारयोनिषु ॥१६३॥
जंतोर्विगतपापस्य भवे भक्तिः प्रजायते ।
उत्पन्ना च भवे भक्तिरनन्या सर्वभावतः ॥१६४॥
भाविनः कारणं चास्य सर्वमुक्तस्य सर्वदा ।
एतद्देवेषु दुष्प्रापं मनुष्येषु न लभ्यते ॥१६५॥
निर्विघ्ना निर्मला रुद्रे भक्तिरव्यभिचारिणी ।
तस्यैव च प्रसादेन भक्तिरुत्पद्यते नृणाम् ॥१६६॥
येन यांति परां सिद्धिं तद्भावगतचेतसः ।
य सर्वभावानुगताः प्रपद्यन्ते महेश्वरम् ॥१६७॥
प्रपन्नवत्सलो देवस्संसारात्तान् समुद्धरेत् ।
एवमन्ये अकुर्वंति देवास्संसारमोचनम् ॥१६८॥
मनुष्याणामृते देवं नान्या शक्तिस्तपोबलम् ।
इति तेनेन्द्रकल्पेन भगवान् सदसत्पतिः ॥१६९॥

कृत्तिवासास्स्तुतः कृष्ण तंडिना शुभबुद्धिना ।
स्तवमेतं भगवतो ब्रह्मा स्वयमधारयत् ॥१७०॥
गीयते च स बुध्येत ब्रह्मशङ्करसन्निधौ ।
इदं पुण्यं पवित्रं च सर्वदा पापनाशनम् ॥१७१॥
योगदं मोक्षदं चैव स्वर्गदं तोषदं तथा ।
एवमेतत्पठन्ते य एकभक्त्या तु शङ्करम् ॥१७२॥
या गतिस्सांख्ययोगानां व्रजंते तां गतिं तथा ।
स्तवमेनं प्रयत्नेन सदा रुद्रस्य सन्निधौ ॥१७३॥
अब्दमेकं चरेद्भक्तः प्राप्नुयादीप्सितं फलम् ।
एतद्रहस्यं परमं ब्रह्मणो हृदि संस्थितम् ॥१७४॥
ब्रह्मा प्रोवाच शक्राय शक्रः प्रोवाच मृत्यवे ।
मृत्युः प्रोवाच रुद्रेभ्यो रुद्रेभ्यस्तंडिमागमत् ॥१७५॥
महता तपसा प्राप्तं तंडिना ब्रह्मसद्मनि ।
तंडिः प्रोवाच शुक्राय गौतमाय च भार्गवः ॥१७६॥
वैवस्वताय मनवे गौतमः प्राह माधव ।
नारायणाय साध्याय मनुरिष्टाय धीमते ॥१७७॥
यमाय प्राह भगवान् साध्यो नारायणोऽच्युतः ।
नाचिकेताय भगवानाह वैवस्वतो यमः ॥१७८॥
मार्कंडेयाय वार्ष्णेय नाचिकेतोऽभ्यभाषत ।
मार्कंडेयान्मया प्राप्तो नियमेन जनार्दन ॥१७९॥

तवाप्यहममित्रघ्न स्तवं दद्यां ह्यविश्रुतम् ।
स्वर्ग्यमारोग्यमायुष्यं धन्यं वेदेन संमितम् ॥१८०॥

नास्य विघ्नं विकुर्वंति दानवा यक्षराक्षसाः ।
पिशाचा यातुधाना वा गुह्यका भुजगा अपि ॥१८१॥

यः पठेत शुचिः ब्रह्मचारी जितेंद्रियः ।
अभग्नयोगो वर्षं तु सोऽश्वमेधफलं लभेत् ॥१८२॥

इति श्रीमन्महाभारते आनुशासनिकपर्वणि दानधर्मपर्वणि
श्रीशिवसहस्रनामस्तोत्ररत्नकथनं नाम सप्तदशोऽध्यायः
श्रीशिवसहस्रनामस्तोत्ररत्नं समाप्तम् ॥

---

## ॥ अथ वेदपादस्तवप्रारम्भः ॥

वक्रतुण्ड महाकाय कोटिसूर्यसमप्रभ ।
निर्विघ्नं कुरु मे देव सर्वकार्येषु सर्वदा ॥१॥

कुण्डलीकृतनागेन्द्रं खण्डेन्दुकृतशेखरम् ।
पिण्डीकृतमहाविघ्नं ढुण्ढिराज नमाम्यहम् ॥२॥

मातामहमहाशैलं महस्तदपितामहम् ।
कारणं जगतां वन्दे कण्ठादुपरिवारणम् ॥३॥

ऋषय ऊचुः—

पुण्डरीकपुरं प्राप्य जैमिनि र्मुनिसत्तमः ।
किं चकार महायोगी नूतनो वक्तु मर्हसि ॥४॥

सूत उवाचः—

भगवान् जैमिनि धीमान्पुण्डरीकपुरे पुरा ।
महर्षिसिद्धगन्धर्वयक्षकिन्नरसेविते ॥५॥

नृत्यद्भिरप्सरस्सङ्घैर्दिव्यगानैश्च शोभिते ।
नृत्यन्तं परमीशानं ददर्श सदसि प्रभुम् ॥६॥

ननाम दूरतो दृष्ट्वा दण्डवत्क्षितिमण्डले ।
वपावुत्थाय देवस्य ताण्डवामृतमङ्गळम् ॥७॥

पार्श्वस्थितां महादेवीं पश्यंतीं तस्य ताण्डवम ।
दृष्ट्वा सुसंहृष्टमनाः पपात पुरतो मुनिः ॥८॥

तत श्शिष्या स्समाहूय वेदशास्त्रार्थपारगान् ।
अग्निकेशमकेशं च सतयोगं च माधवम् ॥९॥

वक्रनासं समित्पाणिं धूमगंधिं कुशासनम् ।
एतैस्सार्धं महादेवं पूजयामास जैमिनिः ॥१०॥

ततोऽपि वेदवेदान्तसारार्थं तत्प्रसादतः ।
कृताञ्जलि रुवाचेदं वेदान्तस्तवमुत्तमम् ॥११॥

श्रीजैमिनि रुवाचः—

विघ्नेशविधिमार्ताण्डचन्द्रेन्द्रोपेन्द्रवन्दित ।
नमो गणपते तुभ्यं ब्रह्मणां ब्रह्मणस्पते ॥१२॥

उमाकोमलहस्ताब्जसंभावितललाटिकम् ।
हिरण्यकुण्डलं वन्दे कुमारं पुष्करस्रजम् ॥१३॥

शिवं विष्णोश्च दुर्दर्शं नरः कस्तोतु मर्हति ।
तस्मान्मत्त स्स्तुतिस्सेय मभ्रा दृष्टिरिवाजनि ॥१४॥

नमश्शिवाय सांबाय नमश्शर्वाय शम्भवे ।
नमो नटाय रुद्राय सदसस्पतये नमः ॥१५॥

पादभिन्नाहिलोकाय मौळिभिन्नाण्डभित्तये ।
भुजभ्रान्तादिगन्ताय भूतानां पतये नमः ॥१६॥

क्वणन्नूपुरयुग्माय विलसत्कृत्तिवाससे ।
फणींद्रमेखलायास्तु पशूनां पतये नमः ॥१७॥

कालकालाय सोमाय योगिने शूलपाणये ।
अस्थिभूषाय शुद्धाय जगतां पतये नमः ॥ ॥१८॥

पात्रे सर्वस्य जगतो नेत्रे सर्वदिवौकसाम् ।
गोत्राणां पतये तुभ्यं क्षेत्राणां पतये नमः ॥१९॥

शङ्कराय नमस्तुभ्यं मङ्गळाय नमोऽस्तुते ।
धनानां पतये तुभ्य मन्नानां पतये नमः ॥२०॥

अष्टाङ्गयोगहृष्टाय क्लिष्टभक्तेष्टदायिने ।
इष्टिघ्नास्तुतयूष्टाय पुष्टानां पतये नमः ॥२१॥

पञ्चभूताधिपतये कालाधिपतये नमः ।
नम आत्माधिपतये दिशां च पतये नमः ॥२२॥

विश्वकर्त्रे महेशाय विश्वभर्त्रे पिनाकिने ।
विश्वहर्त्रेऽग्निनेत्राय विश्वरूपाय वै नमः ॥२३॥

ईशान ते तत्पुरुष नमो घोराय ते सदा ।
वामदेव नमस्तुभ्यं सद्योजाताय वै नमः ॥२४॥

भूतिभूषाय भक्तानां भीतिभङ्गरताय ते ।
नमो भवाय भर्गाय नमो रुद्राय मीढुषे ॥२५॥

सहस्राङ्गाय साम्बाय सहस्रधीश ते नमः ।
सहस्रबाहवे तुभ्यं सहस्राक्षाय मीढुषे ॥२६॥

सुकपोलाय सोमाय सुललाटाय सुभ्रुवे ।
सुदेहाय नमस्तुभ्यं सुमृडीकाय मीढुषे ॥२७॥

वन्देऽहं देवमानन्दसंदोहं लास्यसुन्दरम् ।
समस्तजगतां नाथं सदसस्पतिमद्भुतम् ॥२८॥

भवक्लेशनिमित्तोरुभयच्छेदकृते सताम् ।
नमस्तुभ्यमषाढाय सहमानाय वेधसे ॥२९॥

सुजङ्घं सूदरं सूरुं सुकण्ठं सोमभूषणम् ।
सुगण्डं सुदृशं वन्दे सुगन्धिं पुष्टिवर्धनम् ॥३०॥

भिक्षाहारं हारितक्षौमं रक्षाभूषं क्षितिक्षमम् ।
यक्षेशेष्टं नमामीशमक्षरं परमं प्रभुम् ॥३१॥

अर्धालकमवस्त्रार्धमस्थ्युत्पलदळस्रजम् ।
अर्धं पुंलक्षणं वन्दे पुरुषं कृष्णपिङ्गळम् ॥३२॥

सकृत्प्रणतसंसारमहासागरतारकम् ।
प्रणमामि तमीशानं जगतस्तस्थुषस्पतिम् ॥३३॥

त्रातारं जगता मशिं दातारं सर्वसंपदाम् ।
नेतारं मरुतां वन्दे जेतार मपराजितम् ॥३४॥

तं त्वा मृन्तकहन्तारं वन्दे मन्दाकिनीधरम् ।
ततानि विदधेयोऽय मिमानि त्रीणि विष्टपान ॥३५॥

सर्वज्ञं सर्वगं सर्वं कविं वन्दे तमीश्वरम् ।
यतश्च यजुषा सार्थं मृचस्सामानि जज्ञिरे ॥३६॥

भवन्तं सुदृशं वन्दे भूतभव्यभवत्पतिम् ।
त्यजन्तीतरकर्माणि यो विश्वा भुवि पश्यति ॥३७॥

हरं सुरनियन्तारं परं त महमानतः ।
यदाज्ञया जगत्सर्वं व्याप्य नारायणः स्थितः ॥३८॥

तं नमामि महादेवं यन्नियोगादिदं जगत् ।
कल्पादौ भगवान् धाता यथापूर्व मकल्पयत् ॥३९॥

ईश्वरं त महं वन्दे यस्य लिङ्ग महर्निशम् ।
यजन्ते सह भार्याभि रिन्द्रज्येष्ठा मरुद्गणाः ॥४०॥

नमामि तमिमं रुद्रं यमभ्यर्च्य सकृत्पुरा ।
अवापु स्स्वं स्व मैश्वर्यं देवासः पूषरातयः ॥४१॥

तं वन्दे देव मीशानं यं शिवं हृदयाम्बुजे ।
सततं यतय इशान्ता स्सज्ञानाना उपासते ॥४२॥

तदस्मै सततं कुर्मो नमः कमलकान्तये ।
उमाकुचपदोरस्का या ते रुद्र शिवा तनूः ॥४३॥

नमस्ते रुद्र भावाय नमस्ते रुद्र केळये ।
नमस्ते रुद्र शन्त्यै च नमस्ते रुद्र मन्यवे ॥४४॥

ईशानं सकलाराध्यं वन्दे संपत्समृद्धिदम् ।
यस्य चासीद्धुरि शशङ्कं ब्रह्मा भवति सारथिः ॥४५॥

क्षताश्वरथनिष्ठाभ्यां पादाभ्यां त्रिपुरान्तक ।
बाणकार्मुकयुक्ताभ्यां बाहुभ्यामुत ते नमः ॥४६॥

नमः परशवे देवशूलायानलरोचिषे ।
हर्यग्नीन्द्वात्मने तुभ्य मुतोत इषवे नमः ॥४७॥

नमस्ते वासुकिज्याय विष्फाराय च शङ्कर ।
महते मेरुरूपाय नमस्ते अस्तु धन्वने ॥४८॥

सुरेतरवधूहार हारिणी हरयानिते ।
अन्यान्यस्त्राण्यहंतूर्ण महं तेभ्योऽकरं नमः ॥४९॥

धराधरसुतालीलसरोजाहतबाहवे ।
तस्मै तुभ्य मवोचाम नमो अस्मां अवस्यवः ॥५०॥

रक्ष मा मक्षमं क्षीण मक्षक्षत मशिक्षितम् ।
अनाथं दीनमापन्नं दरिद्रं नीलोहित ॥५१॥

दुर्मुखं दुष्क्रियं दुष्टं रक्ष मा मीश मादृशम् ।
मादृशानामहं नत्वदन्यं विन्दामि रायसे ॥५२॥

भवाख्येनाग्निना शम्भो रागद्वेषमदार्चिषा ।
दयाळो देह्यमानाना मस्माकमविता भव ॥५३॥

परदारं परावासं परवस्त्रं पराप्रियम् ।
हर पाहि परान्नं मां पुरुनामन् पुरुष्टुत ॥५४॥
कीलौके यैत्कृतं पुष्टैर्नोवमानं सहामहे ।
देवेश तवदानेभ्यो भूरिदा भूरिदेहिनः ॥५५॥
लोकाना मुपपन्नानां गर्विणा मीश पश्यताम् ।
अस्मभ्यं क्षेत्रमायुश्च वसु स्पार्हं तथाभर ॥५६॥
याश्चादौ महतीं लज्जा मस्मदीयां घृणानिधे ।
त्वमेव वेत्सि न स्तूर्ण मिवग् स्तोतृभ्य आभर ॥५७॥
जाया माता पिता चान्ये मा द्विषं त्यमतिं कृशम् ।
देहि मे महतीं विद्यां राधा विश्वपुषा सह ॥५८॥
अदृष्टार्थेषु सर्वेषु दृष्टार्थेष्वपि कर्मसु ।
मेरुधन्वन्नशक्तेभ्यो बलं देहि तनूषुगः ॥५९॥
लब्धारिषसहस्रस्य नित्य मिष्टवियोगिनः ।
हृद्रोगं मम देवेश हरिमाणं च नाशय ॥६०॥
ये ये रोगाः पिशाचा वा नरा देवाश्च मामिह ।
बाधन्ते देव तान सर्वान् निबाधस्व महानासि ॥६१॥
त्वमेव रक्षितास्माकं नान्यः कश्चन विद्यते ।
तस्मात्स्वीकृत्य देवेश रक्षाणो ब्रह्मणस्पते ॥६२॥
त्वमे वोमापते माता त्वं पिता त्वं पितामहः ।
त्व मायुस्त्वं मतिस्त्वं श्रीरुत भ्रातोतमस्सखा ॥६३॥

यत स्त्वमेव देवेश कर्ता सर्वस्य कर्मणः ।
ततः क्षमस्व तत्सर्वं यन्मया दुष्कृतं कृतम् ॥६४॥

त्वत्समो न प्रभुत्वेन फल्गुत्वेन च मत्समः ।
अतो देव महादेव त्व मस्माकं तव स्तासि ॥६५॥

सुस्थितं भस्मगौराङ्गं तरुणादित्यविग्रहम् ।
प्रसन्नवदनं सौम्यं गायेद्वा मनसा गिरा ॥६६॥

एष एवतु सोऽस्माकं नृत्यं तं त्वावभासते ।
लोकयन्त मुमाकान्तं पश्येम शरद श्शतम् ॥६७॥

अरोगिणो महाभागा विद्वांसश्च बहुश्रुताः ।
भवन्ति त्वत्प्रसादेन जीवेम शरदश्शतम् ॥६८॥

सदा च बन्धुभि स्सार्थं त्वदीयं ताण्डवामृतम् ।
पिबतः काम मीशानं ददाम शरदश्शतम ॥६९॥

देवदेव महादेव त्वदीयांघ्रिसरोरुहम् ।
कामं मधुमयं पीत्वा मोदाम शरदश्शतं ॥७०॥

कीटा नागाः पिशाचा वा ये वा केवा भवे भवे ।
तव दासा महादेव भवाम शरदश्शतम् ॥७१॥

सभाया मीश ते दिव्यं नृत्यवाद्यकलस्वनम् ।
श्रवणाभ्यां महादेव शृणवाम शरदश्शतम् ॥७२॥

स्मृतिमात्रेण संसार विनाशनपराणि ते ।
नामानि तव दिव्यानि प्रब्रवाम शरदश्शतम ॥७३॥

इषुसन्धानमात्रेण दग्धत्रिपुरधूर्जटे ।
आधिभिर्व्याधिभि र्नित्य मजीता स्याम शरदश्शतम् ॥७४॥

चारुचामीकराभासं गौरीकुचपदोरसम् ।
कदानुलोपयिष्यामि युवानं विश्रुतं कविम् ॥७५॥

प्रमथेंद्रावृतं प्रीतवदनं प्रियभाषणम् ।
सेविष्येऽहं कदा साम्ब सुभासं शुक्रशोचिषम् ॥७६॥

बह्वेनसं मामकृतपुण्यलेशं च दुर्मतिम् ।
स्वीकरिष्यति किं न्वीशो नीलग्रीवो विलोहितः ॥७७॥

कालशूरानलासक्तभीतिव्याकुलमानसम् ।
कदानु रक्ष्यतीशो मां तु सुग्रीवो अवानतः ॥७८॥

गायका यूयमायात यदि राधादिलिप्सवः ।
धनदस्य सखे साय मुपास्मै गायता नरः ॥७९॥

आगच्छत सखायो मे यदि यूयं मुमुक्षवः ।
स्तुतेश मेवं मुक्त्यर्थ मेषविप्रै रभिष्टुतः ॥८०॥

पदे पदे पदे देवपदं नः स्नास्यति ध्रुवम् ।
प्रदक्षिणं प्रकुर्वीत मध्यक्षं धर्मणा मिमम् ॥८१॥

सर्वं कार्यं युवाभ्यां हि सुकृतं सुहृदौ मम ।
अञ्जलिं कुरुतं हस्ता रुद्राय स्थिरधन्विने ॥८२॥

यन्मूर्धं मरुता मूर्ध्वं भवं चन्द्रार्धमूर्धकम् ।
धन्नं च चतुर्मूर्ध्नं नमस्याकल्मनीकिनम् ॥८३॥

नयने नयनोद्भूतदमनालीढमन्मथम् ।
पश्यन्तं तरुणं सौम्यं भ्राजमानं हिरण्मयम् ॥८४॥

सभायां शूलिन स्सन्ध्यानृत्तवाद्य स्वनामृतम् ।
कर्णौ तूर्णं यथाकामं पातं गौ रात्रिवैरिणे ॥८५॥

नासिके वासुकिश्वासवासिताभासितोरसम् ।
घ्रायतं गरळग्रीव मस्मभ्यं शर्म यच्छतम् ॥८६॥

स्वस्त्यस्तु सखि ते जिह्वे विद्यादातु रुमापते ।
स्तवमुच्छतरं ब्रूहि जयतामिव दुन्दुभिः ॥८७॥

चेतःपोत नशोच स्त्वं निन्द्यं विन्दाखिलं जगत् ।
अस्य नृत्तामृतं शम्भो गौरो न तृषितः पिब ॥८८॥

सुगन्धि सुखसंस्पर्शं कामदं सोम भूषणम् ।
गाढमालिङ्ग मच्चित्त योषाजारमिव प्रियम् ॥८९॥

महामयूखाय महाभुजाय महाशरीराय महाम्बराय ।
महाकिरीटाय महेश्वराय महोमहाय सुष्टुतमीरयामि ॥९०॥

यथा कथांचि द्रचिताभिरीश प्रसादत श्चारुभिरादरेण ।
प्रपूजयाम स्तुतिभि र्महेश मषाढमुग्रं सहमानमाभिः ॥९१॥

नमश्शिवाय त्रिपुरान्तकाय जगंत्रयेशाय दिगम्बराय ।
नमोऽस्तु मुख्याय हराय भूयो नमो जघन्याय च बुध्नयायच ॥

नमो विकाराय विकारिणे ते नमो भवायास्तु भवोद्भवाय ।
बहु प्रजात्यन्तविचित्ररूपा यतः प्रसूता जगतः प्रसूती ॥९३॥

तस्मै सुरेशोरुकिरीटनानारत्ना वृताष्टापदविष्टराय ।
भस्माङ्गरागाय नमः परस्मै यस्मात्परान्ना परमस्ति किंचित् ॥९४॥

सर्पाधिराजौषधि नाथ युद्धक्षुभ्यज्जटामण्डलगह्वराय ।
तुभ्यं नम स्सुन्दरताण्डवाय यस्मि न्निदग्ं सञ्चाविचैति सर्वम् ॥

नमामि नित्यं त्रिपुरारिमेनं यमान्तकं षण्मुखतातमीशम् ।
ललाटनेत्रार्दितपुष्पचापं विश्वं पुराणं तमसः परस्तात् ॥९६॥

मुरारिनेत्रार्चितपादपद्ममुमांघ्रिलाक्षारससक्तपाणिम् ।
नमामि देवं विषनीलकण्ठं हिरण्यदन्तं शुचिवर्णमादरात् ॥९७॥

अनन्त मव्यक्त मचिंत्य मेकं हरन्त माशाम्बर मम्बराभम् ।
अजं पुराणं प्रणमामि योऽस्य मणोरणीया न्महतो महीयान् ॥९८॥

अन्तस्थ मात्मान मजं न दृष्ट्वा भ्रमन्ति मूढा गिरिगह्वरेषु ।
पश्चादुदग्दक्षिणतः पुरस्ता दधस्विदासीदुपरि स्विदासीत् ॥९९॥

इमं नमामीश्वरमिन्दुमौळिं शिवं महानन्द मशोकदुःखम् ।
हृदम्बुजे तिष्ठति यः परात्मा परीत्य सर्वाः प्रदिशो दिशश्च ॥

रागादिकापथ्यसमुद्भवेन भग्नं भवाख्येन महामयेन ।
विलोक्य मां पालय चन्द्रमौळे भिषक्तमं त्वाभिसजां शृणोमि ॥

दुःखम्बुराशिं सुखलेशहीनमस्पृष्टपुण्यं बहुपातकं माम् ।
मृत्योः करस्थं भवसर्पभीतं पश्चात्पुरस्ता दधरादुदक्स्थात् १॥०२॥

गिरीन्द्रजाचारुमुखावलोकसुगीतया चारुतयैव दृष्ट्या ।
वयं दयापूरितयैव तूर्णमपोन नावा दुरिता तरेम ॥१०३॥

अपारसंसारसमुद्रमध्ये निमग्नमुत्क्रोशमनल्परागम् ।
मा मक्षयं पाहि महेश जुष्टमोजिष्ठया दक्षिणयैव रातिम् ॥१०४॥
स्मरन्पुरा सञ्चितपातकानि खरं यमस्याभिमुखं यमारे ।
बिभेमि मे देहि यथेष्टमायुर्यदि क्षतायुर्यदिवा परेतः ॥१०५॥
सुगन्धग स्सुन्दरभस्मगौरै रनन्तभोगै र्मृदुळै रघोरैः ।
इमं कदालिङ्गति मां पिनाकी स्थिरेभिरङ्गैः पुरुरूप उग्रः ॥१०६॥
क्रोशन्तमीशः पतितं भवाब्धौ नागास्यमण्डूकमिवातिभीतम् ।
कदानु मां रक्ष्यति देवदेवो हिरण्यरूप स्स हिरण्यसंदृक् ॥१०७॥
चारुस्मितं चन्द्रकलावतंसं गौरीकटाक्षार्हमयुग्मनेत्रम् ।
आलोकयिष्यामि कदानु देवमादित्यवर्णं तमसः परस्तात् ॥१०८॥
आगच्छतात्राशु मुमुक्षवो ये यूयं शिवं चिन्तयन्तरब्जे ।
ध्यायन्ति मुक्त्यर्थमिमं हि नित्यं वेदान्तविज्ञानसुनिश्चितार्थाः ॥
आयात यूयं भुवनाधिपत्यकामा महेशं सकृदर्चयध्वम् ।
एनं पुराभ्यर्च्य हिरण्यगर्भो भूतस्य जातः पतिरेक आसीत् ॥
ये कामयन्ते विपुलां श्रियं ते श्रीकण्ठमेनं सकृदानमन्ताम् ।
श्रीमानयं श्रीपतिवन्द्यपाद श्श्रीणा मुदारो धरुणो रयीणाम् ॥
सुपुत्त्रकामा अपि ये मनुष्या युवान मेनं गिरिशं यजन्ताम् ।
यतस्स्वयंभूर्जगतां विधाता हिरण्यगर्भस्समवर्तताग्रे ॥११२॥
अलं किमुक्तै र्बहुभि स्समीरितं समस्त मस्याश्रयणेन सिध्यति ।
पुरैन माश्रित्य हि कुम्भसम्भवो दिवा न सक्तं पलितो युवाजनि ॥

अन्यं परित्यज्य ममाक्षिभृङ्गा स्सर्वे सदैनं शिव माश्रयध्वम् ।
आमोदवानेषमृदुश्शिवोऽयं स्वादुः किलायं मधुमां उतायम् ॥११४॥

भविष्यसि, त्वं प्रतिमाविहीना विनिर्जिताऽशेषनरामरा च ।
नमोऽस्तु ते वाणि महेश मेनं स्तुहि श्रुतं गर्तसदं युवानम् ॥११५॥

यद्यन्मनश्चिन्तयसि त्वमिष्टं तत्तद्भविष्यत्यखिलं ध्रुवं ते ।
दुःखे निवृत्ते विषये कदाचि द्वक्ष्यामहे सौमनसाय रुद्रम् ॥११६॥

अज्ञानयोगा दपचारकर्म यत्पूर्वमस्माभि रनुष्ठितं ते ।
तद्देवसोढ्वा सकलं दयाळो पितेव पुत्रान् प्रति नो जुषस्व ॥

संसाराख्यक्रुद्धसर्पेण तीव्रै रागद्वेषोन्मादलोभादिदन्तैः ।
दष्टं दृष्ट्या मां दयालुः पिनाकी देवस्त्राता त्रायतामप्रयच्छन् ॥

इत्युक्त्वान्ते यत्समाधेर्न मन्त्रो रुद्रं ध्यात्वा यान्ति जन्माहिदष्टाः ।
सन्तो नीलग्रीवमन्त्रात्मनाहं तत्त्वायामि ब्रह्मणा वन्दमानः ॥

भवातिभीषणज्वरेण पीडिता न्मक्षाभया
नशेषपातकालयान दूरकाललोचनान् ।
अनाथनाथ ते करेण भेषजेन कालह-
न्नुदूषणोवसो महेमृशस्व शूर राधसे                                  ॥१२०॥

जयेम येन सर्वमेतदिष्ट मष्टदिग्गतं
भुवः स्थलं नभः स्थलं दिवःस्थलं च तद्गतम् ।
य एष सर्वदेवदानवानतस्सभापति
र्नमो ददा तुरं रयिं रयिं पिशङ्गसन्धृतम्                                ॥१२१॥

नमो भवाय ते हराय भूतिभासितो
रंसे नमो भवारये भवातिभीतिभङ्गदायिने ।
नमश्शिवाय विश्वपाय शाश्वताय शूलिने
नयस्य हन्यते सखा न जीयते कदाचन ॥१२२॥

सुरपतिपतये नमो नमः क्षितिपतिपतये नमो नमः ।
ज्यापतिपतये नमो नमोऽम्बिकापतय उमापतये पशुपतये नमो नमः॥

विनायकं वन्दनमस्तकाहति प्रणादसङ्घुष्टसमस्तविष्टपम् ।
नमामि नित्यं प्रणतार्तिनाशनं कविं कवीना मुपमश्रवस्तमम् ॥१२४॥

देवा युद्धे यागे विप्राः स्वीयां सिद्धिं ह्वायं ह्वायं ।
यं सिद्ध्यन्ति स्कन्दं वन्दे सुब्रह्मण्योंमंसुब्रह्मण्योम् ॥१२५॥

नमश्शिवायै जगदम्बिकायै शिवप्रियायै शिववि्ग्रहायै ।
समुद्रभूवाद्रिपते स्सुतायै चतुष्कवर्दायुवतिस्सुपेशाः ॥१२६॥

हिरण्यवर्णां मणिनूपुरांघ्रिं प्रसन्नवक्त्रांशुकपद्महस्ताम् ।
विशालनेत्रां प्रणमामि गौरीं वचो विदं वाच मुदीरयन्तीम् ॥

नमामि मेनातनयाममेयमुमामिमां मानवतीं च मान्याम् ।
करोति या भूतिसितौ स्तनौ द्वौ प्रियं सखायं परिषस्वजाना ॥

कांता मिमां कांतनितांतकांतिभ्रांता मुमां तां नतहर्यजेंद्राम् ।
नकोस्मियास्ते गिरिशस्य पार्श्वे विश्वानि देवी भुवनाभिचक्ष्या ॥

वंदे गौरीं तुंगपीनस्तनीं तां चन्द्रापीडां मृष्टसर्वाङ्गरागाम् ।
एषा देवी प्राणिना मंतरात्मा देवंदेवं राधसे चोदयंतीम् ॥१३०॥

एनां वंदे दीनरक्षाविनोदा मेनां कन्यामानतानन्ददात्रीं ।
या विद्यानां मङ्गळानां च वाचा मेषा नेत्री राधसस्सूनृतानाम् ॥

भवानुभूतो रुभयापहर्त्रीं भवानुभागाभरणैकभोगी ।
धियं परा देहि शिवप्रिये मे ययातिविश्वा दुरिता तरेम ॥१३२॥

शिवे कथं त्वं स्तुतिभिस्तु गीयसे जगत्रयी केळिरयं शिवः पतिः ।
हरिस्तु दासोऽनुचरेन्दिरा शची सरस्वती वा सुभगागादिर्वसु ॥

इमं स्तवं जैमिनिना समीरितं द्विजोत्तमो यः पठतीशभक्तितः ।
तमिष्टवाक्सिद्धि मतिश्रियः परं परिष्वजंते जनयो यथामतिम् ॥

महीपति र्यस्तु युयुत्सुरादरा दिदं पठत्याशु तथैव सादरात् ।
प्रयान्ति वा शीघ्र मथान्तकं भियं परं दधाना हृदयेषु शत्रवः ॥

लभन्ते पठन्तो मतिं बुद्धिकामा लभन्ते चिरायु स्तथाऽऽयुष्यकामाः ।
लभन्ते तथैव श्रियं पुष्टिकामा लभन्ते ह पुत्रान् लभन्ते ह पौत्रान्॥

इति श्रीजैमिनिमहर्षिणा प्रणीतो वेदपादस्तव स्सम्पूर्णः

## ॥ शिवमहिम्नःस्तोत्रम् ॥

पुष्पदन्त उवाच—

महिम्नः पारं ते परमविदुषो यद्यसदृशी
स्तुतिर्ब्रह्मादीनामपि तदवसन्नास्त्वयि गिरः ।
अथावाच्यः सर्वः स्वमतिपरिणामावधि गृणन्
ममाप्येष स्तोत्रे हर निरपवादः परिकरः ॥१॥

अतीतः पंथानं तव च महिमा वाङ्मनसयो
रतद्व्यावृत्त्या यं चकितमभिधत्ते श्रुतिरपि ।
स कस्य स्तोतव्यः कतिविधगुणः कस्य विषयः
पदे त्वर्वाचीने पतति न मनः कस्य न वचः ॥२॥

मधुस्फीता वाचः परममममृतं निर्मितवत
स्तवब्रह्मन्किं वागपि सुरगुरोर्विस्मयपदम् ।
मम त्वेतां वाणीं गुणकथनपुण्येन भवतः
पुनामीत्यर्थेऽस्मिन् पुरमथन बुद्धिर्व्यवसिता ॥३॥

तवैश्वर्यं यत्तज्जगदुदयरक्षाप्रळयकृ-
त्त्रयीवस्तु व्यस्तं तिसृषु गुणभिन्नासु तनुषु ।
अभव्यानामस्मिन्वरद रमणीयामरमणीं
विहन्तुं व्याक्रोशीं विदधत इहैके जडधियः ॥४॥

किमीहः किंकायः स खलु किमुपायस्त्रिभुवनं
किमाधारो धाता सृजति किमुपादान इति च ।
अतर्क्यैश्वर्ये त्वय्यनवसरदुःस्थो हतधियः
कुतर्कोऽयं कांश्चिन्मुखरयति मोहाय जगतः ॥५॥

अजन्मानो लोकाः किमवयववन्तोऽपि जगता
मधिष्ठातारं किं भवविधिरनादृत्य भवति ।
अनीशो वा कुर्याद्भुवनजनने कः परिकरो
यतो मन्दास्त्वां प्रत्यमरवर संशेरत इमे ॥६॥

त्रयी सांख्यं योगः पशुपतिमतं वैष्णवमिति
प्रभिन्ने प्रस्थाने परमिदमदः पथ्यमिति च ।
रुचीनां वैचित्र्यादृजुकुटिलनानापथजुषां
नृणामेको गम्यस्त्वमसि पयसामर्णव इव ॥७॥

महोक्षः खट्वांगं परशुरजिनं भस्म फणिनः
कपालं चेतीयत्तव वरद तंत्रोपकरणम् ।
सुरास्तां तामृद्धिं दधति तु भवद्भ्रूप्रणिहितां
नहि स्वात्मारामं विषयमृगतृष्णा भ्रमयति ॥८॥

ध्रुवं कश्चित्सर्वं सकलमपरस्त्वध्रुवमिदं
परो ध्रौव्याध्रौव्ये जगति गदति व्यस्तविषये ।
समस्तेऽप्येतस्मिन्पुरमथन तैर्विस्मित इव
स्तुवञ्जिह्रेमि त्वां न खलु ननु धृष्टा मुखरता ॥९॥

तवैश्वर्यं यत्नाद्यदुपरि विरिंचो हरिरधः
परिच्छेत्तुं यातावनलमनलस्कंधवपुषः ।
ततो भक्तिश्रद्धाभरगुरुगृणद्भ्यां गिरिश यत्
स्वयं तस्थे ताभ्यां तव किमनुवृत्तिर्न फलति ॥१०॥

अयत्नादापाद्य त्रिभुवनमवैरव्यतिकरं
दशास्यो यद्बाहूनभृत रणकंडूपरवशान् ।
शिरःपद्मश्रेणीरचितचरणांभोरुहबलेः
स्थिरायास्त्वद्भक्तेस्त्रिपुरहर विस्फूर्जितमिदम् ॥११॥

अमुष्य त्वत्सेवासमधिगतसारं भुजवनं
बलात्कैलासेऽपि त्वदधिवसतौ विक्रमयतः ।
अलभ्या पातालेऽप्यलसचलितांगुष्ठशिरसि
प्रतिष्ठा त्वय्यासीद्ध्रुवमुपचितो मुह्यति खलः ॥१२॥

यदृद्धिं सुत्राम्णो वरद परमोच्चैरपि सती-
मधश्चक्रे बाणः परिजनविधेयत्रिभुवनः ।
न तच्चित्रं तस्मिन्वरिवसितरि त्वच्चरणयो-
र्न कस्या उन्नत्यै भवति शिरसस्त्वय्यवनतिः ॥१३॥

अकांडब्रह्मांडक्षयचकितदेवासुरकृपा-
विधेयस्याऽऽसीद्यस्त्रिनयन विषं संहृतवतः ।
स कल्माषः कंठे तव न कुरुते न श्रियमहो
विकारोऽपि श्लाघ्यो भुवनभयभङ्गव्यसनिनः ॥१४॥

असिद्धार्था नैव क्वचिदपि सदेवासुरनरे
निवर्तंते नित्यं जगति जयिनो यस्य विशिखाः ।
स पश्यन्नीश त्वामितरसुरसाधारणमभूत्
स्मरः स्मर्तव्यात्मा न हि वशिषु पथ्यः परिभवः ॥१५॥

मही पादाघाताद्व्रजति सहसा संशयपदं
पदं विष्णोर्भ्राम्यद्भुजपरिघरुग्णग्रहगणम् ।
मुहुर्द्यौर्दौस्थ्यं यात्यनिभृतजटाताडिततटा
जगद्रक्षायै त्वं नटसि ननु वामैव विभुता ॥१६॥

वियद्व्यापी तारागणगुणितफेनोद्गमरुचिः
प्रवाहो वारां यः पृषतलघुदृष्टः शिरसि ते ।
जगद्द्वीपाकारं जलधिवलयं तेनकृतमि-
त्यनेनैवोन्नेयं धृतमहिम दिव्यं तव वपुः ॥१७॥

रथः क्षोणी यन्ता शतधृतिरगेंद्रो धनुरथो
रथांगे चन्द्रार्कौ रथचरणपाणिः शर इति ।
दिधक्षोस्ते कोऽयं त्रिपुरतृणमाडंबराविधि-
र्विधेयैः क्रीडंत्यो न खलु परतन्त्रः प्रभुधियः ॥१८॥

हरिस्ते साहस्रं कमलबलिमाधाय पदयो-
र्यदेकोने तस्मिन्निजमुदहरन्नेत्रकमलम् ।
गतो भक्त्युद्रेकः परिणतिमसौ चक्रवपुषा
त्रयाणां रक्षायै त्रिपुरहर जागर्ति जगताम् ॥१९॥

क्रतौ सुप्ते जाग्रत्त्वमसि फलयोगे क्रतुमतां
क्व कर्म प्रध्वस्तं फलति पुरुषाराधानमृते ।
अतस्त्वां संप्रेक्ष्य क्रतुषु फलदानप्रतिभुवं
श्रुतौ श्रद्धां बध्वा दृढपरिकरः कर्मसु जनः ॥२०॥

क्रियादक्षो दक्षः क्रतुपतिरधीशस्तनुभृता-
मृषीणामार्त्विज्यं शरणद सदस्याः सुरगणाः ।
क्रतुभ्रेषस्त्वत्तः क्रतुफलविधानव्यसनिनो
ध्रुवं कर्तुः श्रद्धाविधुरमभिचाराय हि मखाः ॥२१॥

प्रजानाथं नाथ प्रसभमभिकं स्वां दुहितरं
गतां रोहिद्भूतां रिरमयिषुमृष्यस्य वपुषा ।
धनुःपाणेर्यातं दिवमपि सपत्राकृतममुं
त्रसंतं तेऽद्यापि त्यजति न मृगव्याधरभसः ॥२२॥

स्वलावण्याशंसा धृतधनुषमह्नाय तृणव-
त्पुरः प्लुष्टं दृष्ट्वा पुरमथन पुष्पायुधमपि ।
यदि स्त्रैणं देवी यमनिरतदेहार्धघटना-
दवैति त्वामद्धा बत वरद मुग्धा युवतयः ॥२३॥

श्मशानेष्वाक्रीडा स्मरहर पिशाचाः सहचरा-
श्चिताभस्मालेपः स्रगपि नृकरोटीपरिकरः ।
अमङ्गल्यं शीलं तव भवतु नामैवमखिलं
तथाऽपि स्मर्तॄणां वरद परमं मङ्गलमसि ॥२४॥

मनः प्रत्यक्चित्ते सविधमवधायात्तमरुतः
प्रहृष्यद्रोमाणः प्रमदसलिलोत्सङ्गितदृशः ।
यदालोक्याह्लादं ह्रद इव निमज्यामृतमये
दधत्यंतस्तत्त्वं किमपि यमिनस्तत्किल भवान् ॥२५॥

त्वमर्कस्त्वं सोमस्त्वमसि पवनस्त्वं हुतवह-
स्त्वमापस्त्वं व्योम त्वमु धरणिरात्मा त्वमिति च ।
परिच्छिन्नामेवं त्वयि परिणता बिभ्रति गिरं
न विद्मस्तत्तत्त्वं वयमिह तु यत्त्वं न भवसि ॥२६॥

त्रयीं तिस्रो वृत्तीस्त्रिभुवनमथो त्रीनपि सुरा
नकाराद्यैर्वर्णैस्त्रिभिरभिदधत्तीर्णविकृति ।
तुरीयं ते धाम ध्वनिभिरवरुंधानमणुभिः
समस्तव्यस्तं त्वां शरणद गृणात्योमिति पदम् ॥२७॥

भवः शर्वो रुद्रः पशुपतिरथोग्रः सह महां-
स्तथा भीमेशानाविति यदभिधानाष्टकमिदम् ।
अमुष्मिन्प्रत्येकं प्रविचरति देव श्रुतिरपि
प्रियायास्मै धाम्ने प्रविहितनमस्योऽस्मि भवते ॥२८॥

नमो नेदिष्ठाय प्रियदव दविष्ठाय च नमो
नमः क्षोदिष्ठाय स्मरहर महिष्ठाय च नमः ।
नमो वर्षिष्ठाय त्रिनयन यविष्ठाय च नमो
नमः सर्वस्मै ते तदिदमिति शर्वाय च नमः ॥२९॥

बहुलरजसे विश्वोत्पत्तौ भवाय नमो नमः
प्रबलतमसे तत्संहारे हराय नमो नमः ।
जनसुखकृते सत्त्वोद्रिक्तौ मृडाय नमो नमः
प्रमहसि पदे निस्त्रैगुण्ये शिवाय नमो नमः ॥३०॥

कृशपरिणति चेतः क्लेशवश्यं क्व चेदं
क्व च तव गुणसीमोल्लंघिनी शश्वदृद्धिः
इति चकितममंदीकृत्य मां भक्तिराधा
द्वरद चरणयोस्ते वाक्यपुष्पोपहारम् ॥३१॥

असितगिरिसमं स्यात्कज्जलं सिंधुपात्रे
सुरतरुवरशाखा लेखनी पत्रमुर्वी ।
लिखति यदि गृहीत्वा शारदा सार्वकालं
तदपि तव गुणानामीश पारं न याति ॥३२॥

असुरसुरमुनीन्द्रैरार्चितस्येंदुमौले
र्ग्रथितगुणमहिम्नो निर्गुणस्येश्वरस्य ।
सकलगुणवरिष्ठः पुष्पदंताभिधानो
रुचिरमलघुवृत्तैः स्तोत्रमेतच्चकार ॥३३॥

अहरहरनवद्यं धूर्जटेः स्तोत्रमेतत्
पठतिपरमभक्त्या शुद्धचित्तः पुमान्यः ।
स भवति शिवलोके रुद्रतुल्यस्तथाऽत्र
प्रचुरतरधनायुःपुत्रवान्कीर्तिमांश्च ॥३४॥

महेशान्नापरो देवो महिम्नो नापरा स्तुतिः ।
अघोरान्नापरो मन्त्रो नास्ति तत्त्वं गुरोः परम् ॥३५॥

दीक्षादानं तपस्तीर्थं ज्ञानं यागादिकाः क्रियाः ।
महिम्नस्तवपाठस्य कलां नार्हति षोडशीम् ॥३६॥

कुसुमदशननामा सर्वगन्धर्वराजः
शशिधरवरमौलेर्देवदेवस्य दासः ।
स गुरुनिजमहिम्नो भ्रष्ट एवास्य रोषात्
स्तवनमिदमकार्षीद्दिव्यदिव्यं महिम्नः ॥३७॥

सुरवरमुनिपूज्यं स्वर्गमोक्षैकहेतुं
पठति यदि मनुष्यः प्रांजलिर्नान्यचेताः ।
व्रजति शिवसमीपं किंनरैः स्तूयमानः
स्तवनमिदममोघं पुष्पदन्तप्रणीतम् ॥३८॥

श्रीपुष्पदन्तमुखपङ्कजनिर्गतेन स्तोत्रेण किल्बिषहरेण हरप्रियेण ।
कण्ठस्थितेन पठितेन समाहितेन, सुप्रीणितो भवति भूतपतिर्महेशः ॥

इत्येषा वाङ्मयी पूजा श्रीमच्छङ्करपादयोः ।
अर्पिता तेन देवेशः प्रीयतां मे सदाशिवः ॥४०॥

इति श्रीपुष्पदन्तविरचितं शिवमहिम्नःस्तोत्रं सम्पूर्णम्

## ॥ चन्द्रशेखराष्टकम् ॥

चन्द्रशेखर चन्द्रशेखर चन्द्रशेखर पाहिमाम् ।
चन्द्रशेखर चन्द्रशेखर चन्द्रशेखर रक्ष माम् ॥१॥

रत्नसानुशरासनं रजताद्रिशृङ्गनिकेतनं
सिंजिनीकृतपन्नगेश्वरमच्युताननसायकम् ।
क्षिप्रदग्धपुरत्रयं त्रिदिवालयैरभिवन्दितं
चन्द्रशेखरमाश्रये मम किं करिष्यति वै यमः ॥२॥

पञ्चपादपपुष्पगन्धपदाम्बुजद्वयशोभितं
भाललोचनजातपावकदग्धमन्मथविग्रहम् ।
भस्मदिग्धकलेबरं भवनाशनं भवमव्ययं चन्द्रशेखर० ॥३॥

मत्तवारणमुख्यचर्मकृतोत्तरीयमनोहरं
पङ्कजासनपद्मलोचनपूजिताङ्घ्रिसरोरुहम् ।
देवसिंधुतरङ्गशीकरसिक्तशुभ्रजटाधरं चन्द्रशेखर० ॥४॥

यक्षराजसखं भगाक्षहरं भुजङ्गविभूषणं
शैलराजसुतापरिष्कृतचारुवामकलेबरम् ।
क्ष्वेडनीलगलं परश्वथधारिणं मृगधारिणं चन्द्रशेखर० ॥५॥

कुण्डलीकृतकुण्डलेश्वरकुण्डलं वृषवाहनं
नारदादिमुनीश्वरस्तुतवैभवं भुवनेश्वरम् ।
अन्धकान्धकमाश्रितामरपादपं शमनान्तकं चन्द्रशेखर० ॥६॥

भेषजं भवरोगिणामखिलापदामपहारिणं
दक्षयज्ञविनाशनं त्रिगुणात्मकं त्रिविलोचनम् ।
भक्तिमुक्तिफलप्रदं सकलाघसङ्घनिबर्हणं चन्द्रशेखर० ॥७॥

भक्तवत्सलमर्चितं निधिमक्षयं हरिदंबरं
सर्वभूतपतिं परात्परमप्रमेयमनुत्तमम् ।
सोमवारिनभोहुताशनसोमपानिलखाकृतिं चन्द्रशेखर० ॥८॥

विश्वसृष्टिविधायिनं पुनरेव पालनतत्परं
संहरंतमपि प्रपञ्चमशेषलोकनिवासिनम् ।
क्रीडयन्तमहर्निशं गणनाथयूथसमन्वितं चन्द्रशेखर० ॥९॥

मृत्युभीतमृकंडुसूनुकृतस्तवं शिवसन्निधौ
यत्रकुत्र च यः पठेन्नहि तस्य मृत्युभयं भवेत् ।

पूर्णमायुररोगितामखिलार्थसंपदमादरं
चन्द्रशेखर एव तस्य ददाति मुक्तिमयत्नतः ॥१०॥

॥ इति श्रीचन्द्रशेखराष्टकस्तोत्रं संपूर्णम् ॥

## ॥ उपमन्युकृतशिवस्तोत्रम् ॥

जय शङ्कर पार्वतीपते मृड शम्भो शशिखण्डमण्डन ।
मदनान्तक भक्तवत्सल प्रियकैलास दयासुधाम्बुधे ॥१॥

सदुपायकथास्वपण्डितो हृदये दुःखशरेण खण्डितः ।
शशिखण्डशिखण्डमण्डनं शरणं यामि शरण्यमीश्वरम् ॥२॥

महतः परितः प्रसर्पतस्तमसो दर्शनभेदिनो भिदे ।
दिननाथ इव स्वतेजसा हृदयव्योम्नि मनागुदेहि नः ॥३॥

न वयं तव चर्मचक्षुषा पदवीमप्युपवीक्षितुं क्षमाः ।
कृपयाऽभयदेन चक्षुषा सकलेनेश विलोकयाशु नः ॥४॥

त्वदनुस्मृतिरेव पावनी स्तुतियुक्ता न हि वक्तुमीश सा ।
मधुरं हि पयः स्वभावतो ननु कीदृक्सितशर्करान्वितम् ॥५॥

सविषोऽप्यमृतायते भवाञ्छवमुण्डाभरणोऽपि पावनः ।
भव एव भवान्तकः सतां समदृष्टिर्विषमेक्षणोऽपि सन् ॥६॥

अपि शूलधरो निरामयो दृढवैराग्यरतोऽपि रागवान् ।
अपि भैक्ष्यचरो महेश्वरश्चरितं चित्रमिदं हि ते प्रभो ॥७॥

वितरत्यभिवांछितं दृशा परिदृष्टः किल कल्पपादपः ।
हृदये स्मृत एव धीमते नमतेऽभीष्टफलप्रदो भवान् ॥८॥

सहसैव भुजङ्गपाशवान्विनिगृह्णाति न यावदन्तकः ।
अभयं कुरु तावादाशु मे गतजीवस्य पुनः किमौषधैः ॥९॥

सविषैरिव भीमपन्नगैर्विषयैरेभिरलं परिक्षतम् ।
अमृतैरिव सम्भ्रमेण मामभिषिंचाशु दयावलोकनैः ॥१०॥

मुनयो बहवोऽद्य धन्यतां गमिताः स्वाभिमतार्थदर्शिनः ।
करुणाकर येन तेन मामवसन्नं ननु पश्य चक्षुषा ॥११॥

प्रणमाम्यथ यामि चापरं शरणं कं कृपणाभयप्रदम् ।
विरहीव विभो प्रियामयं परिपश्यामि भवन्मयं जगत् ॥१२॥

बहवो भवताऽनुकंपिताः किमितीशान न मानुकम्पसे ।
दधता किमु मंदराचलं परमाणुः कमठेन दुर्धरः ॥१३॥

अशुचिं यदि मानुमन्यसे किमिदं मूर्ध्नि कपालदाम ते ।
उत शाठ्यमसाधुसंगिनं विषलक्ष्मासि न किं द्विजिह्वधृक् ॥१४॥

क्व दृशं विदधामि किं करोम्यनुतिष्ठामि कथं भयाकुलः ।
क्व नु तिष्ठसि रक्ष रक्ष मामयि शम्भो शरणागतोऽस्मि ते ॥१५॥

विलुठाम्यवनौ किमाकुलः किमुरो हन्मि शिरश्छिनद्मि वा ।
किमु रोदिमि रारटीमि किं कृपणं मां न यदीक्षसे प्रभो ॥१६॥

शिव सर्वग शर्व शर्मदं प्रणतो देव दयां कुरुष्वमे ।
नम ईश्वर नाथदिक्पते पुनरेवेश नमो नमोऽस्तु ते ॥१७॥

शरणं तरुणेंदुशेखरः शरणं मे गिरिराजकन्यका ।
शरणं पुनरेव तावुभौ शरणं नान्यदुपैमि दैवतम् ॥१८॥

उपमन्युकृतं स्तवोत्तमं जपतः शंभुसमीपवर्तिनः ।
अभिवांछितभाग्यसंपदः परमायुः प्रददाति शङ्करः ॥१९॥

उपमन्युकृतं स्तवोत्तमं प्रजपेद्यस्तु शिवस्य संनिधौ ।
शिवलोकमवाप्य सोऽचिरात्सह तेनैव शिवेन मोदते ॥२०॥

इत्युपमन्युकृतं शिवस्तोत्रं सम्पूर्णम् ॥

---

## ॥ शिवभुजङ्गम् ॥

गलद्दानगण्डं मिलद्भृङ्गषंडं चलच्चारुशुण्डं जगत्त्राणशौण्डम् ।
लसद्दन्तकाण्डं विपद्भङ्गचण्डं शिवप्रेमपिण्डं भजे वक्रतुण्डम् ॥१॥

अनाद्यन्तमाद्यं परंतत्त्वमर्थं चिदाकारमेकं तुरीयं त्वमेयम् ।
हरिब्रह्ममृग्यं परब्रह्मरूपं मनोवागतीतं महः शैवमीडे ॥२॥

स्वशक्त्यादिशक्त्यन्तसिंहासनस्थं मनोहारिसर्वांगरत्नादिभूषम् ।
जटाहीन्दुगङ्गास्थिशम्याकमौलिं परं शक्तिमित्रं नुमः पञ्चवक्त्रम् ॥

शिवेशानतत्पूरुषाघोरवामादिभिर्ब्रह्मभिः ह्रन्मुखैः षड्भिरङ्गैः ।
अनौपम्यषट्त्रिंशतं तत्त्वविद्यामतीतं परं त्वां कथं वेत्ति को वा॥४॥

प्रवालप्रवाहप्रभाशोणमर्धं मरुत्वन्मणिश्रीमहःश्याममर्धम् ।
गुणस्यूतमेकं वपुश्चैकमन्तः स्मरामि स्मरापत्तिसम्पत्तिहेतुम् ॥५॥

स्वसेवासमायातदेवासुरेंद्रानमन्मौलिमन्दारमालाभिषिक्तम् ।
नमस्यामि शंभो पदांभोरुहं ते भवांभोधिपोतं भवानीविभाव्यम् ॥
जगन्नाथ मन्नाथ गौरीसनाथ प्रपन्नानुकंपिन्विपन्नार्तिहारिन् ।
महःस्तोममूर्ते समस्तैकबन्धो नमस्ते नमस्ते पुनस्ते नमोऽस्तु ॥७॥
महादेव देवेश देवादिदेव स्मरारे पुरारे यमारे हरेति ।
ब्रुवाणः स्मरिष्यामि भक्त्या भवन्तं ततो मे दयाशील देव प्रसीद ॥
विरूपाक्ष विश्वेशविश्वादिकेश त्रयीमूल शंभो शिव त्र्यम्बक त्वम् ।
प्रसीद स्मर त्राहि पश्याव पुष्य समस्वाप्रहीति क्षपा हि क्षिपामः॥
त्वदन्यः शरण्यः प्रपन्नस्य नेति प्रसीद स्मरन्नेव हन्यास्तु दैन्यम् ।
न चेत्ते भवेद्भक्तवात्सल्यहानिस्ततो मे दयालो दयां संनिधेहि ॥
अयं दानकालस्त्वहं दानपात्रं भवान्नाथ दाता त्वदन्यं न याचे ।
भवद्भक्तिमेव स्थिरां देहिमह्यं कृपाशील शंभो कृतार्थोऽस्मि तस्मात् ॥
पशुं वेत्सि चेन्मां त्वमेवाधिरूढं कलङ्कीति वा मूर्ध्नि धत्से त्वमेव ।
द्विजिह्वः पुनः सोऽपि ते कण्ठभूषा त्वदङ्गीकृताः शर्व सर्वेऽपि धन्याः॥
न शक्नोमि कर्तुं परद्रोहलेशं कथं प्रीयसे त्वं न जाने गिरीश ।
तदा हि प्रसन्नोऽसि कस्यापि कान्तासुतद्रोहिणो वा पितृद्रोहिणो वा॥
स्तुतिं ध्यानमर्चां यथावद्विधातुं भजन्नप्यजानन्महेशावलंबे ।
त्रसन्तं सुतं त्रातुमग्रे मृकण्डोर्यमप्राणनिर्वापणं त्वत्पदाब्जम् ॥१४॥
शिरो दृष्टि हृद्रोग शूलप्रमेह ज्वरार्शोजरायक्ष्म हिक्का विषार्तान् ।
त्वमाद्यो भिषग्भेषजं भस्म शंभो त्वमुल्लाघयास्मान्वपुर्लाघवाय ॥

दरिद्रोऽस्म्यभद्रोऽस्मि भग्नोऽस्मि दूये
विषण्णोऽस्मि सन्नोऽस्मि भिन्नोऽस्मि चाहम् ।
भवान्प्राणिनामन्तरात्मासि शंभो
ममाधिं न वेत्सि प्रभो रक्ष मां त्वम्  ॥१६॥

त्वदक्ष्णोः कटाक्षः पतेत्त्र्यक्ष यत्र
क्षणं क्ष्मा च लक्ष्मीः स्वयं तं वृणीते ।
किरीटस्फुरच्चामरच्छत्रमाला
कलाची गज क्षामभूषाविशेषैः  ॥१७॥

भवान्यै भवायापि मात्रे च पित्रे
मृडान्यै मृडायाप्यघघ्न्यै मखघ्ने ।
शिवाङ्ग्यै शिवाङ्गाय कुर्मः शिवायै
शिवायाम्बिकायै नमस्त्र्यम्बकाय  ॥१८॥

भवद्गौरवं मल्लघुत्वं विदित्वा प्रभो रक्षकारुण्यदृष्ट्यानुगं माम् ।
शिवात्मानुभावस्तुतावक्षमोऽहं स्वशक्त्याकृतं मेऽपराधं क्षमस्व ॥

यदा कर्णरन्ध्रं व्रजेत्कालवाहद्विषत्कण्ठ घण्टाघणात्कारनादः ।
वृषाधीशमारुह्य देवौपवाह्यं तदा वत्स मा भीरिति प्रीणय त्वम् ॥

यदा दारुणा भाषणा भीषणा मे भविष्यन्त्युपान्ते कृतान्तस्य दूताः ।
तदा मन्मनस्त्वत्पदाम्भोरुहस्थं कथं निश्चलं स्यान्नमस्तेऽस्तु शंभो ॥

यदा दुर्निवारव्यथोऽहं शयानो लुठन्निःश्वसन्निःसृता व्यक्तवाणिः ।
तदा जह्नुकन्याजलालंकृतं ते जटामण्डलं मन्मनोमन्दिरं स्यात् ॥

यदा पुत्रमित्रादयो मत्सकाशे रुदन्त्यस्य हा कीदृशीयं दशेति ।
तदा देवदेवेश गौरीश शंभो नमस्ते शिवायेत्यजस्रं ब्रवाणि ॥२३॥
यदा पश्यतां मामसौ वेत्ति नास्मानयं श्वास एवेति वाचो भवेयुः ।
तदा भूतिभूषं भुजङ्गावनद्धं पुरारे भवन्तं स्फुटं भावयेयम् ॥२४॥
यदा यातनादेह सन्देहवाही भवेदात्मदेहे न मोहो महान्मे ।
तदा काशशीतांशु सङ्काशमीश स्मरारे वपुस्ते नमस्ते स्मराणि॥२५॥
यदा पारमच्छाय मस्थानमद्भिर्जनैर्वा विहीनं गमिष्यामि मार्गम् ।
तदा तं निरुन्धन्कृतान्तस्य मार्गं महादेव मह्यं मनोज्ञं प्रयच्छ ॥
यदा रौरवादि स्मरन्नेव भीत्या व्रजाम्यत्र मोहं महादेव घोरम् ।
तदा मामहो नाथ तस्तारयिष्यत्यनाथं पराधीनमर्धेन्दुमौळे ॥२७॥
यदा श्वेतपत्रायतालङ्घ्य शक्तैः कृतान्ताद्भयं भक्तवात्सल्यभावात् ।
तदा पाहि मां पार्वतीवल्लभान्यं न पश्यामि पातारमेतादृशं मे ॥
इदानीमिदानीं मृतिर्मे भवित्रीत्यहो सन्ततं चिन्तया पीडितोऽस्मि ।
कथं नाम मा भून्मृतौ भीतरेषा नमस्ते गतीनां गते नीलकण्ठ ॥
अमर्यादमेवाह मा बालवृद्धं हरन्तं कृतान्तं समीक्ष्यास्मि भीतः ।
मृतौ तावकांघ्र्यब्जदिव्यप्रसादाद्भवानीपते निर्भयोऽहं भवानि ॥
जराजन्म गर्भाधिवासादिदुःखान्यसह्यानि जह्यां जगन्नाथदेव ।
भवन्तं विनामे गतिर्नैव शंभो दयालो न जागर्ति किं वा दया ते ॥
शिवायेति शब्दो नमःपूर्व एष स्मरन्मुक्तिकृन्मृत्युहा तत्त्ववाची ।
महेशान मा गान्मनस्तो वचस्तः सदा मह्यमेतत्प्रदानं प्रयच्छ ॥

त्वमत्यम्ब मां पश्य शीतांशुमौलिप्रिये भेषजं त्वं भवव्याधि शान्तौ ।
बहुक्लेशभाजं पदाम्भोजपोते भवाब्धौ निमग्नं नयस्वाद्यपारम् ॥

अनुद्यल्ललाटाक्षिवह्निप्ररोहैरवामस्फुरच्चारु वामोरुशोभैः ।
अनङ्गभ्रमद्भोगिभूषाविशेषैः रचन्द्रार्धचूडैरलं दैवतैर्नः ॥३४॥

अकण्ठे कलङ्कादनङ्गे भुजङ्गादपाणौ कपालादभालेऽनलाक्षात् ।
अमौलौ शशाङ्कादवामे कलत्रादहं देवमन्यं न मन्ये न मन्ये ॥३५॥

महादेव शंभो गिरीश त्रिशूलिं स्त्वयीदं समस्तं विभातीति यस्मात् ।
शिवादन्यथा दैवतं नाभिजाने शिवोऽहं शिवोऽहं शिवोऽहं ॥३६॥

यतोऽजायतेदं प्रपञ्चं विचित्रं स्थितिं याति यस्मिन्यदेकान्तमन्ते ।
स कर्मादिहीनः स्वयं ज्योतिरात्मा शिवोऽहं शिवोऽहं शिवोऽहं ॥

किरीटे निशेशो ललाटे हुताशो भुजे भोगिराजो गले कालिमा च ।
तनौ कामिनी यस्य तत्तुल्यदेवं न जाने न जाने न जाने ॥३८॥

अनेन स्तवेनादरादम्बिकेशं परां भक्ति मासाद्य यं ये नमन्ति ।
मृतौ निर्भयास्ते जनास्तं भजन्ते हृदम्भोजमध्ये सदासीनमीशम् ॥

भुजङ्गप्रियाकल्प शंभो मयैवं भुजङ्गप्रयातेन वृत्तेन क्लृप्तम् ।
नरस्स्तोत्रमेतत्पठित्वोरुभक्त्या सुपुत्रायुरारोग्यमैश्वर्यमेति ॥४०॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीमच्छङ्करभगवतः कृतौ
॥ शिवभुजङ्गं संपूर्णम् ॥

## ॥ अथ शिवपञ्चाक्षरस्तोत्रम् ॥

नागेन्द्रहाराय त्रिलोचनाय भस्माङ्गरागाय महेश्वराय ।
नित्याय शुद्धाय दिगम्बराय तस्मै नकाराय नमः शिवाय ॥१॥

मन्दाकिनीसलिलचन्दनचर्चिताय नंदीश्वरप्रमथनाथमहेश्वराय ।
मन्दारमुख्यबहुपुष्पसुपूजिताय तस्मै मकाराय नमः शिवाय ॥२॥

शिवाय गौरीवदनाब्जवृन्दसूर्याय दक्षाध्वरनाशकाय ।
श्रीनीलकण्ठाय वृषध्वजाय तस्मै शिकाराय नमः शिवाय ॥३॥

वसिष्ठकुम्भोद्भवगौतमार्यमुनीन्द्रदेवार्चितशेखराय ।
चन्द्रार्कवैश्वानरलोचनाय तस्मै वकाराय नमः शिवाय ॥४॥

यक्षस्वरूपाय जटाधराय पिनाकहस्ताय सनातनाय ।
दिव्याय देवाय दिगम्बराय तस्मै यकाराय नमः शिवाय ॥५॥

पञ्चाक्षरमिदं पुण्यं यः पठेच्छिवसन्निधौ ।
शिवलोकमवाप्नोति शिवेन सह मोदते ॥६॥

॥ इति श्रीमच्छङ्कराचार्यविरचितं शिवपञ्चाक्षरस्तोत्रं संपूर्णम् ॥

---

## ॥ अथ शिवापराधक्षमापनस्तोत्रम् ॥

आदौ कर्मप्रसङ्गात् कलयति कलुषं मातृकुक्षौ स्थितं मां
विण्मूत्रामेध्यमध्ये क्वथयति नितरां जाठरो जातवेदाः ।
यद्यद्वै तत्र दुःखं व्यथयति नितरां शक्यते केन वक्तुं
क्षन्तव्यो मेऽपराधः शिव शिव शिव भोः श्रीमहादेव शंभो ॥१॥

बाल्ये दुःखातिरेकान्मललुलितवपुः स्तन्यपाने पिपासा
नो शक्तश्चेन्द्रियेभ्यो भवगुणजनिता जन्तवो मां तुदन्ति ।
नानारोगादिदुःखाद्रुदनपरवशः शङ्करं न स्मरामि क्षन्त० ॥२॥

प्रौढोऽहं यौवनस्थो विषयविषधरैः पञ्चभिर्मर्मसन्धौ
दष्टो नष्टो विवेकः सुतधनयुवतिस्वादसौख्ये निषण्णः ।
शैवीचिन्ताविहीनं मम हृदयमहो मानगर्वाधिरूढं क्षन्त० ॥३॥

वार्धक्ये चेन्द्रियाणां विगतगतिमतिश्चाधिदैवादितापैः
पापै रोगैर्वियोगैस्त्वनवसितवपुः प्रौढिहीनं च दीनम् ।
मिथ्यामोहाभिलाषैर्भ्रमति मम मनो धूर्जटेर्ध्यानशून्यं क्षन्त० ॥४॥

नो शक्यं स्मार्तकर्म प्रतिपदगहनप्रत्यवायाकुलाख्यं
श्रौते वार्ता कथं मे द्विजकुलविहिते ब्रह्ममार्गेऽसुसारे ।
ज्ञातो धर्मो विचारैः श्रवणमननयोः किं निदिध्यासितव्यं क्षन्त ॥

स्नात्वा प्रत्यूषकाले स्नपनविधिविधौ नाहृतं गांगतोयं
पूजार्थं वा कदाचिद्बहुतरगहनात्खण्डबिल्वीदलानि ।
नानीता पद्ममाला सरसि विकसिता गन्धपुष्पे त्वदर्थं क्षन्त ॥७॥

दुग्धैर्मध्वाज्ययुक्तैर्दधिसितसहितैः स्नापितं नैव लिङ्गं
नो लिप्तं चन्दनाद्यैः कनकविरचितैः पूजितं न प्रसूनैः ।
धूपैः कर्पूरदीपैर्विविधरसयुतैर्नैव भक्ष्योपहारैः क्षन्त० ॥७॥

ध्यात्वा चित्ते शिवाख्यं प्रचुरतरधनं नैव दत्तं द्विजेभ्यो
हव्यं ते लक्षसंख्यैर्हुतवहवदने नार्पितं बीजमन्त्रैः ।
नो तप्तं गांगतीरे व्रतजपनियमै रुद्रजाप्यैर्न वेदैः क्षन्त० ॥८॥

स्थित्वा स्थाने सरोजे प्रणवमयमरुत्कुण्डले सूक्ष्ममार्गे
शान्ते स्वान्ते प्रलीने प्रकटितविभवे ज्योतिरूपे पराख्ये ।
लिङ्गज्ञे ब्रह्मवाक्ये सकलतनुगतं शङ्करं न स्मरामि क्षन्त० ॥९॥

नग्नो निस्सङ्गशुद्धस्त्रिगुणविरहितो ध्वस्तमोहान्धकारो
नासाग्रे न्यस्तदृष्टिर्विदितभवगुणो नैव दृष्टः कदाचित् ।
उन्मत्ताऽवस्थया त्वां विगतकलिमलं शङ्करं न स्मरामि क्षन्त॥१०॥

चन्द्रोद्भासितशेखरे स्मरहरे गङ्गाधरे शङ्करे
सर्पैर्भूषितकण्ठकर्णविवरे नेत्रोत्थवैश्वानरे ।
दन्तित्वक्कृतसुन्दराम्बरधरे त्रैलोक्यसारे हरे
मोक्षार्थं कुरु चित्तवृत्तिमखिलामन्यैस्तु किं कर्मभिः ॥११॥

किंवाऽनेन धनेन वाजिकरिभिः प्राप्तेन राज्येन किं
किंवा पुत्रकलत्रमित्रपशुभिर्देहेन गेहेन किम् ।
ज्ञात्वैतत्क्षणभङ्गुरं सपदि रे त्याज्यं मनो दूरतः
स्वात्मार्थं गुरुवाक्यतो भज भज श्रीपार्वतीवल्लभम् ॥१२॥

आयुर्नश्यति पश्यतां प्रतिदिनं याति क्षयं यौवनं
प्रत्यायान्ति गताः पुनर्न दिवसाः कालो जगद्भक्षकः ।
लक्ष्मीस्तोयतरङ्गभङ्गचपला विद्युच्चलं जीवितं
तस्मान्मां शरणागतं शरणद त्वं रक्ष रक्षाधुना ॥१३॥

करचरणकृतं वाक्कायजं कर्मजं वा
श्रवणनयनजं वा मानसं वाऽपराधम् ।

विहितमविहितं वा सर्वमेतत्क्षमस्व
जय जय करुणाब्धे श्रीमहादेव शंभो ॥१४॥

इति श्रीमत्परमहंस परिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीमच्छङ्करभगवतः कृतौ
॥ शिवापराधक्षमापणस्तोत्रं संपूर्णम् ॥

## ॥ अथ रावणकृतशिवताण्डवस्तोत्रम् ॥

जटाकटाहसंभ्रमभ्रमन्निलिंपनिर्झरी-
विलोलवीचिवल्लरीविराजमानमूर्धनि ।
धगद्धगद्धगज्ज्वलल्ललाटपट्टपावके-
किशोरचन्द्रशेखरे रतिः प्रतिक्षणं मम ॥१॥

धराधरेन्द्रनन्दिनीविलासबन्धुबन्धुर-
स्फुरद्दिगन्तसन्ततिप्रमोदमानमानसे ।
कृपाकटाक्षधोरणीनिरुद्धदुर्धरापदि-
क्वचिच्चिदम्बरे मनो विनोदमेतु वस्तुनि ॥२॥

जटाभुजङ्गपिङ्गलस्फुरत्फणामणिप्रभा-
कदम्बकुङ्कुमद्रवप्रलिप्तदिग्वधूमुखे ।
मदान्धसिंधुरस्फुरत्त्वगुत्तरीयमेदुरे
मनो विनोदमद्भुतं बिभर्तु भूतभर्तरि ॥३॥

सहस्रलोचनप्रभृत्यशेषलेखशेखर-
प्रसूनधूलिधोरणीविधूसरांघ्रिपीठभूः ।

भुजङ्गराजमालया निबद्धजाटजूटकः
श्रियै चिराय जायतां चकोरबन्धुशेखरः ॥४॥

ललाटचत्वरज्वलद्धनंजयस्फुलिङ्गभा-
निपीतपञ्चसायकं नमन्निलिंपनायकम् ।
सुधामयूखलेखया विराजमानशेखरं
महाकपालिसंपदे शिरो जटालमस्तु नः ॥५॥

करालभालपट्टिकाधगद्धगद्धगज्ज्वल-
द्धनञ्जयाधरीकृतप्रचण्डपञ्चसायके ।
धराधरेन्द्रनन्दिनीकुचाग्रचित्रपत्रक-
प्रकल्पनैकशिल्पिनि त्रिलोचने मतिर्मम ॥६॥

नवीनमेघमण्डलीनिरुद्धदुर्धरस्फुर-
त्कुहूनिशीथिनीतमःप्रबन्धबन्धुकन्धरः ।
निलिंपनिर्झरीधरस्तनोतु कृत्तिसिंधुरः
कलानिधानबन्धुरः श्रियं जगद्धुरन्धरः ॥७॥

प्रफुल्लनीलपङ्कजप्रपञ्चकालिमच्छटा-
विडम्बिकण्ठकन्धरारुचिप्रबन्धकन्धरम् ।
स्मरच्छिदं पुरच्छिदं भवच्छिदं मखच्छिदं
गजच्छिदान्धकच्छिदं तमन्तकच्छिदं भजे ॥८॥

अगर्वसर्वमङ्गलाकलाकदम्बमञ्जरी-
रसप्रवाहमाधुरीविजृम्भणामधुव्रतम् ।

स्मरान्तकं पुरान्तकं भवान्तकं मखान्तकं
गजान्तकान्धकान्तकं तमन्तकान्तकं भजे ॥९॥

जयत्वदभ्रविभ्रमभ्रमद्भुजङ्गमस्फुर-
द्धगद्धगद्विनिर्गमत्करालफालहव्यवाट् ।
धिमिद्धिमिद्धिमिध्वनन्मृदङ्गतुङ्गमंगल-
ध्वनिक्रमप्रवर्तितप्रचण्डताण्डवः शिवः ॥१०॥

दृषद्विचित्रतल्पयोर्भुजङ्गमौक्तिकस्रजो-
र्गरिष्ठरत्नलोष्ठयोः सुहृद्विपक्षपक्षयोः ।
तृणारविंदचक्षुषोः प्रजामहीमहेन्द्रयोः
समं प्रवर्तयन्मनः कदा सदाशिवं भजे ॥११॥

कदा निलिंपनिर्झरीनिकुञ्जकोटरे वस-
न्विमुक्तदुर्मतिः सदा शिरःस्थमञ्जलिं वहन् ।
विमुक्तलोललोचनाललामफाललग्नकः
शिवेति मन्त्रमुच्चरन्कदा सुखी भवाम्यहम् ॥१२॥

इमं हि नित्यमेवमुक्तमुत्तमोत्तमं स्तवं
पठन्स्मरन्ब्रुवन्नरो विशुद्धिमेति सन्ततम् ।
हरे गुरौ स भक्तिमाशु याति नान्यथा गतिं
विमोहनं हि देहिनां तु शङ्करस्य चिंतनम् ॥१३॥

पूजावसानसमये दशवक्त्रगीतं
यः शंभुपूजनमिदं पठति प्रदोषे ।

तस्य स्थिरां रथगजेंद्रतुरङ्गयुक्तां
लक्ष्मीं सदैव सुमुखीं प्रददाति शंभुः ॥१४॥

॥ इति श्रीरावणविरचितं शिवताण्डवस्तोत्रं संपूर्णम् ॥

## ॥ द्वादशज्योतिर्लिङ्गस्तोत्रम् ॥

सौराष्ट्रदेशे विदशेऽतिरम्ये ज्योतिर्मयं चन्द्रकलावतंसम् ।
भक्तिप्रदानाय कृपावतीर्णं तं सोमनाथं शरणं प्रपद्ये ॥१॥
श्रीशैलसङ्गे विबुधातिसङ्गे तुलाद्रितुङ्गेऽपि मुदा वसन्तम् ।
तमर्जुनं मल्लिकपूर्वमेकं नमामि संसारसमुद्रसेतुम् ॥२॥
अवंतिकायां विहितावतारं मुक्तिप्रदानाय च सज्जनानाम् ।
अकालमृत्योः परिरक्षणार्थं वन्दे महाकालमहासुरेशम् ॥३॥
कावेरिकानर्मदयोः पवित्रे समागमे सज्जनतारणाय ।
सदैव मान्धातृपुरे वसन्तमोङ्कारमीशं शिवमेकमीडे ॥४॥
पूर्वोत्तरे प्रज्वलिकानिधाने सदा वसन्तं गिरिजासमेतम् ।
सुरासुराराधितपादपद्मं श्रीवैद्यनाथं तमहं नमामि ॥५॥
याम्ये सदङ्गे नगरेऽतिरम्ये विभूषिताङ्गं विविधैश्च भोगैः ।
सद्भक्तिमुक्तिप्रदमीशमेकं श्रीनागनाथं शरणं प्रपद्ये ॥६॥
महाद्रिपार्श्वे च तटे रमन्तं सम्पूज्यमानं सततं मुनींद्रैः ।
सुरासुरैर्यक्षमहोरगाद्यैः केदारमीशं शिवमेकमीडे ॥७॥
सह्याद्रिशीर्षे विमले वसन्तं गोदावरीतीरपवित्रदेशे ।
यद्दर्शनात्पातकमाशु नाशं प्रयाति तं त्र्यम्बकमीशमीडे ॥८॥

सुताम्रपर्णीजलराशियोगे निबध्य सेतुं विशिखैरसंख्यैः ।
श्रीरामचन्द्रेण समर्पितं तं रामेश्वराख्यं नियतं नमामि ॥९॥

यो डाकिनीशाकिनिकासमाजैर्निषेव्यमाणः पिशिताशनैश्च ।
सदैव भीमादिपदप्रसिद्धः तं शङ्करं भक्तहितं नमामि ॥१०॥

सानन्दमानन्दवने वसन्तमानन्दकन्दं हतपापवृन्दम् ।
वाराणसीनाथमनाथनाथं श्रीविश्वनाथं शरणं प्रपद्ये ॥११॥

इलापुरे रम्यविशालकेऽस्मिन्समुल्लसन्तं च जगद्वरेण्यम् ।
नित्यं महोदारतरस्वभावं घृष्णेश्वराख्यं शरणं प्रपद्ये ॥१२॥

ज्योतिर्मयद्वादशलिङ्गकानां शिवात्मनां प्रोक्तमिदं क्रमेण ।
स्तोत्रं पठित्वा मनुजोऽतिभक्त्या फलं तदालोक्यनिशं भजेच्च॥१३॥

॥ इति श्रीद्वादशज्योतिर्लिङ्गस्तोत्रं संपूर्णम् ॥

## ॥ वेदसारशिवस्तवः ॥

पशूनां पतिं पापनाशं परेशं गजेंद्रस्य कृत्तिं वसानं वरेण्यम् ।
जटाजूटमध्ये स्फुरद्गाङ्गवारिं महादेवमेकं स्मरामि स्मरारिम् ॥१॥

महेशं सुरेशं सुरारातिनाशं विभुं विश्वनाथं विभूत्यङ्गभूषं ।
विरूपाक्षमिद्वर्कवह्नित्रिनेत्रं सदानन्दमीडे प्रभुं पञ्चवक्त्रम् ॥२॥

गिरीशं गणेशं गले नीलवर्णं गवेंद्राधिरूढं गणातीतरूपम् ।
भवं भास्वरं भस्मना भूषिताङ्गं भवानीकलत्रं भजे पञ्चवक्त्रम् ॥३॥

शिवाकान्त शंभो शशाङ्कार्धमौले महेशान शूलिन् जटाजूटधारिन् ।
त्वमेको जगद्व्यापको विश्वरूप प्रसीद प्रसीद प्रभो पूर्णरूप ॥४॥

परात्मानमेकं जगद्बीजमाद्यं निरीहं निराकारमोङ्कारवेद्यम् ।
यतो जायते पाल्यते येन विश्वं तमीशं भजे लीयते यत्र विश्वम्॥५॥

न भूमिर्न चापो न वह्निर्न वायुर्न चाकाशमास्ते न तंद्रा न निद्रा ।
न ग्रीष्मो न शीतं न देशो न वेषो नऽयस्यास्ति मूर्तिस्त्रिमूर्तिं तमीडे॥

अजं शाश्वतं कारणं कारणानां शिवं केवलं भासकं भासकानाम् ।
तुरीयं तमःपारमाद्यन्तहीनं प्रपद्ये परं पावनं द्वैतहीनम् ॥७॥

नमस्ते नमस्ते विभो विश्वमूर्ते नमस्ते नमस्ते चिदानन्दमूर्ते ।
नमस्ते नमस्ते तपोयोगगम्य नमस्ते नमस्ते श्रुतिज्ञानगम्य ॥८॥

प्रभो शूलपाणे विभो विश्वनाथ महादेव शंभो महेश त्रिनेत्र ।
शिवाकान्त शान्त स्मरारे पुरारे त्वदन्यो वरेण्यो न मान्यो न गण्यः॥

शंभो महेश करुणामय शूलपाणे गौरीपते पशुपते पशुपाशनाशिन् ।
काशीपते करुणया जगदेतदेकस्त्वं हंसि पासि विदधासि महेश्वरोऽसि॥

त्वत्तो जगद्भवति देव भव स्मरारे
त्वय्येव तिष्ठति जगन्मृड विश्वनाथ ।
त्वय्येव गच्छति लयं जगदेतदीश
लिङ्गात्मकं हर चराचरविश्वरूपिन् ॥११॥

॥ इति श्रीमच्छङ्कराचार्यविरचितं वेदसारशिवस्तोत्रं संपूर्णम् ॥

## ॥ निर्वाणदशकम् ॥

न भूमिर्न तोयं न तेजो न वायुर्न खं नेंद्रियं वा न तेषां समूहः ।
अनैकान्तिकत्वात्सुषुप्त्येकसिद्धस्तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥

न वर्णा न वर्णाश्रमाचारधर्मा न मे धारणाध्यानयोगादयोऽपि ।
अनात्माश्रयोऽहं ममाध्यासहानात्तदेको० ॥२॥

न माता पिता वा न देवा न लोका न वेदा न यज्ञा न तीर्थं ब्रुवंति ।
सुषुप्तौ निरस्तातिशून्यात्मकत्वात्तदेको० ॥३॥

न सांख्यं न शैवं न तत्पाञ्चरात्रं न जैनं न मीमांसकादेर्मतं वा ।
विशिष्टानुभूत्या विशुद्धात्मकत्वात्तदेको० ॥४॥

न शुक्लं न कृष्णं न रक्तं न पीतं न पीनं न कुब्जं नह्रस्वं न दीर्घम् ।
अरूपं तथा ज्योतिराकारकत्वात्तदेको० ॥५॥

न जाग्रन्न मे स्वप्नको वा सुषुप्तिर्न विश्वो न वा तेजसः प्राज्ञको वा ।
अविद्यात्मकत्वात्त्रयाणां तुरीयं तदेको० ॥६॥

न शास्ता न शास्त्रं न शिष्यो न शिक्षा
न च त्वं न चाहं न चायं प्रपञ्चः ।
स्वरूपावबोधाद्विकल्पासहिष्णुस्तदेको० ॥७॥

न चोर्ध्वं न चाधो न चांतर्न बाह्यं नमध्यं न तिर्यङ् न पूर्वा परा दिक् ।
वियद्व्यापकत्वादखण्डैकरूपस्तदेको० ॥८॥

अपि व्यापकत्वादितत्त्वात्प्रयोगात्स्वतःसिद्धभावादनन्याश्रयत्वात् ।
जगत्तुच्छमेतत्समस्तं तदन्यस्तदेको० ॥९॥

न चैकं तदन्यद्द्वितीयं कुतः स्यान्न चाकेवलत्वं न वा केवलत्वम् ।
न शून्यं न चाशून्यमद्वैतकत्वात्कथं सर्ववेदान्तसिद्धं ब्रवीमि ॥१०॥

॥ इति श्रीमच्छङ्कराचार्यविरचितं निर्वाणदशकस्तोत्रं संपूर्णम् ॥

---

## ॥ निर्वाणषट्कम् ॥

मनोबुद्ध्यहङ्कारचित्तानि नाहं न च श्रोत्रजिह्वे न च घ्राणनेत्रे ।
न च व्योम भूमिर्न तेजो न वायुश्चिदानन्दरूपः शिवोऽहं शिवोऽहम्॥

न च प्राणसंज्ञो न वै पञ्चवायुर्न वा सप्तधातुर्न वा पञ्चकोशः ।
न वाक्पाणिपादं न चोपस्थपायू चिदानन्द० ॥२॥

न मे द्वेषरागौ न मे लोभमोहौ मदो नैव मे नैव मात्सर्यभावः ।
न धर्मो न चार्थो न कामो न मोक्षश्चिदा० ॥३॥

न पुण्यं न पापं न सौख्यं न दुःखं न मंत्रो न तीर्थं न वेदा न यज्ञाः ।
अहं भोजनं नैव भोज्यं न भोक्ता चिदा० ॥४॥

न मृत्युर्न शङ्का न मे जातिभेदः पिता नैव मे नैव माता च जन्म ।
न बन्धुर्न मित्रं गुरुर्नैव शिष्यश्चिदा० ॥५॥

अहं निर्विकल्पी निराकाररूपी विभुत्वाच्च सर्वत्र सर्वेंद्रियाणाम् ।
न चासङ्गतं नैव मुक्तिर्न मेयाश्चिदा० ॥६॥

॥ इति श्रीमच्छङ्कराचार्यविरचितं निर्वाणषट्कं संपूर्णम् ॥

---

## ॥ कालभैरवाष्टकम् ॥

देवराजसेव्यमानपावनांघ्रिपङ्कजं
व्यालयज्ञसूत्रमिन्दुशेखरं कृपाकरम् ।
नारदादियोगिबृन्दवन्दितं दिगम्बरं
काशिकापुराधिनाथकालभैरवं भजे ॥१॥

भानुकोटिभास्वरं भवाब्धितारकं परं
नीलकण्ठमीप्सितार्थदायकं त्रिलोचनम् ।
कालकालमम्बुजाक्षमक्षशूलमक्षरं काशिका० ॥२॥

शूलटङ्कपाशदण्डपाणिमादिकारणं
श्यामकायमादिदेवमक्षरं निरामयम् ।
भीमविक्रमं प्रभुं विचित्रताण्डवप्रियं काशिका० ॥३॥

भुक्तिमुक्तिदायकं प्रशस्तचारुविग्रहं
भक्तवत्सलं स्थितं समस्तलोकविग्रहम् ।
विनिक्वणन्मनोज्ञहेमकिङ्किणीलसत्कटिं काशिका० ॥४॥

धर्मसेतुपालकं त्वधर्ममार्गनाशकं
कर्मपाशमोचकं सुशर्मदायकं विभुम् ।
स्वर्णवर्णशेषपाशशोभिताङ्गमण्डलं काशिका० ॥५॥

रत्नपादुकाप्रभाभिरामपादयुग्मकं
नित्यमद्वितीयमिष्टदैवतं निरञ्जनम् ।
मृत्युदर्पनाशनं करालदंष्ट्रमोक्षणं काशिका० ॥६॥

अट्टहासभिन्नपद्मजांडकोशसन्तर्तिं
दृष्टिपातनष्टपापजालमुग्रपापशासनम् ।
अष्टसिद्धिदायकं कपालमालिकन्धरं काशिका० ॥७॥

भूतसङ्घनायकं विशालकीर्तिदायकं
काशिवासलोकपुण्यपापशोधकं विभुम् ।
नीतिमार्गकोविदं पुरातनं जगत्पतिं काशिका० ॥८॥

कालभैरवाष्टकं पठन्ति ये मनोहरं
ज्ञानमुक्तिसाधनं विचित्रपुण्यवर्धनम् ।
शोकमोहदैन्यलोभकोपतापनाशनं
ते प्रयांति कालभैरवांघ्रिसन्निधिं ध्रुवम् ॥९॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीमच्छङ्करभगवतः कृतौ
॥ कालभैरवाष्टकं संपूर्णम् ॥

---

## ॥ शिवपादादिकेशान्तस्तुतिः ॥

कल्याणं वो विधत्तां कटकतटलसत्कल्पवाटीनिकुञ्ज-
क्रीडासंसक्तविद्याधरनिवहवधूगीतरुद्रापदानः ।
तारैर्हेरम्बनादै स्तरळितनिनदत्तारकारातिकेकी-
कैलासश्शर्वनिर्वृत्यभिजनकपदस्सर्वदा पर्वतेन्द्रः ॥१॥

यस्य प्राहुस्स्वरूपं सकलदिविषदां सारसर्वस्वयोगं
यस्येषुश्शार्ङ्गधन्वा समजनि जगतां रक्षणे जागरूकः ।

मौर्वी दर्वीकराणा मपि च परिबृढः पूस्त्रयी सा च लक्ष्यं
सोऽव्यादव्याज मस्मानशिवभिदनिशं नाकिनां श्रीपिनाकः ॥२॥

आतङ्कावेगहारी सकलदिविषदा मङ्घ्रिपद्माश्रयाणां
मातङ्गाद्युग्रदैत्यप्रकरतनुगळद्रक्तधाराक्तधारः ।
क्रूरः सूरायुतानामपि च परिभवं स्वीयभासा वितन्वन्
घोराकारः कुठारो दृढतरदुरिताख्याटवीं पाटयेन्नः ॥३॥

कालारातेः कराग्रे कृतवसतिरुरश्शाणशातो रिपूणां
काले काले कुलाद्रि प्रवरतनयया कल्पितस्नेहलेपः ।
पायान्नः पावकार्चिःप्रसरसखमुखः पापहन्ता नितान्तं
शूल श्श्रीपादसेवाभजनपरहृदां पालनैकान्त शीलः ॥४॥

देवस्याङ्काश्रयायाः, कुलगिरिदुहितुर्नेत्रकोणप्रचार-
प्रस्तारानत्युदारान् पिपठिषुरिव यो नित्य मत्यादरेण ।
आधत्ते भङ्गितुंगैरनिश मवयवै रन्तरङ्गं समोदं
सोमापीडस्य सोऽयं प्रदिशतु कुशलं पाणिरङ्गः कुरङ्गः ॥५॥

कण्ठप्रान्तावसज्जत्कनकमयमहाघंटिकाघोरघोषैः
कण्ठारावैरकुण्ठैरपि भरितजगच्चक्रवाळान्तराळः ।
चण्ड प्रोद्दण्डशृङ्गः ककुभकबळितोत्तुङ्गकैलासशृङ्गः
कण्ठे कालस्य वाहः शमयतु दुरितं शाश्वतं शाक्करेन्द्रः ॥६॥

निर्यद्दानांबुधारापरिमळतरळीभूतलोलंबपाळी
झङ्कारैः शङ्कराद्रेः शिखरशतदरीः पूरयन्भूरिघोषैः ।

शार्व स्सौवर्णशैलप्रतिमपृथुवपु स्सर्वविघ्नोपहर्ता
शर्वाण्याः पूर्वसूनु स्स भवतु भवतां स्वस्तिदो हस्तिवक्त्रः ॥७॥

यः पुण्यैर्देवतानां समजनि शिवयोश्श्लाघ्यवीर्यैकमत्या
यन्नाम्नि श्रूयमाणे दितिजभटघटा भीतिभारं भजन्ते ।
भूया त्सोऽयं विभूत्यै निशितशरशिखापाटितक्रौञ्चशैल-
स्संसारागाधकूपोदरपतितसमुत्तारकस्तारकारिः ॥८॥

आरूढप्रौढवेगप्रविजितपवनं तुङ्गतुङ्गं तुरङ्गं
चेलं नीलं वसानः करतलविलसत्काण्डकोदण्डदण्डः ।
रागद्वेषादिनानाविधमृगपटलीभीतिकृद्भूतभर्ता
कुर्व न्नाखेटलीलां परिलसतु मनःकानने मामकीने ॥९॥

अम्भोजाभ्यां च रम्भारथचरणलताद्वन्द्वकुम्भीन्द्रकुम्भै-
र्बिंबेनेंदोश्च कम्बोरुपरि विलसता विद्रुमेणोत्पलाभ्याम् ।
अम्भोदेनापि संपादितमुपजनिताडम्बरं शम्बरारेः
शम्भोस्सम्भोगयोग्यं किमपि धनमिदं संभवेत्संपदे नः ॥१०॥

वेणीसौभाग्यविस्मापिततपनसुताचारुवेणीविलासा-
न्वाणीनिर्धूतवाणीकरतलविधृतोदारवीणाविरावान् ।
एणीनेत्रांतभङ्गीनिरसननिपुणापाङ्गकोणानुपासे
शोणान्प्राणानुदूढप्रतिनवसुषुमाकन्दळानिन्दुमौळेः ॥११॥

नृत्तारम्भेषु हस्ताहतमुरजधिमीधिक्कृतैरत्युदारै-
श्चित्तानन्दं विधत्ते सदसि भगवतस्सन्ततं यस्स नन्दी ।

चण्डीशाद्यास्तथान्ये चतुरगुणगणप्राणितस्वामिस-
त्कारोत्कर्षोद्यत्प्रतापाः प्रमथपरिबृढा स्संतु संतोषिणो नः ॥१२॥

मुक्तामाणिक्यजालैः परिकलितमहासाल मालोकनीयं
प्रत्युप्तानर्घरत्नै र्दिशि भवनैः कल्पितैर्दिक्पतीनाम् ।
उद्यानैरद्रिकन्यापरिजनवनितामाननीयैः परीतं
हृद्यं स्तुत्यं सुराणां मम भुवनपतेर्धाम सोमार्धमौळेः ॥१३॥

स्तम्भैर्जम्भारिरत्नप्रवरविरचितैस्सम्भृतोपांतभागं
शुम्भत्सोपानमार्गं शुचिमणिनिचयै र्गुंभितानल्पशिल्पम् ।
कुम्भैस्संपूर्णशोभं शिरसि सुघटितैः शातकुम्भैरपङ्कै-
श्शम्भो स्संभावनीयं सकलमुनिजनैस्सर्वदा सुप्रसन्नः ॥१४॥

न्यस्तो मध्ये सभायाः परिसरविलस त्पादपीठाभिरामो
हृद्यः पादैश्चतुर्भिः कनकमणिमयै रुच्चकैरुज्ज्वलात्मा ।
वासोरत्नेन केनाप्यधिकमृदुकरेणास्तृतो विस्मृतश्री-
पीठः पीडाधरं नः शमयतु शिवयोस्स्वैरसंवासयोग्यः ॥१५॥

आसीनस्याधिपीठं त्रिजगदधिपतेरंघ्रिपीठानुषक्तौ
पाथोजाभोगभाजौ परिमृदुळतलोल्लासिपद्माभिलेखौ ।
पातां पादावुभौ तौ नमदमरकिरीटोल्लसच्चारुहीर
श्रेणीशोणायमानोन्नतनखदशकोद्भासमानौ समानौ ॥१६॥

यन्नादो वेदवाचां निगदति निखिलं लक्षणं पक्षिकेतु-
र्लक्ष्मीसंभोगसौख्यं विरचयति ययो श्चापदे रूपभेदे ।

शम्भो स्संभावनीये पदकमलसमासंगत स्तुङ्गशोभे
माङ्गल्यं नस्समग्रं सकलसुखकरे नूपुरे पूरयेताम् ॥१७॥

अङ्गे शृङ्गारयोनेस्सपदि शलभतां नेत्रवह्नौ प्रयाते
शत्रोरुद्धृत्य तस्मादिषुधियुगमथ न्यस्तमग्रे किमेतत् ।
शङ्कामित्थं नताना ममरपरिषदा मन्तरं कूरय-
त्तत्संघातं चारुजङ्घायुगमखिलपते रंहसा संहरेन्नः ॥१८॥

जानुद्वंद्वेन मीनध्वज नृपरसमुद्रोपमानेन साकं
राजन्तौ राजरम्भाकरिकरकनकस्तम्भसम्भावनीयौ ।
ऊरुगौरी कराम्भोरुहसरससमामर्दनानन्दभाजा-
वूरू दूरीक्रियेतां दुरित मुपचितं जन्मजन्मान्तरे नः ॥१९॥

आमुक्तानर्घरत्नप्रकरकरपरिष्वक्तकल्याणकांची-
दाम्ना बद्धेन दुग्धद्युतिनिचयमुषा चीनपट्टांबरेण ।
संवीते शैलकन्यासुचरितपरिपाकायमाने नितम्बे
नित्यं नर्नर्तु चित्तं मम निखिलजगत्स्वामिनस्सोममौलेः ॥२०॥

सन्ध्याकालानुरञ्जद्दिनकरसरुचा कालधौते न गाधं
व्यानद्धास्निग्धवर्णस्सरसमुदरबन्धेन पीतोपमेन ।
उद्दीप्तैस्स्वप्रकाशै रुपचितमहिमा मन्मथारे रुदारो
मध्यो मिथ्यार्थसध्र्यङ् दिशतु मम सदा सङ्गतिं मङ्गलानाम् ॥

नाभीचक्रालवाला न्नवनवसुषमादोहळश्रीपरीता
दुद्गच्छन्ती पुरस्ता दुदरपथमतिक्रम्य वक्षः प्रयांती ।

श्यमा कामागमार्थप्रकथनलिपिवद्भासते या निकामं
सामा सोमार्धमौळे स्सुखयतु सततं रोमवल्ली मतल्ली ॥२२॥

आश्लेषे ष्वद्रिजायाः कठिनकुचतटी लिप्तकाश्मीरपङ्क
व्यासङ्गादुद्यदर्कद्युतिभिरुपचितस्पर्धमुद्दामहृद्यम् ।
दक्षारातेरुदूढप्रतिनवमणिमालावलीभासमानं
वक्षोविक्षोभिताघं सततनतिजुषां रक्षतादक्षतं नः ॥२३॥

वामांके विष्फुरन्त्याः करतलविलसच्चारु रक्तोत्पलायाः
कान्ताया वामवक्षोरुहभरशिखरोन्मर्दनव्यग्रमेकम् ।
अन्यांस्त्रीनत्युदारान्वरपरशुमृगालङ्कृतान्सिन्धुमौळे-
र्बाहूनाबद्ध हेमाङ्गदमणिकटकानन्तरालोकयामः ॥२४॥

सम्भ्रान्ताया शिवायाः पतिविलयभयात्सर्वलोकोपतापा-
त्संविग्नस्यापि विष्णोः सरभसमुभयोर्वारणप्रेरणाभ्याम् ।
मध्ये त्रैशङ्कवीया मनुभवति दशां यत्र हालाहलोष्मा
सोऽयं सर्वापदां नः शमयतु निचयं नीलकण्ठस्य कण्ठः ॥२५॥

हृद्यैरद्रींद्रकन्यामृदुदशनपदैर्मुद्रितो विद्रुमश्री-
रुद्योतन्त्या नितान्तं धवळधवळया मिश्रितो दन्तकान्त्या ।
मुक्तामाणिक्यपूरव्यतिकरसदृशा तेजसा भासमान-
स्सद्योजातस्य दद्यादधरमणिरसौ सम्पदां सञ्चयं नः ॥२६॥

कर्णालङ्कारनानामणिनिकररुचां सञ्चयै रंचितायां
वर्ण्यायां स्वर्णपद्मो दरपरिविलस त्कर्णिकासन्निभायाम् ।

पद्धत्यां प्राणवायोः प्रणतजनहृदम्भोजवानस्य शम्भो-
र्नित्यं नश्चित्त मेतद्विरचयतुसुखेनासिका नासिकायाम् ॥२७॥

अत्यन्तं भासमाने रुचिरतररुचां सङ्गमा त्सन्मणीना-
मुद्यच्चण्डांशुधामप्रसरनिरसनस्पष्टदृष्टापदाने ।
भूयास्तां भूतये नः करिवरजयिनः कर्णपाशावलम्बे
भक्ताळीफालसज्जज्जनिमरणालिपेः कुण्डले कुण्डले ते ॥२८॥

याभ्यां कालव्यवस्था भवति तनुमतां योमुखं देवतानां
येषा माहुस्स्वरूपं जगति मुनिवरा देवतानां त्रयीं ताम् ।
रुद्राणीवक्त्रपङ्केरुहसततविहारोस्तुकेंदिन्दिरेभ्य-
स्तेभ्य स्त्रिभ्यः प्रणामाञ्जलि मुपरचये त्रीक्षणस्येक्षणेभ्यः ॥२९॥

वामं वामाङ्कगाया वदनसरसिजे व्यावलद्वल्लभाया
व्यानम्रेष्वन्यदन्यत्पुनरळिकभवं पीतनिश्शेषरौक्ष्यम् ।
भूयो भूयोऽपि मोदान्निपतदतिदयाशीतळं चूतबाणे
दक्षारेरीक्षणानां त्रय मपहरतादाशु तापत्रयन्नः ॥३०

यस्मिन्नर्धेदुमुग्धद्युतितिमिरतिरस्कारनिस्तन्द्रकान्तौ
काश्मीरक्षोदसङ्कल्पित मिव रुचिरं चित्रकं भाति नेत्रम् ।
तस्मिन्नुल्लीलचिल्लीनटवरतरुणीलास्यरङ्गायमाणे
कालारेः फालदेशे विहरतु हृदयं वीतचिंतान्तरन्नः ॥३१

स्वामिन्गङ्गामिवाङ्गीकुरु तव शिरसा मामपीत्यर्थयंतीं
धन्यां कन्यां खरांशोश्शिरसि वहति किन्वेष कारुण्यशाली ।

इत्थं शंकां जनानां जनय दतिघनं कैशिकं कालमेघ-
च्छायं भूयादुदारं त्रिपुरविजयिनः श्रेयसे भूयसे नः ॥३२॥

शृङ्गाराकल्पयोग्यैश्शिखरिवरसुतासत्सखीहस्तलूनै-
स्सूनै राबद्धमालावलिपरिविलस त्सौरभाकृष्टभृङ्गम् ।
तुङ्गं माणिक्य कान्त्या परिहासितसुरावासशैलेंद्रशृङ्गं
संघंनः संकटानां विघटयतु सदा कांकटीकं किरीटम् ॥३३॥

वक्राकारः कळङ्की जड़तनुरहमप्यङ्घ्रिसेवानुभावा-
दुत्तंसत्वं प्रयात स्सुलभतरघृणास्यंदिनश्चन्द्रमौळेः ।
तत्सेवंतां जनौघाश्शिवमिति निजयावस्थयापि ब्रुवाणं
वन्दे देवस्य शम्भो र्मकुटसुघटितं मुग्धपीयूषभानुम् ॥३४॥

कान्त्या संफुल्लमल्लीकुसुमधवळया व्याप्य विश्वं विराजन्
वृत्ताकारोवितन्वन्मुहुरपि च वरां निर्वृतिं पादभाजाम् ।
सानन्दं नन्दिदोष्णा मणिकटकवता वाह्यमानः पुरारेः
श्वेतच्छत्राख्यशीतद्युतिरपहरतादापदस्तापदा नः ॥३५॥

दिव्याकल्पोज्ज्वलानां शिवगिरिसुतयोः पार्श्वयोराश्रितानां
रुद्राणीसत्सखीनामतितरळकटाक्षाञ्चलै रञ्चितानाम् ।
उद्वेलद्बाहुवल्लीविलसनसमये चामरान्दोलनीना-
मुद्भूतः कङ्कणाळीवलयकलकलो वारये दापदो नः ॥३६॥

स्वर्गौकस्सुन्दरीणां सुललितवपुषां स्वामिसेवापराणां
वल्गद्भूषाणि वक्त्रांबुजपरिविगळन्मुग्धगीतामृतानि ।

नित्यं नृत्तान्युपासे भुजविधुतिपदन्यासभावावलोक-
प्रत्युद्यत्प्रीतिमाद्यन्प्रथमनटनटीदत्तसम्भावनानि ॥३७॥

स्थानप्राप्त्या स्वराणां किमपि विशदतां व्यञ्जयन्मञ्जुवीणा-
स्वानावच्छिन्नताळक्रम ममृत मिवास्वाद्यमानं शिवायाम् ।
नानारागादिहृद्यं नवरसमधुरस्तोत्रजातानुविद्धं
गानं वीणामहर्षेः कळमतिललितं कर्णपूरायतान्नः ॥३८॥

चेतो जातप्रमोदं सपदि विदधति प्राणिनां वाणिनीनां
पाणिद्वन्द्वाग्रकूजत्सुललितविलसत्स्वर्णताळानुकूला ।
स्वीयारावेण पाथोभररवपटुना नादयन्तीं मयूरीं
मायूरी मन्दभावं मणिमुरजभवा मार्जना मार्जयेन्नः ॥३९॥

देवेभ्यो दानवेभ्यः पितृमुनिपरिषत्सिद्धविद्याधरेभ्य-
स्साध्येभ्य श्चारणेभ्यो मनुजपशुलसज्जातिकीटादिकेभ्यः ।
श्रीकैलासप्ररूढास्तृणविटपिमुखाश्चापि ये संतितेभ्य-
स्सर्वेभ्यो निर्विचारं नतिमुपरचये शर्वपादाश्रयेभ्यः ॥४०॥

इत्थं ध्यायन् प्रभाते प्रतिदिवस मिदं स्तोत्ररत्नं पठेद्यः
किंवा ब्रूमस्तदीयं सुचरित मथवा कीर्तयाम स्समासात् ।
संपज्जातं समग्रं सदसि बहुमतिं सर्वलोकप्रियत्वं
संप्राप्यायु श्शतांते पदमयाति परब्रह्मणो मन्मथारेः ॥४१॥

इति श्रीमत्परमहंस परिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीमच्छङ्करभगवतः कृतौ
॥ शिवपादादिकेशान्तस्तुति संपूर्णम् ॥

---

## ॥ शिवकेशादिपादान्तवर्णनस्तोत्रम् ॥

देयासुर्मूर्ध्नि राजत्सरससुरसरित्पारपर्यन्तनिर्य-
त्प्रांशुस्तम्बाः पिशङ्गास्तुलितपरिणतारक्त शालीलतावः ।
दुर्वारापत्तिगर्तश्रितनिखिलजनोत्तारणेरज्जुभूता
घोराघोर्वीरुहालीदहनशिखिशिखाः शर्मशार्वाः कपर्दाः ॥१॥

कुर्वन्निर्वाणमार्गप्रगमपरिलसद्रूप्यसोपानशङ्कां
शक्रारीणांपुराणां त्रयविजयकृतस्पष्टरेखायमाणम् ।
अव्यादव्याजमुच्चैरलिकहिमधराधित्यकान्तास्त्रिधोद्य-
ज्जाह्नव्याभं मृडानीकमितुरुडुपरुक्पाण्डरं वस्त्रिपुण्ड्रम् ॥२॥

क्रुध्यद्गौरीप्रसादानतिसमयपदाङ्गुष्ठसङ्क्रान्तलाक्षा
बिन्दुस्पर्धिस्मरारेः स्फाटिकमणिदृषन्मग्नमाणिक्यशोभम् ।
मूर्धन्युद्यद्दिव्यसिन्धोः पतितशफरिकाकारि वोमास्तकंस्ता-
दस्तोकापत्तिकृत्यैहुतवहकणिका मोक्षरूक्षंसदाक्षि ॥३॥

भूत्यैदृग्भूतयोः स्याद्यदहिमहिमरुग्बिम्बयोः स्निग्धवर्णो
दैत्यौघ ध्वंसशंसीस्फुटइवपरिवेषावशेषो विभाति ।
सर्गस्थित्यन्तवृत्तिर्मयिसमुपगतेऽतीवनिर्वृत्तगर्वं
शार्वाणीभर्तुरुच्चैर्युगलमथदधद्विभ्रमतद्भुवोर्वः ॥४॥

युग्मेरुक्माब्जपिङ्गे ग्रहइवपिहिते द्राग्ययोः प्राग्दुहित्रा
शैलस्य ध्वान्तनीलाम्बररचितबृहत्कञ्चुकोऽभूत्प्रपञ्चः ।

तेत्रैनेत्रे पवित्रे त्रिदशवरघटामित्रजैत्रोग्रशस्त्रे
नेत्रेनेत्रे भवेतांद्रुतमिह भवतामिन्द्रियाश्वान्नियन्तुम् ॥५॥

चण्डीवक्रार्पणेच्छोस्तदनु भगवतः पाण्डुरुक्पाण्डुगण्ड-
प्रोद्यत्कण्डंविनेतुं वितनुतइवयेरत्नकोणैर्विघृष्टिम् ।
चण्डार्चिर्मण्डलाभेसततनतजन ध्वान्तखण्डातिशौण्डे
चाण्डीशेते श्रियेस्तामधिकमवनताखण्डलेकुण्डलेवः ॥६॥

खट्वाङ्गोदग्रपाणेः स्फुटविकटपुटोवक्त्ररन्ध्रप्रवेश
प्रेप्सूदञ्चत्फणोरुश्वसदतिधवलाहीन्द्रशङ्कांदधानः ।
युष्माकं कम्रवक्त्राम्बुरुहपरिलसत्कर्णिकाकारशोभः
शश्वत्त्राणाय भूयादसमतिविमलोत्तुङ्गकोणः सघोणः ॥७॥

क्रुध्यत्युद्धाययोः स्वांतनुमतिलसतोर्बिम्बितांलक्षयन्ती
भर्त्रेस्पर्धातिनिघ्नामुहुरितरवधूशङ्कया शैलकन्या ।
युष्मांस्तौशश्वदुच्चैरबहुलदशमीशर्वरीशातिशुभ्रा-
वव्यास्तांदिव्यासिन्धोः कमितुरवनमल्लोकपालोकपोलौ ॥८॥

योभासा भात्युपान्तस्थितइव निभृतं कौस्तुभोद्रष्टुमिच्छ-
न्सोत्थस्नेहान्नितान्तं गलगतगरलं पत्युरुच्चैः पशूनाम् ।
प्रोद्यत्प्रेम्णायमार्द्रापिबति गिरिसुतासम्पदः सातिरेका
लोकाश्शोणीकृतान्ता यदधरमहसासोऽधरोवोविधताम् ॥९॥

अत्यर्थं राजतेयावदनशशधरादुद्गलच्चारुवाणी-
पीयूषाम्भः प्रवाहप्रसरपरिलसत्फेन बिन्द्वावलीव ।

देयात्सा दन्तपंक्तिश्चिरमिह दनुदायाददौवारिकस्य
द्युत्यादीप्तेन्दुकुन्दच्छविरमलतरप्रोन्नता प्रामुदं वः ॥१०॥

न्यक्कुर्वन्नुर्वराभृन्निभघनसमयोद्धुष्टमेघौघघोषं
स्फूर्जद्वाध्युत्थितोरुध्वनितमपि परब्रह्मभूतो गभीरः ।
सुव्यक्तो व्यक्तमूर्तेः प्रकटितकरणः प्राणनाथस्य सत्याः
प्रीत्या वः संविदध्यात्फलविकलमलं जन्मनादः सनादः ॥११॥

भासा यस्य त्रिलोकी लसति परिलसत्फेनबिन्दुर्णवान्त-
र्व्यामग्नेवातिगौरस्तुलितसुरसरिद्वारिपूरप्रसारः ।
पीनात्मा दन्तभाभिर्भृशमहहहकारातिभीमः सदेष्टां
पुष्टां तुष्टिं कृषीष्टस्फुटमिह भवतामट्टहासोऽष्टमूर्तेः ॥१२॥

सद्यो जाताख्यमाप्यं यदुविमलमुदग्वर्ति यद्वामदेवं
नाम्ना हेम्नासदृक्षं जलदनिभमघोराह्वयं दक्षिणं यत् ।
यद्बालार्कप्रभं तत्पुरुषनिगदितं पूर्वमीशानसंज्ञं
यद्दिव्यं तानि शम्भोर्भवदभिलषितं पञ्चदद्युर्मुखानि ॥१३॥

आत्मप्रेम्णो भवान्या स्वयमिव रचिताः सादरं सांवनन्या
मष्यातिस्त्रः सुनीलाञ्जननिभगररेखाः समाभान्ति यस्यां ।
आकल्पानल्पभासा भृशरुचिरतरा कम्बुकल्पाम्बिकायाः
पत्युः सात्यन्तमन्तर्विलसतु सततं मन्थराकन्धरा वः ॥१४॥

वक्षेन्द्रोर्दन्तलक्ष्म्याश्चिरमधरमहाकौस्तुभस्यान्ते
सोत्थानां प्रार्थयन् यः स्थितिमचलभुवे वारयन्त्यै निवेशम् ।

प्रायुंक्ते वाशिषोयः प्रतिपदममृतत्वे स्थितः कालशत्रोः
कालं कुर्वन् गलंवोहृदयमलमलं क्षालयेत् कालकूटः ॥१५॥

प्रौढप्रेमाकुलायादृढतरपरिरम्भेषु पर्वेन्दुमुख्याः
पार्वत्याश्चारुचामीकरवलयपदै राङ्कितं कान्तिशालि ।
रङ्गन्नागाङ्गदाढ्यं सततमविहितं कर्मनिर्मूलयेत्त-
द्दोर्मूलं निर्मलं यद्धृदिदुरितमपास्यार्जितं धूर्जटेर्वः ॥१६॥

कण्ठाश्लेषमाप्तादिवइवकमितुः स्वर्गसिन्धोः प्रवाहाः
क्रान्त्यै संसारसिन्धोः स्फटिकमणिमहासंक्रमाकारदीर्घाः ।
तिर्यग्विष्कम्भभूतास्त्रिभुवनवसतेर्भिन्नदैत्येभदेहा
बाहावस्ताहरस्यद्रुतमिहनिवहानंहसां संहरन्तु ॥१७॥

वक्षोदक्षद्विषोऽलं स्मरभरविनमद्दक्षजाक्षीण वक्षो-
जान्तर्निक्षिप्तशुम्भन्मलयजमिलतोद्भासिभस्मोक्षितंयत् ।
क्षिप्रंतद्रूक्षचक्षुः श्रुतिगणफणरत्नौघभाभीक्ष्णशोभं
युष्माकं शश्वदेनः स्फटिकमणिशिलामण्डलाभंक्षिणोतु ॥१८॥

मुक्तामुक्ते विचित्राकुलवलिलहरीजालशालिन्यवाञ्च-
न्नाभ्यावर्तेविलोलद्भुजगवरयुते कालशत्रोर्विशाले ।
युष्मच्चित्रात्रिधामा प्रतिनवरुचिरे मन्दिरे कान्तिलक्ष्म्याः
शीतां शीतांशुगौरे चिरतरमुदरक्षीरसिन्धौ सलीलम् ॥१९॥

वैयाघ्रीयत्रकृत्तिः स्फुरति हिमगिरेर्विस्तृतोपत्यकान्तः
सान्द्रावश्यायमिश्रापरितइवधृता नीलजीमूतमाला ।

आबद्धाहीन्द्रकाञ्चीगुणमतिपृथुलं शैलजाक्रीडभूमि-
स्तद्योनिःश्रेयसेस्याञ्जघनमतिघनं बालशीतांशुमौलेः                    ॥२०॥

पृष्ठावष्टम्भभूतौपृथुतरजघनस्यापि नित्यं त्रिलोक्याः
सम्यग्वृत्तौ सुरेन्द्रद्विरदवरकरोदारकान्ति दधानौ ।
सारावूरूपुरारेः प्रसभमरिघटाघस्मरौ भस्मशुभ्रौ
भक्तैरत्यार्द्रचित्तैरधिकमवनतौ वाञ्छितं वो विधत्ताम्                    ॥२१॥

आनन्दायेन्दुकान्तोपलरचितसमुद्गायिते येमुनीनां
चित्तादर्शं निधातुं विदधतिचरणेताण्डवाकुञ्चनानि ।
काञ्ची भोगीन्द्रमूर्ध्ना प्रतिमुहुरुपधानायमाने क्षणं ते
कान्तेस्तामन्तकारेर्द्युति विजितसुधाभानुनी जानुनीवः                    ॥२२॥

मञ्जीरी भूत भोगिप्रवरगणफणामण्डलान्तर्नितान्त-
व्यादीर्घानर्घरत्नद्युतिकिसलयिते स्तूयमानेद्युसद्भिः ।
बिभ्रत्यौ विभ्रमं वः स्फटिकमणिबृहद्दण्डवद्भासिते ये
जङ्घे शङ्खेन्दुशुभ्रे भृशमिह भवतां मानसे शूलपाणेः                    ॥२३॥

अस्तोकस्तोमशस्त्रैरपचितिममलांभूरिभावोपहारैः
कुर्वद्भिस्सर्वदोच्चैः सततमभिवृतौ ब्रह्मविद्देवलाद्यैः ।
सम्यक्संपूज्यमानाविहहृदिसरसीवानिशं युष्मदीये
शर्वस्य क्रीडतांतौप्रपदवरबृहत्कच्छपावच्छभासौ                    ॥२४॥

यः स्वस्यैकांशपातादतिबहुलगलद्रक्त वक्त्रं प्रणुन्न-
प्राणं प्राक्रोशयन् प्राङ्निजमचलवरं चालयन्तं दशास्यम् ।

प्रादाङ्गुल्योदिशन्तुद्रुतमयुगदृशः कल्मषप्लोषकल्याः
कल्याणं फुल्लमाल्यप्रकरविलसितावः प्रणद्धाहिवल्लयः ॥२५॥
प्रह्वः प्राचीनबर्हिः प्रमुखसुरवरप्रस्फुरन्मौलिसक्त-
ज्यायोरत्नोत्करोस्रैरविरतममला भूरिनीराजिताया ।
प्रोदग्राग्राप्रदेयात्ततिरिव रुचिरातारकाणां नितान्तं
नीलग्रीवस्य पादाम्बुरुहविलसितासान्नखालीसुखं वः ॥२६॥
सत्याः सत्याननेन्दावपि सविधगते ये विकासंदधाते
स्वान्ते स्वान्ते लभन्ते श्रियमिहसरसीवामरायेदधानः ।
लोलं लोलम्बकानांकुलमिवसुधियां सेवतेयेसदास्तां
भूत्यै भूत्यैणपाणेर्विमलतररुचस्तेपदाम्भोरुहेवः ॥२७॥
येषां रागादिदोषाक्षतमिति यतयोयान्ति मुक्तिं प्रसादा-
द्येवानम्रात्ममूर्तिद्युसदुषिपरिषन्मूर्ध्निशेषायमाणाः ।
श्रीकण्ठस्यारुणोद्यच्चरणसरसिजप्रोत्थितास्ते भावाख्या-
त्पारावाराच्चिरं वोदुरितहतिकृतस्तारयेयुः परागाः ॥२८॥
भूम्ना यस्यास्तसीम्ना भुवनमनुसृतं यत्परं धामधाम्नां
साम्नामाम्नायतत्त्वंयदपि च परमं यद्गुणातीतमाद्यम् ।
यच्चांहोहन्निरीहं गहनमितिमुहुः प्राहुरुच्चैर्महान्तो
माहेशं तन्महो मे महितमहरहर्मोहरोहं निहन्तु ॥२९॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीमच्छङ्करभगवतः कृतौ
॥ शिवकेशादिपादान्तवर्णनस्तोत्रं संपूर्णम् ॥

## ।। शिवानन्दलहरी ।।

कलाभ्यां चूडालंकृतशशिकलाभ्यां निजतपः-
फलाभ्यां भक्तेषु प्रकटितफलाभ्यां भवतु मे ।
शिवाभ्यामस्तोकत्रिभुवन शिवाभ्यां हृदि पुन-
र्भवाभ्यामानन्दस्फुरदनुभवाभ्यां नतिरियम् ।।१।।

गलन्ती शंभो त्वच्चरितसरितः किल्बिषरजो
दलन्ती धीकुल्यासरणिषु पतन्ती विजयताम् ।
दिशन्ती संसारभ्रमणपरितापोपशमनं
वसन्ती मच्चेतोहृदभुवि शिवानन्दलहरी ।।२।।

त्रयीवेद्यं हृद्यं त्रिपुरहरमाद्यं त्रिनयनं
जटाभारोदारं चलदुरगहारं मृगधरम् ।
महादेवं देवं मयि सदयभावं पशुपतिं
चिदालम्बं साम्बं शिवमतिविडम्बं हृदि भजे ।।३।।

सहस्रं वर्तन्ते जगति विबुधाः क्षुद्रफलदाः
न मध्ये स्वप्ने वा तदनुसरणं तत्कृतफलम् ।
हरिब्रह्मादीनामपि निकटभाजामसुलभं
चिरं याचे शंभो शिव शिव तवाम्भोजभजनम् ।।४।।

स्मृतौ शास्त्रे वैद्ये शकुनकविता गानफणितौ
पुराणे मन्त्रे वा स्तुतिनटनहास्येष्वचतुरः ।

कथं राज्ञां प्रीतिर्भवति मयि कोऽहं पशुपते
पशुं मां सर्वज्ञ प्रथितकृपया पालय विभो ॥५॥

घटो वा मृत्पिण्डोऽप्यणुरपि च धूमोऽग्निरचलः
पटो वा तन्तुर्वा परिहरति किं घोरशमनम् ।
वृथा कण्ठक्षोभं वहसि तरसा तर्कवचसा
पदाम्भोजं शंभोर्भज परमसौख्यं व्रज सुधीः ॥६॥

मनस्ते पादाब्जे निवसतु वचः स्तोत्रफणितौ
करौ चाभ्यर्चायां श्रुतिरपि कथाकर्णनविधौ ।
तव ध्याने बुद्धिर्नयनयुगलं मूर्तिविभवे
परग्रन्थान्कैर्वा परमशिव जाने परमतः ॥७॥

यथा बुद्धिः शुक्तौ रजतमिति काचाश्मनि मणि-
र्जले पैष्टे क्षीरं भवति मृगतृष्णासु सलिलम् ।
तथा देवभ्रान्त्या भजति भवदन्यं जडजनो
महादेवेशं त्वां मनसि च न मत्वा पशुपते ॥८॥

गभीरे कासारे विशति विजने घोरविपिने
विशाले शैले च भ्रमति कुसुमार्थं जडमतिः ।
समर्प्यैकं चेतः सरसिजमुमानाथ भवते
सुखेनावस्थातुं जन इह नजानाति किमहो ॥९॥

नरत्वं देवत्वं नगवनमृगत्वं मशकता
पशुत्वं कीटत्वं भवतु विहगत्वादिजननम् ।

सदा त्वत्पादाब्जस्मरणपरमानन्दलहरी-
विहारासक्तं चेद्धृदयमिह किं तेन वपुषा ॥१०॥

वटुर्वा गेही वा यतिरपि जटी वा तदितरो
नरो वा यः कश्चिद्भवतु भव किं तेन भवति ।
यदीयं हृत्पद्मं यदि भवदधीनं पशुपते
तदीयस्त्वं शंभो भवसि भवभारं च वहसि ॥११॥

गुहायां गेहे वा बहिरपि वने वाऽद्रिशिखरे
जले वा वह्नौ वा वसतु वसतेः किं वद फलम् ।
सदा यस्यैवान्तःकरणमपि शंभो तव पदे
स्थितं चेद्योगोऽसौ स च परमयोगी स च सुखी ॥१२॥

असारे संसारे निजभजनदूरे जडधिया
भ्रमन्तं मामन्धं परमकृपया पातुमुचितम् ।
मदन्यः को दीनस्तव कृपणरक्षातिनिपुण-
स्त्वदन्यः को वा मे त्रिजगति शरण्यः पशुपते? ॥१३॥

प्रभुस्त्वं दीनानां खलु परमबन्धुः पशुपते
प्रमुख्योऽहं तेषामपि किमुत बन्धुत्वमनयोः ।
त्वयैव क्षन्तव्याः शिव मदपराधाश्च सकलाः
प्रयत्नात्कर्तव्यं मदवनमियं बन्धुसरणिः ॥१४॥

उपेक्षा नो चेत्किं न हरसि भवद्ध्यानविमुखां
दुराशाभूयिष्ठां विधिलिपिमशक्तो यदि भवान् ।

शिरस्तद्वैधात्रं ननखलु सुवृत्तं पशुपते
कथं वा निर्यत्नं करनखमुखेनैव लुलितम् ? ॥१५॥

विरिञ्चिर्दीर्घायुर्भवतु भवता तत्परशिर-
श्चतुष्कं संरक्ष्यं स खलु भुवि दैन्यं लिखितवान् ।
विचारः को वा मां विशदकृपया पाति शिव ते
कटाक्षव्यापारः स्वयमपि च दीनावनपरः ॥१६॥

फलाद्वा पुण्यानां मयि करुणया वा त्वयि विभो
प्रसन्नेऽपि स्वामिन् भवदमलपादाब्जयुगलम् ।
कथं पश्येयं मां स्थगयति नमः संभ्रमजुषां
निलिम्पानां श्रेणिर्निजकनकमाणिक्यमकुटैः ॥१७॥

त्वमेको लोकानां परमफलदो दिव्यपदवीं
वहन्तस्त्वन्मूलां पुनरपि भजन्ते हरिमुखाः ।
कियद्वा दाक्षिण्यं तव शिव मदाशा च कियती
कदा वा मद्रक्षां वहसि करुणापूरितदृशा ? ॥१८॥

दुराशाभूयिष्ठे दुरधिपगृहद्वारघटके
दुरन्ते संसारे दुरितनिलये दुःखजनके ।
मदायासं किं न व्यपनयसि कस्योपकृतये
वदेयं प्रीतिश्चेत्तव शिव कृतार्थाः खलु वयम् ॥१९॥

सदा मोहाटव्यां चरति युवतीनां कुचगिरौ
नटत्याशाशाखास्वटति झटिति स्वैरमभितः ।

कपालिन् भिक्षो मे हृदयकपिमत्यन्तचपलं
दृढं भक्त्या बद्ध्वा शिव भवदधीनं कुरु विभो ॥२०॥

धृतिस्तम्भाधारां दृढगुणनिबद्धां सगमनां
विचित्रां पद्माढ्यां प्रतिदिवससन्मार्गघटिताम् ।
स्मरारे मच्चेतः स्फुटपटकुटीं प्राप्य विशदां
जय स्वामिन् शक्त्या सह शिव गणैः सेवित विभो ॥२१॥

प्रलोभाद्यैरर्थाहरणपरतन्त्रो धनिगृहे
प्रवेशोद्युक्तः सन्भ्रमति बहुधा तस्करपते ।
इमं चेतश्चोरं कथमिह सहे शङ्कर विभो
तवाधीनं कृत्वा मयि निरपराधे कुरु कृपाम् ॥२२॥

करोमि त्वत्पूजां सपदि सुखदो मे भव विभो
विधित्वं विष्णुत्वं दिशसि खलु तस्याः फलमिति ।
पुनश्च त्वां द्रष्टुं दिवि भुवि वहन्पक्षिमृगता-
मदृष्ट्वा तत्खेदं कथमिह सहे शङ्कर विभो ॥२३॥

कदा वा कैलासे कनकमणिसौधे सह गणै-
र्वसन्शंभोरग्रे स्फुटघटितमूर्धाञ्जलिपुटः ।
विभो साम्ब स्वामिन्परमशिव पाहीति निगद-
न्विधातॄणां कल्पान्क्षणमिव विनेष्यामि सुखतः ॥२४॥

स्तवैर्ब्रह्मादीनां जयजयवचोभिर्नियमनां
गणानां केलीभिर्मदकलमहोक्षस्य ककुदि ।

स्थितं नीलग्रीवं त्रिनयनमुमाश्लिष्टवपुषं
कदा त्वां पश्येयं करधृतमृगं खण्डपरशुम् ? ॥२५॥

कदा वा त्वां दृष्ट्वा गिरिश तव भव्याङ्घ्रियुगलं
गृहीत्वा हस्ताभ्यां शिरसि नयने वक्षसि वहन् ।
समाश्लिष्याघ्राय स्फुटजलजगन्धान्परिमला-
नलाभ्यां ब्रह्माद्यैर्मुदमनुभविष्यामि हृदये ? ॥२६॥

करस्थे हेमाद्रौ गिरिश निकटस्थे धनपतौ
गृहस्थे स्वर्भूजामरसुरभिचिन्तामणिगणे ।
शिरःस्थे शीतांशौ चरणयुगलस्थेऽखिलशुभे
कमर्थं दास्येऽहं भवतु भवदर्थं मम मनः ? ॥२७॥

सारूप्यं तव पूजने शिव महादेवेति संकीर्तने
सामीप्यं शिवभक्तिधुर्यजनतासाङ्गत्यसंभाषणे ।
सालोक्यं च चराचरात्मकतनुध्याने भवानीपते
सायुज्यं मम सिद्धमत्र भवति स्वामिन्कृतार्थोऽस्म्यहम् ॥२८॥

त्वत्पादाम्बुजमर्चयामि परमं त्वां चिन्तयाम्यन्वहं
त्वामीशं शरणं व्रजामि वचसा त्वामेव याचे विभो ।
वीक्षां मे दिश चाक्षुषीं सकरुणां दिव्यैश्चिरं प्रार्थितां
शंभो लोकगुरो मदीयमनसः सौख्योपदेशं कुरु ॥२९॥

वस्त्रोद्धूतविधौ सहस्रकरता पुष्पार्चने विष्णुता
गन्धे गन्धवहात्मताऽन्नपचने बर्हिर्मुखाध्यक्षता ।

पात्रे काञ्चनगर्भताऽस्ति मयि चेद्बालेन्दुचूडामणे
शुश्रूषां करवाणि ते पशुपते स्वामिंस्त्रिलोकीगुरो ॥३०॥

नालं वा परमोपकारकमिदं त्वेकं पशूनां पते
पश्यन्कुक्षिगतांश्चराचरगणान्बाह्यस्थितान्रक्षितुम् ।
सर्वामर्त्यपलायनौषधमतिज्वालाकरं भीकरं
निक्षिप्तं गरलं गलेन गिलितं नोद्गीर्णमेव त्वया ॥३१॥

ज्वालोग्रः सकलामरातिभयदः क्ष्वेलः कथं वा त्वया
दृष्टः किं च करे धृतः करतले किं पक्वजम्बूफलम् ।
जिह्वायां निहितश्च सिद्धघुटिका वा कण्ठदेशे भृतः
किं ते नीलमणिर्विभूषणमयं शंभो महात्मन्वद ? ॥३२॥

नालं वा सकृदेव देव भवतः सेवा नतिर्वा नुतिः
पूजा वा स्मरणं कथाश्रवणमप्यालोकनं मादृशाम् ।
स्वामिन्नस्थिरदेवतानुसरणायासेन किं लभ्यते
का वा मुक्तिरितः कुतो भवति चेत्किं प्रार्थनीयं तदा ? ॥३३॥

किं ब्रूमस्तव साहसं पशुपते कस्यास्ति शंभो भव-
द्धैर्यं चेदृशमात्मनः स्थितिरियं चान्यैः कथं लभ्यते ।
भ्रश्यद्देवगणं त्रसन्मुनिगणं नश्यत्प्रपञ्चं लयं
पश्यन्निर्भय एक एव विहरत्यानन्दसान्द्रो भवान् ॥३४॥

योगक्षेमधुरन्धरस्य सकलश्रेयःप्रदोद्योगिनो
दृष्टादृष्टमतोपदेशकृतिनो बाह्यान्तरव्यापिनः ।

सर्वज्ञस्य दयाकरस्य भवतः किं वेदितव्यं मया
शंभो त्वं परमान्तरङ्ग इति मे चित्ते स्मराम्यन्वहम् ॥३५॥

भक्तो भक्तिगुणावृते मुदमृतापूर्णे प्रसन्ने मनः
कुम्भे साम्ब तवाङ्घ्रिपल्लवयुगं संस्थाप्य संवित्फलम् ।
सत्त्वं मन्त्रमुदीरयन्निजशरीरागारशुद्धिं वह-
न्पुण्याहं प्रकटीकरोमि रुचिरं कल्याणमापादयन् ॥३६

आम्नायांबुधिमादरेण सुमनःसङ्घाः समुद्यन्मनो
मन्थानं दृढभक्तिरज्जुसहितं कृत्वा मथित्वा ततः।
सोमं कल्पतरुं सुपर्वसुरभिं चिन्तामणिं धीमतां
नित्यानन्दसुधां निरन्तररमासौभाग्यमातन्वते ॥३७

प्राक्पुण्याचलमार्गदर्शितसुधामूर्तिः प्रसन्नः शिवः
सोमः सद्गणसेवितो मृगधरः पूर्णस्तमोमोचकः ।
चेतःपुष्करलक्षितो भवति चेदानन्दपाथोनिधिः
प्रागल्भ्येन विजृंभते सुमनसां वृत्तिस्तदा जायते ॥३८

धर्मो मे चतुरङ्घ्रिकः सुचरितः पापं विनाशं गतं
कामक्रोधमदादयो विगलिताः कालाः सुखाविष्कृताः ।
ज्ञानानन्दमहौषधिः सुफलिता कैवल्यनाथे सदा
मान्ये मानसपुण्डरीकनगरे राजावतंसे स्थिते ॥३९

धीयन्त्रेण वचोघटेन कविताकुल्योपकुल्याक्रमै-
रानीतश्च सदाशिवस्य चरितांभोराशिदिव्यामृतैः ।

हृत्केदारयुताश्च भक्तिकलमाः साफल्यमातन्वते
दुर्भिक्षान्मम सेवकस्य भगवन्विश्वेश भीतिः कुतः ॥४०॥

पापोत्पातविमोचनाय रुचिरैश्वर्याय मृत्युञ्जय-
स्तोत्रध्याननतिप्रदक्षिणसपर्यालोकनाकर्णने ।
जिह्वाचित्तशिरोङ्घ्रिहस्तनयनश्रोत्रैरहं प्रार्थितो
मामाज्ञापय तन्निरूपय मुहुर्मामेव मा मेऽवचः ॥४१॥

गांभीर्यं परिखापदं घनधृतिः प्राकार उद्यद्गुण-
स्तोमश्चाप्तबलं घनेन्द्रियचयो द्वाराणि देहे स्थितः ।
विद्या वस्तुसमृद्धिरित्यखिलसामग्रीसमेते सदा
दुर्गातिप्रियदेव मामकमनोदुर्गे निवासं कुरु ॥४२॥

मा गच्छ त्वमितस्ततो गिरिश भो मय्येव वासं कुरु
स्वामिन्नादिकिरात मामकमनःकान्तारसीमान्तरे ।
वर्तन्ते बहुशो मृगा मदजुषो मात्सर्यमोहादय-
स्तान्हत्वा मृगयाविनोदरुचितालाभं च संप्राप्स्यसि ॥४३॥

करलग्नमृगः करीन्द्रभङ्गो घनशार्दूलविखण्डनोऽस्त जन्तुः ।
गिरिशो विशदाकृतिश्च चेतः कुहरे पञ्चमुखोऽन्तिमे कुतो भीः ॥

छन्दःशाखिशिखान्वितैर्द्विजवरैः संसेविते शाश्वते
सौख्यापादिनि खेदभेदिनि सुधासारैः फलैर्दीपिते ।
चेतःपक्षिशिखामणे त्यज वृथासञ्चारमन्यैरलं
नित्यं शङ्करपादपद्मयुगलीनीडे विहारं कुरु ॥४५॥

आकीर्णे नखराजिकान्तिविभवैरुद्यत्सुधावैभवै-
राधौतेऽपि च पद्मरागललिते हंसव्रजैराश्रिते ।
नित्यं भक्तिवधूगणैश्च रहसि स्वेच्छाविहारं कुरु
स्थित्वा मानसराजहंस गिरिजानाथाङ्घ्रिसौधान्तरे ॥४६॥

शंभुध्यानवसन्तसङ्गिनि हृदारामेऽघजीर्णच्छदाः
स्रस्ता भक्तिलताच्छटा विलसिताः पुण्यप्रवालश्रिताः ।
दीप्यन्ते गुणकोरका जपवचःपुष्पाणि सद्वासना
ज्ञानानन्दसुधामरन्दलहरी संवित्फलाभ्युन्नतिः ॥४७॥

नित्यानन्दरसालयं सुरमुनिस्वान्तांबुजाताश्रयं
स्वच्छं सद्द्विजसेवितं कलुषहृत्सद्वासनाविष्कृतम् ।
शंभुध्यानसरोवरं व्रज मनोहंसावतंस स्थिरं
किं क्षुद्राश्रयपल्वलभ्रमणसंजातश्रमं प्राप्स्यसि ॥४८॥

आनन्दामृतपूरिता हरपदांभोजालवालोद्यता
स्थैर्योपघ्नमुपेत्य भक्तिलतिका शाखोपशाखान्विता ।
उच्चैर्मानसकायमानपटलीमाक्रम्य निष्कल्मषा
नित्याभीष्टफलप्रदा भवतु मे सत्कर्मसंवर्धिता ॥४९॥

संध्यारम्भविजृम्भितं श्रुतिशिरःस्थानान्तराधिष्ठितं
सप्रेमभ्रमराभिराममसकृत्सद्वासनाशोभितम् ।
भोगीन्द्राभरणं समस्तसुमनःपूज्यं गुणाविष्कृतं
सेवे श्रीगिरिमल्लिकार्जुनमहालिङ्गं शिवालिङ्गितम् ॥५०॥

भृङ्गीच्छानटनोत्कटः करिमदग्राही स्फुरन्माधवा-
ह्लादो नादयुतो महासितवपुः पञ्चेषुणा चादृतः ।
सत्पक्षः सुमनोवनेषु स पुनः साक्षान्मदीये मनो-
राजीवे भ्रमराधिपो विहरतां श्रीशैलवासी विभुः ॥५१॥

कारुण्यामृतवर्षिणं घनविपद्ग्रीष्मच्छिदाकर्मठं
विद्यासस्यफलोदयाय सुमनःसंसेव्यमिच्छाकृतिम् ।
नृत्यद्भक्तमयूरमद्रिनिलयं चञ्चज्जटामण्डलं
शंभो वाञ्छति नीलकंधर सदा त्वां मे मनश्चातकः ॥५२॥

आकाशेन शिखी समस्तफणिनां नेत्रा कलापी नता-
नुग्राहिप्रणवोपदेशनिनदैः केकीति यो गीयते ।
श्यामां शैलसमुद्भवां घनरुचिं दृष्ट्वा नटन्तं मुदा
वेदान्तोपवने विहाररसिकं तं नीलकण्ठं भजे ॥५३॥

सन्ध्याघर्मदिनात्ययो हरिकराघातप्रभूतानक-
ध्वानो वारिदगर्जितं दिविषदां दृष्टिच्छटा चञ्चला ।
भक्तानां परितोषबाष्पविततिर्वृष्टिर्मयूरी शिवा
यस्मिन्नुज्ज्वलताण्डवं विजयते तं नीलकण्ठं भजे ॥५४॥

आद्यायामिततेजसे श्रुतिपदैर्वेद्याय साध्याय ते
विद्यानन्दमयात्मने त्रिजगतः संरक्षणोद्योगिने ।
ध्येयायाखिलयोगिभिः सुरगणैर्गेयाय मायाविने
सम्यक्ताण्डवसंभ्रमाय जटिने सेयं नतिः शंभवे ॥५५॥

नित्याय त्रिगुणात्मने पुरजिते कात्यायनीश्रेयसे
सत्यायादिकुटुम्बिने मुनिमनःप्रत्यक्षचिन्मूर्तये ।
मायासृष्टजगत्त्रयाय सकलाम्नायान्तसंचारिणे
सायंताण्डवसंभ्रमाय जटिने सेयं नतिः शंभवे ॥५६॥

नित्यं स्वोदरपूरणाय सकलानुद्दिश्य वित्ताशया
व्यर्थं पर्यटनं करोमि भवतः सेवां न जाने विभो ।
मज्जन्मान्तरपुण्यपाकबलतस्त्वं शर्व सर्वान्तर-
स्तिष्ठस्येव हि तेन वा पशुपते ते रक्षणीयोऽस्म्यहम् ॥५७॥

एको वारिजबान्धवः क्षितिनभोव्याप्तं तमोमण्डलं
भित्त्वा लोचनगोचरोऽपि भवति त्वं कोटिसूर्यप्रभः ।
वेद्यः किं न भवस्यहो घनतरं कीदृग्भवेन्मत्तम-
स्तत्सर्वं व्यपनीय मे पशुपते साक्षात्प्रसन्नो भव ॥५८॥

हंसः पद्मवनं समिच्छति यदा नीलाम्बुदं चातकः
कोकः कोकनदप्रियं प्रतिदिनं चन्द्रं चकोरस्तथा ।
चेतो वाञ्छति मामकं पशुपते चिन्मार्गमृग्यं विभो
गौरीनाथ भवत्पदाब्जयुगलं कैवल्यसौख्यप्रदम् ॥५९॥

रोधस्तोयहृतः श्रमेण पथिकश्छायां तरोर्वृष्टितो
भीतः स्वस्थगृहं गृहस्थमतिथिर्दीनः प्रभुं धार्मिकम् ।
दीपं संतमसाकुलश्च शिखिनं शीतावृतस्त्वं तथा
चेतः सर्वभयापहं व्रज सुखं शंभोः पदाम्भोरुहम् ॥६०॥

अङ्कोलं निजबीजसंततिरयस्कान्तोपलं सूचिका
साध्वी नैजविभुं लता क्षितिरुहं सिन्धुः सरिद्वल्लभम् ।
प्राप्नोतीह,यथा तथा पशुपतेः पादारविन्दद्वयं
चेतोवृत्तिरुपेत्य तिष्ठति सदा सा भक्तिरित्युच्यते ॥६१॥

आनन्दाश्रुभिरातनोति पुलकं नैर्मल्यतश्छादनं
वाचाशङ्खमुखे स्थितश्च जठरापूर्तिं चरित्रामृतैः ।
रुद्राक्षैर्भसितेन देव वपुषो रक्षां भवद्भावना
पर्यङ्के विनिवेश्य भक्तिजननी भक्तार्भकं रक्षति ॥६२॥

मार्गावर्तितपादुका पशुपतेरङ्गस्य कूर्चायते
गण्डूषाम्बुनिषेचनं पुररिपोर्दिव्याभिषेकायते ।
किंचिद्भक्षितमांसशेषकबलं नव्योपहारायते
भक्तिः किं न करोत्यहो वनचरो भक्तावतंसायते ॥६३॥

वक्षस्ताडनमन्तकस्य कठिनापस्मारसंमर्दनं
भूभृत्पर्यटनं यमत्सुराशिरःकोटीरसङ्घर्षणम् ।
कर्मेदं मृदुलस्य तावकपदद्वन्द्वस्य किं वोचितं
मच्चेतोमणिपादुकाविहरणं शंभो सदाङ्गी कुरु ॥६४॥

वक्षस्ताडनशङ्कया विचलितो वैवस्वतो निर्जराः
कोटीरोज्ज्वलरत्नदीपकलिकानीराजनं कुर्वते ।
दृष्ट्वा मुक्तिवधूस्तनोति निभृताश्लेषं भवानीपते
यच्चेतस्तव पादपद्मभजनं तस्येह किं दुर्लभम् ॥६५॥

क्रीडार्थं सृजति प्रपञ्चमखिलं क्रीडामृगास्ते जनाः
मत्कर्माचरितं मया च भवतः प्रीत्यै भवत्येव तत् ।
शंभो स्वस्य कुतूहलस्य करणं मच्चेष्टितं निश्चितं
तस्मान्मामकरक्षणं पशुपते कर्तव्यमेव त्वया ॥६६॥

बहुविधपरितोषबाष्पपूरस्फुटपुलकाङ्कितचारुभोगभूमिम् ।
चिरपदफलकाङ्क्षिसेव्यमानां परमसदाशिवभावनां प्रपद्ये ॥६७॥

अमितमुदमृतं मुहुर्दुहन्तीं विमलभवत्पदगोष्ठमावसन्तीम् ।
सदय पशुपते सुपुण्यपाकां मम परिपालय भक्तिधेनुमेकाम् ॥६८॥

जडता पशुता कलङ्किता कुटिलचरत्वं च नास्ति मयि देव ।
अस्ति यदि राजमौले भवदाभरणस्य नास्मि किं पात्रम्? ॥६९॥

अरहसि रहसि स्वतन्त्रबुद्ध्या वरिवसितुं सुलभः प्रसन्नमूर्तिः ।
अगणितफलदायकः प्रभुर्मे जगदधिको हृदि राजशेखरोऽस्ति ॥७०॥

आरूढभक्तिगुणकुञ्चितभावचाप-
युक्तैः शिवस्मरणबाणगणैरमोघैः ।
निर्जित्य किल्बिषरिपून्विजयी सुधीन्द्रः
सानन्दमावहति सुस्थिरराजलक्ष्मीम् ॥७१॥

ध्यानाञ्जनेन समवेक्ष्य तमःप्रदेशं
भित्त्वा महाबलिभिरीश्वरनाममन्त्रैः ।
दिव्याश्रितं भुजगभूषणमुद्वहन्ति
ये पादपद्ममिह ते शिव ते कृतार्थाः ॥७२॥

भूदारतामुदवहद्यदपेक्षया श्रीभूदार एव किमतः सुमते लभस्व ।
केदारमाकलितमुक्तिमहौषधीनां पादारविन्दभजनं परमेश्वरस्य ॥

आशापाशक्लेशदुर्वासनादिभेदोद्युक्तैर्दिव्यगन्धैरमन्दैः ।
आशाशाटीकस्य पादारविन्दं चेतःपेटीं वासितां मे तनोतु ॥७४॥

कल्याणिनं सरसचित्रगतिं सवेगं सर्वेङ्गितज्ञमनघं ध्रुवलक्षणाढ्यम् ।
चेतस्तुरङ्गमधिरुह्य चर स्मरारे नेतः समस्तजगतां वृषभाधिरूढ ॥

भक्तिर्महेशपदपुष्करमावसन्ती
कादम्बिनीव कुरुते परितोषवर्षम् ।
संपूरितो भवति यस्य मनस्तटाक-
स्तज्जन्मसस्यमखिलं सफलं च नान्यत् ॥७६॥

बुद्धिः स्थिरा भवितुमीश्वरनादपद्मसक्ता वधूर्विरहिणीव सदा स्मरन्ती ।
सद्भावनास्मरणदर्शनकीर्तनादि संमोहितेव शिवमन्त्रजपेन विन्ते ॥

सदुपचारविधिष्वनुबोधितां सविनयां सुहृदं समुपाश्रिताम् ।
मम समुद्धर बुद्धिमिमां प्रभो वरगुणेन नवोढवधूमिव ॥७८॥

नित्यं योगिमनःसरोजदलसंचारक्षमस्त्वत्क्रमः
शंभो तेन कथं कठोरयमराड्वक्षःकवाटक्षतिः ।
अत्यन्तं मृदुलं त्वदङ्घ्रियुगलं हा मे मनश्चिन्तय-
त्येतल्लोचनगोचरं कुरु विभो हस्तेन संवाहये ॥७९॥

एष्यत्येष जनिं मनोऽस्य कठिनं तस्मिन्नटानीति म-
द्रक्षायै गिरिसीम्नि कोमलपदन्यासः पुराभ्यासितः ।

नो चेद्दिव्यगृहान्तरेषु सुमनस्तल्पेषु वेद्यादिषु
प्रायः सत्सु शिलातलेषु नटनं शंभो किमर्थं तव ? ॥८०॥

कश्चित्कालमुमामहेश भवतः पादारविन्दार्चनैः
कश्चिद्ध्यानसमाधिभिश्च नतिभिः कश्चित्कथाकर्णनैः ।
कश्चित्कश्चिदवेक्षणैश्च नुतिभिः कश्चिद्दशामीदृशीं
यः प्राप्नोति मुदा त्वदर्पितमना जीवन्समुक्तः खलु ॥८१॥

बाणत्वं वृषभत्वमर्धवपुषा भार्यात्वमार्यापते
घोणित्वं सखिता मृदङ्गवहता चेत्यादि रूपं दधौ ।
त्वत्पादे नयनार्पणं च कृतवांस्त्वद्देहभागो हरिः
पूज्यात्पूज्यतरः स एव हि न चेत्को वा तदन्योऽधिकः ॥८२॥

जननमृतियुतानां सेवया देवतानां
न भवति सुखलेशः संशयो नास्ति तत्र ।
अजनिममृतरूपं साम्बमीशं भजन्ते
य इह परमसौख्यं ते हि धन्या लभन्ते ॥८३॥

शिव तव परिचर्यासंनिधानाय गौर्या
भव मम गुणधुर्यां बुद्धिकन्यां प्रदास्ये ।
सकलभुवनबन्धो सच्चिदानन्दसिन्धो
सदय हृदयगेहे सर्वदा संवस त्वम् ॥८४॥

जलधिमथनदक्षो नैव पातालभेदी
न च वनमृगयायां नैव लुब्धः प्रवीणः ।

अशनकुसुमभूषावस्त्रमुख्यां सपर्यां
कथयकथमहं ते कल्पयामीन्दुमौले ? ॥८५॥

पूजाद्रव्यसमृद्धयो विरचिताः पूजां कथं कुर्महे
पक्षित्वं न च वा किटित्वमपि न प्राप्तं मया दुर्लभम् ।
जाने मस्तकमाङ्घ्रिपल्लवमुमाजाने न तेऽहं विभो
न ज्ञातं हि पितामहेन हरिणा तत्त्वेन तद्रूपिणा ॥८६॥

अशनं गरलं फणी कलापो वसनं चर्म च वाहनं महोक्षः ।
मम दास्यसि किं किमस्ति शंभो तव पादाम्बुजभक्तिमेव देहि ॥

यदा कृताम्भोनिधिसेतुबन्धनः करस्थलाधःकृतपर्वताधिपः ।
भवानि ते लङ्घितपद्मसंभव स्तदा शिवार्चास्तवभावनाक्षमः ॥८८॥

नतिभिर्नुतिभिस्त्वमीश पूजा विधिभिर्ध्यानसमाधिभिर्न तुष्टः ।
धनुषा मुसलेन चाश्मभिर्वा वद ते प्रीतिकरं तथा करोमि ॥८९॥

वचसा चरितं वदामि शंभो रहमुद्योगविधासु तेऽप्रसक्तः ।
मनसाऽऽकृतिमीश्वरस्य सेवे शिरसा चैव सदाशिवं नमामि ॥९०॥

आद्याविद्या हृद्गता निर्गतासीद्विद्या हृद्या हृद्गता त्वत्प्रसादात् ।
सेवे नित्यं श्रीकरं त्वत्पदाब्जं भावे मुक्तेर्भाजनं राजमौले ॥९१॥

दूरीकृतानि दुरितानि दुरक्षराणि दौर्भाग्यदुःखदुरहंकृतिदुर्वचांसि ।
सारं त्वदीयचरितं नितरां पिबन्तं गौरीश मामिह समुद्धर सत्कटाक्षैः॥

सोमकलाधरमौलौ कोमलघनकंधरे महामहासि ।
स्वामिनि गिरिजानाथे मामकहृदयं निरन्तरं रमताम् ॥९३॥

सा रसना ते नयने तावेव करौ स एव कृतकृत्यः ।
या ये यौ यो भर्गं वदतीक्षेते सदार्चतः स्मरति ॥९४॥

अतिमृदुलौ मम चरणावतिकठिनं ते मनो भवानीश ।
इति विचिकित्सां संत्यज शिवकथमासीद्गिरौ तथा वेश्म ॥९५॥

धैर्याङ्कुशेन निभृतं रभसादाकृष्य भक्तिशृङ्खलया ।
पुरहर चरणालाने हृदयमदेभं बधान चिद्यन्त्रैः ॥९६॥

प्रचरत्यभितः प्रगल्भवृत्त्या मदवानेष मनःकरी गरीयान् ।
परिगृह्य नयेन भक्तिरज्ज्वा परमं स्थाणुपदं दृढं नयामुम् ॥९७॥

सर्वालङ्कारयुक्तां सरलपदयुतां साधुवृत्तां सुवर्णां
सद्भिः संस्तूयमानां सरसगुणयुतां लक्षितां लक्षणाढ्याम् ।
उद्यद्भूषाविशेषामुपगतविनयां द्योतमानार्थरेखां
कल्याणीं देव गौरीप्रिय कवितकन्यकां त्वं गृहाण ॥९८॥

इदं ते युक्तं वा परमशिव कारुण्यजलधे
गतौ तिर्यग्रूपं तव पदशिरोदर्शनधिया ।
हरिब्रह्माणौ तौ दिवि भुवि चरन्तौ श्रमयुतौ
कथं शंभो स्वामिन्कथय मम वेद्योऽसि पुरतः ॥९९॥

स्तोत्रेणालमहं प्रवच्मि न मृषा देवा विरिञ्च्यादयः
स्तुत्यानां गणनाप्रसङ्गसमये त्वामग्रगण्यं विदुः ।
माहात्म्याग्रविचारणप्रकरणे धानातुषस्तोमव-
द्धूतास्त्वां विदुरुत्तमोत्तमफलं शंभो भवत्सेवकाः ॥१००॥

॥ श्रीशङ्करभगवत्पादकृतिषु शिवानन्दलहरी संपूर्णा ॥

## ॥ अर्धनारीश्वरस्तोत्रम् ॥

चाम्पेयगौरार्धशरीरकायै कर्पूरगौरार्धशरीरकाय ।
धाम्मिल्लकायैच जटाधराय नमः शिवायैच नमः शिवाय ॥१॥
कस्तूरिकाकुङ्कुमचर्चितायै चितारजःपुञ्जविचर्चिताय ।
कृतस्मरायै विकृतस्मराय नमः० ॥२॥
झणत्क्वणत्कङ्कण नूपुरायै पादाब्जराजत्फणिनूपुराय ।
हेमाङ्गदायै भुजगाङ्गदाय नमः० ॥३॥
विशालनीलोत्पललोचनायै विकासिपङ्केरुहलोचनाय ।
समेक्षणायै विषमेक्षणाय नमः० ॥४॥
मन्दारमालाकलितालकायै कपालमालाङ्कितकन्धराय ।
दिव्याम्बरायैच दिगम्बराय नमः० ॥५॥
अम्भोधरश्यामरु कुन्तलायै तटित्प्रभाताम्रजटाधराय ।
निरीश्वरायै निखिलेश्वराय नमः० ॥६॥
प्रपञ्चसृष्ट्युन्मुखलास्यकायै समस्तसंहारकताण्डवाय ।
जगज्जनन्यै जगदेकपित्रे नमः० ॥७॥
प्रदीप्तरत्नोज्ज्वलकुण्डलायै स्फुरन्महापन्नगभूषणाय ।
शिवान्वितायै च शिवान्विताय नमः० ॥८॥
एतत्पठेदष्टकमिष्टदं यो भक्त्या समान्यो भुविदीर्घजीवी ।
प्राप्नोतिसौभाग्यमनन्तकालं भूयात्सदास्यसमस्तसिद्धिः ॥९॥

॥ इति श्रीमच्छङ्कराचार्यविरचितं अर्धनारीश्वरस्तोत्रं संपूर्णम् ॥

---

## ॥ शिवनामावल्यष्टकम् ॥

हे चन्द्रचूड मदनान्तक शूलपाणे
स्थाणो गिरीश गिरिजेश महेशशम्भो ।
भूतेशभीतभयसूदनमामनाथं
संसारदुःखगहनाज्जगदीश रक्ष ॥१॥

हे पार्वतीहृदय वल्लभचन्द्रमौले भूताधिप प्रमथनाथ गिरीश चाप ।
हे वामदेव भवरुद्र पिनाकपाणे संसार० ॥२॥

हे नीलकण्ठ वृषभध्वज पञ्चवक्त्र लोकेश शेषवलय प्रमथेशशर्व ।
हे धूर्जटे पशुपते गिरिजापते मां संसार० ॥३॥

हे विश्वनाथ शिवशङ्कर देवदेव गङ्गाधर प्रमथनायक नन्दिकेश ।
बाणेश्वरान्धकरिपो हर लोकनाथ संसार० ॥४॥

वाराणसीपुरपते मणिकर्णिकेश वीरेश दक्षमखकाल विभो गणेश ।
सर्वज्ञ सर्वहृदयैक निवास संसार० ॥५॥

श्रीमन्महेश्वर कृपामय हे दयालो
हे व्योमकेश शितिकण्ठ गणाधिनाथ ।
भस्माङ्गराग नृकपालकलापमाल संसार० ॥६॥

कैलासशैलविनिवास वृषाकपे हे मृत्युञ्जय त्रिनयन त्रिजगन्निवास ।
नारायणप्रियमदापह शक्तिनाथ संसार० ॥७॥

विश्वेश विश्वभवनाशक विश्वरूप विश्वात्मक त्रिभुवनैकगुणाधिकेश ।
हे विश्वनाथ करुणामय दीनबन्धो संसार० ॥८॥

गौरीविलासभवनाय महेश्वराय पञ्चाननाय शरणागत कल्पकाय ।
शर्वाय सर्वजगता मधिपाय तस्मै दारिद्र्यदुःखदहनाय नमः शिवाय ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीमच्छङ्करभगवतः कृतौ
॥ शिवनामावल्यष्टकं संपूर्णम् ॥

## ॥ दशश्लोकी ॥

न भूमिर्न तोयं न तेजो न वायुर्न खं नेंद्रियं वा न तेषां समूहः ।
अनैकान्तिकत्वात्सुषुप्त्यैकसिद्धस्तदेकोऽवशिष्टश्शिवः केवलोऽहम् ॥ १ ॥

न वर्णा न वर्णाश्रमाचारधर्मा न मे धारणाध्यानयोगादयोऽपि ।
अनात्माश्रयोऽहं ममाध्यासहानात्तदेकोऽवशिष्टश्शिवः केवलोऽहम् ॥

न माता पिता वा न देवा न लोका न वेदा नयज्ञा न तीर्थं ब्रुवंति ।
सुषुप्तौ निरस्तातिशून्यात्मकत्वात्तदेकोऽवशिष्टश्शिवः केवलोऽहम् ॥ ३ ॥

न सांख्यं न शैवं न तत्पाञ्चरात्रं न जैनं न मीमांसकादेर्मतं वा ।
विशिष्टानुभूत्या विशुद्धात्मकत्वात्तदेकोऽवशिष्टश्शिवः केवलोऽहम् ॥

न चोर्ध्वं न चाधो न चान्तर्न बाह्यं न मध्यन्न तिर्यङ् न पूर्वापरा दिक् ।
वियद्व्यापकत्वा दखण्डैकरूपस्तदेकोऽवशिष्टश्शिवः केवलोऽहम् ॥ ५ ॥

न शुक्लं न कृष्णं न रक्तं न पीतं न कुब्जं न पीनं न ह्रस्वं न दीर्घम् ।
अरूपं तथा ज्योतिराकारकत्वात्तदेकोऽवशिष्टश्शिवः केवलोऽहम् ॥

न शास्ता न शास्त्रं न शिष्यो न शिक्षा न च त्वं न चाहं नचायं प्रपञ्चः ।
स्वरूपावबोधो विकल्पासहिष्णुस्तदेकोऽवशिष्टश्शिवः केवलोऽहम् ॥

न जाग्रन्न मे स्वप्नको वा सुषुप्ति र्न विश्वो न वा तैजसः प्राज्ञको वा ।
अविद्यात्मकत्वात्त्रयाणां तुरीयस्तदेकोऽवशिष्टश्शिवः केवलोऽहम् ॥
अपि व्यापकत्वाद्धि तत्वप्रयोगात्स्वतस्सिद्धभावा दनन्याश्रयत्वात् ।
जगत्तुच्छ मेतत्समस्तं तदुस्यात्तदेकोऽवशिष्टश्शिवः केवलोऽहम्॥९॥
न चैकं तदन्य द्वितीयं उत स्यान्न वा केवलत्वन्न चाकेवलत्वम् ।
न शून्यं न चाशून्य मद्वैतकत्वात्कथं सर्ववेदान्तसिद्धिं ब्रवीमि ॥
दशश्लोकवर्या इमे सम्यगुक्ता अहो शङ्कराचार्यवक्त्रारविन्दात् ।
अजस्रं पठन्तीह संतोषबुद्ध्या प्रयांत्येव ते सच्चिदानन्दरूपम् ॥११॥

॥ इति श्रीमच्छङ्कराचार्यविरचिता दशश्लोकी संपूर्णा ॥

## ॥ दशश्लोकीस्तुतिः ॥

सांबो नः कुलदैवतं पशुपते सांब त्वदीया वयं
सांबं स्तौमि सुरासुरोरगगणा स्सांबेन सन्तारिताः ।
सांबायास्तु नमो मया विरचितं सांबात्परं नो भजे
सांबस्यानुचरोऽस्म्यहं मम रति स्सांबे परब्रह्मणि ॥१॥

विष्ण्वाद्याश्च पुरत्रयं सुरगणा जेतुं न शक्तास्स्वयं
यं शंभुं भगवन्वयं तु पशवोऽस्माकं त्वमेवेश्वरः ।
स्वस्वस्थाननियोजितास्सुमनसस्स्वस्था बभूवुस्तत-
स्तस्मिन्मे हृदयं सुखेन रमतां सांबे परब्रह्मणि ॥२॥

क्षोणी यस्य रथो रथाङ्गयुगळं चन्द्रार्कबिम्बद्वयं
कोदण्डः कनकाचलो हरिरभूद्बाणो विधिस्सारथिः ।
तूणीरो जलधिर्हयाश्श्रुतिचयो मौर्वी भुजङ्गाधिप स्तस्मिन्मे० ॥३॥
येनापादित मङ्गजाङ्गभसितं दिव्याङ्गरागैस्समं
येन स्वीकृत मब्जसम्भवशिरस्सौवर्णपात्रै स्समं ।
येनाङ्गीकृतमच्युतस्य नयनं पूजारविन्दैस्समं तस्मिन्मे० ॥४॥
गोविन्दादधिकं न दैवत मिति प्रोच्चार्य हस्तावुभा-
वुद्धृत्याथ शिवस्य सन्निधिगतो व्यासो मुनीनां पुरः ।
यस्य स्तम्भितपाणिरानतिकृता नन्दीश्वरेणाभवत्तस्मिन्मे० ॥५॥
आकाशश्च कुठायते दश दिशाभोगोदुकूलयते
शीतांशुः प्रसवायते स्थिरतरानन्दः स्वरूपायते ।
वेदान्तो निलयायते सुविनयो यस्य स्वभावायते तस्मिन्मे० ॥६॥
विष्णुर्यस्य सहस्रनामनियमादम्भोरुहाण्यर्चय-
न्नेकोनोपचितेषु नेत्रकमलं नैजं पदाब्जद्वयम् ।
संपूज्यासुरसंहतिं विदळयंस्त्रैलोक्य पालोऽभवत्तस्मिन्मे० ॥७॥
शौरिं सत्यगिरं वराहवपुषं पादांबुजादर्शने
चक्रे यो दयया समस्तजगतां नाथं शिरोदर्शने ।
मिथ्यावाचमपूज्यमेव सततं हंसस्वरूपं विधिं तस्मिन्मे० ॥८॥
यस्यासन्धरणीजलाग्निपवनव्योमार्कचन्द्रादयो
विख्यातास्तनवोऽष्टधा परिणता नान्यत्ततो वर्तते ।
ओंकारार्थविवेकिनी श्रुतिरियं चाचष्ट तुर्यं शिवं तस्मिन्मे० ॥९॥

विष्णु ब्रह्मसुराधिपप्रभृतय स्सर्वेऽपि देवासुरा-
स्संभूताज्जलधेर्विषात्परिभवं प्राप्ता यमेत्येश्वरम् ।
यानार्ता श्छरणागतानितिसुरान्योऽरक्षदर्धक्षणात्तस्मिन्मे०  ॥१०॥

॥ इति श्रीमच्छङ्कराचार्यविरचिता दशश्लोकीस्तुतिः संपूर्णा ॥

## ॥ श्रीदक्षिणामूर्त्यष्टकम् ॥

मन्दस्मितं स्फुरितमुग्धमुखारविंदं कन्दर्पकोटिशतसुन्दरदिव्यमूर्तिम् ।
आताम्रकोमलजटाघटितेंदुरेखमालोकये वटतटीनिलयं दयालुम् ॥१॥

विश्वं दर्पणदृश्यमाननगरी तुल्यं निजान्तर्गतं
पश्यन्नात्मनि मायया बहिरिवोद्भूतं यथा निद्रया ।
यस्साक्षात्कुरुते प्रबोधसमये स्वात्मान मेवाद्वयं
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये  ॥२॥

बीजस्यान्तरिवाङ्कुरो जगदिदं प्राङ्निर्विकल्पं शनै-
र्मायाकल्पितदेशकालकलना वैचित्र्यचित्रीकृतम् ।
मायावीव विजृम्भयत्यपि महायोगीव यस्स्वेच्छया तस्मै०  ॥३॥

यस्यैव स्फुरणं सदात्मक मसत्कल्पार्थकं भासते
साक्षात्तत्त्वमसीति वेदवचसा यो बोधयत्याश्रितान् ।
यत्साक्षात्करणाद्भवेन्न पुनरावृत्तिर्भवांभोनिधौ तस्मै०  ॥४॥

नानाछिद्रघटोदरस्थितमहादीपप्रभाभास्वरं
ज्ञानं यस्य तु चक्षुरादिकरणद्वारा बहिः स्पन्दते ।

जानामीति तमेव भान्तमनुभात्येतत्समस्तं जगत्तस्मै० ॥५॥

देहं प्राणमपीन्द्रियाण्यपि चलां बुद्धिं च शून्यं विदुः
स्त्रीबालान्धजडोपमास्त्वहमिति भ्रान्ता भृशं वादिनः ।
मायाशक्तिविलासकल्पितमहाव्यामोहसंहारिणे तस्मै० ॥६॥

राहुग्रस्तदिवाकरेंदुसदृशो मायासमाच्छादना-
त्सन्मात्रः करणोपसंहरणतो योऽभूत्सुषुप्तः पुमान् ।
प्रागस्वाप्समिति प्रबोधसमये यः प्रत्यभिज्ञायते तस्मै० ॥७॥

बाल्यादिष्वपि जाग्रदादिषु तथा सर्वास्ववस्थास्वपि
व्यावृत्तास्वनुवर्तमानमहमित्यन्तं स्फुरन्तं सदा ।
स्वात्मानं प्रकटीकरोति भजतां यो मुद्रया भद्रया तस्मै ॥८॥

विश्वं पश्यति कार्यकारणतया स्वस्वामिसम्बन्धत-
श्शिष्याचार्यतया तथैव पितृपुत्राद्यात्मना भेदतः ।
स्वप्ने जाग्रति वा य एष पुरुषो मायापरिभ्रामितस्तस्मै० ॥९॥

भूरम्भांस्यनलोऽनिलोऽम्बरमहर्नाथो हिमांशुः पुमा-
नित्याभाति चराचरात्मकमिदं यस्यैव मूर्त्यष्टकम् ।
नान्यत्किञ्चन विद्यते विमृशतां यस्मात्परस्माद्विभोस्तस्मै० ॥१०॥

सर्वात्मत्वमिति स्फुटीकृतमिदं यस्मादमुष्मिंस्तवे
तेनास्य श्रवणात्तदर्थमननाद्ध्यानाच्च संकीर्तनात् ।
सर्वात्मत्वमहाविभूतिसहितं स्यादीश्वरत्वं स्वतः
सिध्येत्तत्पुनरष्टधा परिणतं चैश्वर्यमव्याहतम् ॥११॥

वटविटपिसमीपे भूमिभागे निषण्णं
सकलमुनिजनानां ज्ञानदातारमारात् ।
त्रिभुवनगुरुमीशं दक्षिणामूर्तिदेवं
जननमरणदुःखच्छेददक्षं नमामि ॥१२॥

चित्रं वटतरोर्मूले वृद्धाश्शिष्या गुरुर्युवा ।
गुरोस्तु मौनं व्याख्यानं शिष्यास्तु छिन्नसंशयाः ॥१३॥

मौनव्याख्याप्रकटितपरब्रह्मतत्त्वं युवानं
वर्षिष्ठान्तेवसदृषिगणैरावृतं ब्रह्मनिष्ठैः ।
आचार्येन्द्रं करकलितचिन्मुद्रमानन्दमूर्तिं
स्वात्मारामं मुदितवदनं दक्षिणामूर्तिमीडे ॥१४॥

सुनिर्मलज्ञानसुखैकरूपं प्रज्ञानहेतुं परमार्थदायिनम् ।
चिदम्बुधौ तं विहरन्तमाद्यमानन्दमूर्तिं गुरुराजमीडे ॥१५॥

यस्यान्तर्नादिमध्यं न हि करचरणं नाम गोत्रं न सूत्रं
नो जातिर्नैव वर्णो न भवति पुरुषो ना नपुंसं न च स्त्री ।
नाकारं नैवकारं न हि जनिमरणं नास्ति पुण्यं न पापं
तत्त्वं नो तत्त्वमेकं सहजसमरसं सद्गुरुं तन्नमामि ॥१६॥

अलं विकल्पैरहमेव केवलं मयिस्थितं विश्वमिदं चराचरम् ।
इदं रहस्यं मम येन दर्शितं स वन्दनीयो गुरुरेव केवलम् ॥१७॥

इति श्रीमच्छङ्कराचार्यविरचितं दक्षिणामूर्त्यष्टकं संपूर्णम् ॥

## ॥ श्रीदक्षिणामूर्तिचतुर्विंशतिवर्णमालास्तोत्रम् ॥

ओमित्येतदस्यबुधैर्नाम गृहीतं यद्भासेदं भाति समस्तं वियदादि ।
यस्याज्ञातः स्वस्वपदस्था विधिमुख्यास्तं प्रत्यञ्चं दक्षिणवक्त्रं कलयामि॥

नम्राङ्गानां भक्तिमतां यः पुरुषार्थं दत्ते क्षिप्रं हन्ति च तत्सर्वविपत्तीः ।
पादांभोजाधस्तनितापस्मृतिमीशं तं० ॥२॥

मोहध्वंस्यै वैणिकवैयासिकमुख्याःसंविन्मुद्रापुस्तकवीणाक्षगुणान्यम् ।
हस्तांभोजैर्बिभ्रतमाराधितवंतस्तं० ॥३॥

भद्रारूढं भद्रदमाराधयितॄणां भक्तिश्रद्धापूर्वकमीशं प्रणमन्ति ।
आदित्या यं वांछितसिद्ध्यै करुणाब्धिं तं० ॥४॥

गर्भान्तस्थाः प्राणिन एते भवपाशच्छेदे दक्षं निश्चितवन्तः शरणं यम् ।
आराध्याङ्घ्रि प्रस्फुरदंभोरुहयुग्मं तं० ॥५॥

वक्त्रं धन्याःसंसृतिवार्धेरतिमात्राद्भीतास्सन्तः पूर्णशशाङ्कद्युति यस्य ।
सेवन्तेऽध्यासीनमनन्तं वटमूलं तं० ॥६॥

तेजस्तोमैरङ्गदसङ्घट्टितभास्वन्माणिक्योत्थैर्भासितविश्वो रुचिरैर्यः ।
तेजोमूर्तिं खानिलतेजःप्रमुखाब्धिं तं० ॥७॥

दध्याज्यादिद्रव्यककर्माण्यखिलानि त्यक्त्वा काङ्क्षां कर्मफलेष्वत्र करोति।
यज्जिज्ञासारूपफलार्थी क्षितिदेवस्तं० ॥८॥

क्षिप्रं लोके यं भजमानः पृथुपुण्यः
प्रध्वस्ताधिः प्रोज्झितसंसृत्यखिलार्तिः ।
प्रत्यग्भूतं ब्रह्म परं सन्रमते यस्तं० ॥९॥

णानेत्येवं यन्मनुमध्यास्थितवर्णं भक्ताः काले वर्णगृहीतैः प्रजपन्तः ।
मोदं ते संप्राप्तसमस्तश्रुतितन्त्रास्तं० ॥१०॥

मूर्तिच्छायानिर्जितमन्दाकिनिकुन्दप्रालेयांभोराशिसुधाभूतिसुरेभा ।
यस्याभ्राभा हासविधौ दक्षशिरोधिस्तं० ॥११॥

तप्तस्वर्णच्छायजटाजूटकटाह प्रोद्यद्वीचीवल्लिविराजत्सुरसिंधुम् ।
नित्यं सूक्ष्मं नित्यनिरस्ताखिलदोषं तं० ॥१२॥

येन ज्ञातेनैव समस्तं विदितं स्याद्यस्मादन्यद्वस्तु जगत्यां शशशृङ्गम् ।
यं प्राप्तानां नास्ति परं प्राप्यमनादिं तं० ॥१३॥

मत्तो मारो यस्य ललाटाक्षिभवाग्निस्फूर्जत्कीलप्रोषितभस्मीकृतदेहः ।
तद्भस्मासीद्यस्य सुजातः पटवासस्तं० ॥१४॥

ह्यम्भोराशौ संसृतिरूपे लुठतां तत्पारं गन्तुं यत्पदभक्तिर्दृढनौका ।
सर्वाराध्यं सर्वगमानन्दपयोधिं तं० ॥१५॥

मेधावी स्यादिंदुवतंसं धृतवीणं कर्पूराभं पुस्तकहस्तं कमलाक्षम् ।
चित्ते ध्यायन्यस्य वपुर्द्राङ्निमिषार्धं तं० ॥१६॥

धाम्नां धाम प्रौढरुचीनां परमं यत्सूर्यादीनां यस्य स हेतु र्जगदादेः ।
एतावान्ये यस्य स सर्वेश्वरमीड्यं तं० ॥१७॥

प्रत्याहारप्राणनिरोधादिसमर्थैं र्भक्तै र्दान्तै स्संयतचित्तैर्यतमानैः ।
स्वात्मत्वेन ज्ञायत एव त्वरया यस्तं० ॥१८॥

ज्ञांशीभूतान्प्राणिन एतान्फलदाता चित्तान्तस्थः प्रेरयति स्वे सकलेऽपि ।
कृत्ये देवः प्राक्तनकर्मानुसरस्सन् तं० ॥१९॥

प्रज्ञामात्रं प्रापितसंविन्निजभक्तं प्राणाक्षादेः प्रेरयितारं प्रणवार्थम् ।
प्राहुः प्राज्ञा यं विदितानुश्रवतत्त्वास्तं० ॥२०॥

यस्य ज्ञानादेव नृणां संसृतिबोधो यस्य ज्ञानादेव विमोक्षो भवतीति ।
स्पष्टं ब्रूते वेदशिरोदेशिकमाद्यं तं० ॥२१॥

छिन्नेऽविद्यारूपवटे नैव च विश्वं यत्राध्यस्तं जीवपरेशत्वमपीदम् ।
भानोर्भानुष्वम्बुवदस्ताखिलभेदं तं० ॥२२॥

स्वापस्वप्नौ जाग्रदवस्थापि न तत्र प्राणश्चेतस्सर्वगतो यस्सकलात्मा ।
कूटस्थो यः केवलसच्चित्सुखरूपस्तं० ॥२३॥

हाहेत्येवं विस्मयमीयुर्मुनिमुख्याः ज्ञाते यस्मिन्स्वात्मतया नात्मविमोहः।
प्रत्यग्भूते ब्रह्मणि यातः कथमित्थं तं० ॥२४॥

यैषा रम्यैर्मत्तमयूराभिधवृत्तैरादौ कॢप्ता यन्मनुवर्णैर्नुतिभङ्गी ।
तामेवैतां दक्षिणवक्त्रः कृपयासा वूरीकुर्याद्देशिकसम्राट्परमात्मा ॥

॥ इति श्रीमच्छङ्कराचर्यविरचितं दक्षिणामूर्तिवर्णमालास्तोत्रं संपूर्णम् ॥

---

## ॥ श्रीमृत्युञ्जयमानसिकपूजास्तोत्रम् ॥

कैलासे कमनीयरत्नखचितेकल्पद्रुमूले स्थितं
कर्पूरस्फटिकेन्दुसुन्दरतनुं कात्यायनीसेवितम् ।
गङ्गातुङ्ग तरङ्गरञ्जित जटाभारं कृपासागरं
कण्ठालङ्कृतशेषभूषणममुं मृत्युञ्जयं भावये ॥१॥

आगत्य मृत्युञ्जयचन्द्रमौले व्याघ्राजिनालङ्कृत शूलपाणे ।
स्वभक्तसंरक्षणकामधेनो प्रसीद विश्वेश्वरपार्वतीश ॥२॥

भास्वन्मौक्तिकतोरणे मरकतस्तम्भायुतालङ्कृते
सौधे धूपसुवासिते मणिमये माणिक्यदीपाञ्चिते ।
ब्रह्मेन्द्रामरयोगिपुङ्गवगणैर्युक्ते च कल्पद्रुमैः
श्रीमृत्युञ्जयसुस्थिरो भव विभो माणिक्यसिंहासने ॥३॥

मन्दारमल्लीकरवीरमाधवीपुन्नागनीलोत्पल चम्पकान्वितैः ।
कर्पूरपाटीरसुवासितैर्जलैः राधत्स्वमृत्युञ्जयपाद्यमुत्तमम् ॥४॥

सुगन्धपुष्पप्रकरैः सुवासितैर्वियन्नदीशीतलवारिभिः शुभैः ।
त्रिलोकनाथार्तिहरार्घ्यमादराद्गृहाण मृत्युञ्जय सर्ववन्दित ॥५॥

हिमाम्बुवासितैस्तोयैः शीतलैरतिपावनैः ।
मृत्युञ्जय महादेव शुद्धाचमनमाचर ॥६॥

गुडदधिसहितं मधुप्रकीर्णं सुघृतसमन्वित धेनुदुग्धयुक्तम् ।
शुभकर मधुपर्कमाहर त्वं त्रिनयन मृत्युहर त्रिलोकवन्द्य ॥७॥

पञ्चास्त्रशान्तपञ्चास्य पञ्चपातकसंहर ।
पञ्चामृतस्नानमिदं कुरु मृत्युञ्जय प्रभो ॥८॥

जगत्त्रयीख्यात समस्ततीर्थसमाहृतैः कल्मषहारिभिश्च ।
स्नानं सुतोयैः समुदाचर त्वं मृत्युञ्जयानन्तगुणाभिराम ॥९॥

आनीतेनातिशुभ्रेण कौशेयेनामरद्रुमात् ।
मार्जयामि जटाभारं शिव मृत्युञ्जय प्रभो ॥१०॥

नानाहेमाविचित्राणि चरिचीनाम्बराणि च ।
विविधानि च दिव्यानि मृत्युञ्जय सुधारय ॥११॥

विशुद्धमुक्ताफलजालरम्यं मनोहरं काञ्चन हेमसूत्रम् ।
यज्ञोपवीतं परमं पवित्रमाधत्स्वमृत्युञ्जय भक्तिगम्य ॥१२॥

श्रीगन्धं घनसारकुङ्कुमयुतं कस्तूरिकापूरितं
कालेयेन हिमाम्बुना विरचितं मन्दारसंवासितं ।
दिव्यं देवमनोहरं मणिमये पात्रे समारोपितं
सर्वाङ्गेषु विलेपयामि सततं मृत्युञ्जय श्रीविभो ॥१३॥

अक्षतैर्धवलै र्दिव्यैः सम्यक्तिलसमन्वितैः ।
मृत्युञ्जय महादेव पूजयामि वृषध्वज ॥१४॥

चम्पकपङ्कजकुरवक कुन्दैः करवीरमल्लिकाकुसुमैः ।
विस्तारय निजमकुटं मृत्युञ्जय पुण्डरीकनयनाप्त ॥१५॥

माणिक्यपादुकाद्वन्द्वे मौनिहृत्पद्ममन्दिरे ।
पादौसत्पद्मसदृशौ मृत्युञ्जय निवेशय ॥१६॥

माणिक्यकेयूरकिरीटहारैः काञ्चीमणिस्थापितकुण्डलैश्च ।
मञ्जीरमुख्याभरणैर्मनोज्ञैरङ्गानि मृत्युञ्जय भूषयामि ॥१७॥

गजवदनस्कन्दधृतेनातिस्वच्छेन चामरयुगेन ।
गलदलकाननपद्मं मृत्युञ्जय भावयामि हृत्पद्मे ॥१८॥

मुक्तातपत्रं शशिकोटिशुभ्रं शुभप्रदं काञ्चनदण्डयुक्तम् ।
माणिक्यसंस्थापित हेमकुम्भं सुरेश मृत्युञ्जय तेऽर्पयामि ॥१९॥

मणिमुकुरे निष्पटले त्रिजगद्गाढान्धकारसत्पार्श्वे ।
कन्दर्पकोटिसदृशं मृत्युञ्जय पश्य वदनमात्मीयम् ॥२०॥

कर्पूरचूर्णं कपिलाज्यपूतं दास्यामि कालेयसमन्वितैश्च ।
समुद्भवं पावनगन्ध धूपितं मृत्युञ्जयाङ्गं परिकल्पयामि ॥२१॥

वर्तित्रयोपेतमखण्डदीप्त्या तमोहरं बाह्यमथान्तरं च ।
साज्यं समस्तामरवर्गहृद्यं सुरेश मृत्युञ्जय वंशदीपम् ॥२२॥

राजान्नं मधुरान्वितं च मृदुलं माणिक्यपात्रे स्थितं
हिङ्गूजीरकसन्मरीचिमिलितैः शाकैरनेकैः शुभैः ।
शाकं सम्यगपूपसूपसहितं सद्योघृतेनाप्लुतं
श्रीमृत्युञ्जय पार्वतीप्रिय विभो सापोशनंभुज्यताम् ॥२३॥

कूश्माण्डवार्ताक पटोलिकानां फलानि रम्याणि च कारवल्या ।
सुपाकयुक्तानि ससौरभाणि श्रीकण्ठ मृत्युञ्जय भक्षयेश ॥२४॥

शीतलं मधुरं स्वच्छं पावनं वासितं लघु ।
मध्ये स्वीकुरु पानीयं शिव मृत्युञ्जय प्रभो ॥२५॥

शर्करामिलितं स्निग्धं दुग्धान्नं गोघृतान्वितम् ।
कदलीफलसंमिश्रं भुज्यतां मृत्युसंहर ॥२६॥

केवलमतिमाधुर्यं दुग्धैः स्निग्धैश्च शर्करामिलितैः ।
एलामरीचिमिलितं मृत्युञ्जय देव भुङ्क्ष्व परमान्नम् ॥२७॥

रम्भाचूतकपित्थकण्टकफलैर्द्राक्षारसस्वादुम-
त्खर्जूरैर्मधुरेक्षुखण्डशकलैः सन्नारिकेलाम्बुभिः ।

कर्पूरेण सुवासितैर्गुडजलैर्माधुर्ययुक्तैर्विभो
श्रीमृत्युञ्जय पूरय त्रिभुवनाधारं विशालोदरम् ॥२८॥

मनोज्ञरम्भावनखण्डखण्डितान्रुचिप्रदान् सर्षपजीरकांश्च ।
ससौरभान् सैन्धवसेवितांश्च गृहाण मृत्युञ्जय लोकवन्द्य ॥२९॥

हिङ्गूजीरकसहितं विमलामलकं कपित्थमतिमधुरम् ।
बिसखण्डाँ ल्लवणयुतान्मृत्युञ्जय तेऽर्पयामि जगदीश ॥३०॥

एलाशुण्ठीसहितं दध्यन्नं चारुहेमपात्रस्थम् ।
अमृतप्रतिनिधिमाढ्यं मृत्युञ्जय भुज्यतां त्रिलोकेश ॥३१॥

जम्बीरनीराञ्चित शृङ्गबेरं मनोहरानम्लशलादुखण्डान् ।
मृदूपदंशान्सहसोपभुङ्क्ष्व मृत्युञ्जय श्रीकरुणासमुद्र ॥३२॥

नागररामठयुक्तं सुललित जम्बीरनीरसम्पूर्णम् ।
मथितं सैन्धवसहितं पिब हर मृत्युञ्जय क्रतुध्वंसिन् ॥३३॥

मन्दारहेमाम्बुजगन्धयुक्तैर्मन्दाकिनी निर्मलपुण्यतोयैः ।
गृहाण मृत्युञ्जय पूर्णकाम श्रीमत्परापोशनमभ्रकेश ॥३४॥

गगनधुनी विमलजलैः मृत्युञ्जय पद्मरागपात्रगतैः ।
मृगमदचन्दनपूर्णं प्रक्षालय चारुहस्तपादयुग्मम् ॥३५॥

पुन्नागमल्लिकाकुन्दवासितैर्जाह्नवीजलैः ।
मृत्युञ्जय महादेव पुनराचमनं कुरु ॥३६॥

मौक्तिकचूर्णसमेतैर्मृगमदघनसारवासितैः पूगैः ।
पर्णैस्स्वर्णसमानैर्मृत्युञ्जय तेऽर्पयामि ताम्बूलम् ॥३७॥

नीराजनं निर्मलदीप्तिमद्भिर्दीपाङ्कुरै रुज्वलमुच्छ्रितैश्च ।
घण्टानिनादेन समर्पयामि मृत्युञ्जयाय त्रिपुरान्तकाय ॥३८॥

विरिञ्चिमुख्यामरवृन्दवन्दिते सरोजमत्स्याङ्कित चक्रचिह्निते ।
ददामि मृत्युञ्जय पादपङ्कजे फणीन्द्र भूषे पुनरर्घ्यमीश्वर ॥३९॥

पुन्नागनीलोत्पलकुन्दजाजी मन्दारमल्ली करवीरपङ्कजैः ।
पुष्पाञ्जलिं बिल्वदलैस्तुलस्या मृत्युञ्जयाङ्घ्रौ विनिवेशयामि ॥४०॥

पदे पदे सर्वतमो निकृन्तनं पदे पदे सर्वशुभप्रदायकम् ।
प्रदक्षिणं भक्तियुतेन चेतसा करोमि मृत्युञ्जय रक्ष रक्षमाम्॥४१॥

नमो गौरीशाय स्फटिकधवलाङ्गाय च नमो
नमो लोकेशाय स्तुतविबुधलोकाय च नमः ।
नमः श्रीकण्ठाय क्षपितपुरदैत्याय च नमो
नमः फालाक्षाय स्मरमदविनाशाय च नमः ॥४२॥

संसारे जनितापरोगसहिते तापत्रयाक्रन्दिते
नित्यं पुत्रकलत्रवित्तविलसत्पाशैर्निबद्धं दृढम् ।
गर्वान्धं बहुपापवर्गसहितं कारुण्यदृष्ट्या विभो
श्रीमृत्युञ्जय पार्वतीप्रिय सदा मां पाहिसर्वेश्वर ॥४३॥

सौधे रत्नमये नवोत्पलदलाकीर्णे च तल्पान्तरे
कौशेयेन मनोहरेण धवलेनाच्छादितं सर्वशः ।
कर्पूराञ्चितदीपदीप्तिमिलिते रम्योपधानद्वये
पार्वत्याः करपद्मलालितपदं मृत्युञ्जयं भावये ॥४४॥

वपुश्चत्वारिंशद्विलसदुपचारैरभिमतै-
र्मनः पद्मे भक्त्या बहिरपि च पूजां शुभकरीम् ।
करोषि प्रत्यूषे निशि दिवसमध्येऽपि च पुमा-
न्प्रयाति श्रीमृत्युञ्जय पदमनेकाद्भुतपदम् ॥४५॥

प्रातर्लिङ्गमुमापतेरहरहः सन्दर्शनात्स्वर्गदं
मध्याह्ने हयमेधतुल्यफलदं सायंतने मोक्षदं ।
भानोरस्तमये प्रदोषसमये पञ्चाक्षराराधनं
तत्कालत्रयतुल्यमिष्टफलदं सद्योऽनवद्यं दृढम् ॥४६॥

इति श्रीमत्परमहंस परिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीमच्छङ्करभगवतः कृतौ
॥ मृत्युञ्जयमानसिकपूजास्तोत्रं संपूर्णम् ॥

---

## ॥ दारिद्र्यदहनशिवस्तोत्रम् ॥

विश्वेश्वराय नरकार्णवतारणाय कर्णामृताय शशिशेखरधारणाय ।
कर्पूरकान्तिधवलाय जटाधराय दारिद्र्यदुःखदहनाय नमः शिवाय ॥

गौरीप्रियाय रजनीशकलाधराय कालान्तकाय भुजगाधिपकङ्कणाय ।
गङ्गाधराय गजराजविमर्दनाय दारिद्र्य० ॥२॥

भक्तिप्रियाय भवरोगभयापहाय उग्राय दुर्गभवसागरतारणाय ।
ज्योतिर्मयाय गुणनामसुनृत्यकाय दारिद्र्य० ॥३॥

चर्माम्बराय शवभस्मविलेपनाय भालेक्षणाय मणिकुण्डलमण्डिताय ।
मंजीरपादयुगलाय जटाधराय दारिद्र्य० ॥४॥

13

पञ्चाननाय फणिराजविभूषणाय हेमांशुकाय भुवनत्रयमण्डिताय ।
आनन्दभूमिवरदाय तमोमयाय दारिद्र्य० ॥५॥

भानुप्रियाय भवसागरतारणाय कालान्तकाय कमलासनपूजिताय ।
नेत्रत्रयाय शुभलक्षणलक्षिताय दारिद्र्य० ॥६॥

रामप्रियाय रघुनाथवरप्रदाय नागप्रियाय नरकार्णवतारणाय ।
पुण्येषु पुण्यभरिताय सुरार्चिताय दारिद्र्य० ॥७॥

मुक्तेश्वराय फलदाय गणेश्वराय गीतप्रियाय वृषभेश्वरवाहनाय ।
मातङ्गचर्मवसनाय महेश्वराय दारिद्र्य० ॥८॥

वसिष्ठेन कृतं स्तोत्रं सर्वरोगनिवारणम् ।
सर्वसंपत्करं शीघ्रं पुत्रपौत्राभिवर्धनम् ।
त्रिसन्ध्यं यः पठेन्नित्यं स हि स्वर्गमवाप्नुयात् ॥९॥

॥ इति श्रीवसिष्ठविरचितं दारिद्र्यदहनस्तोत्रं संपूर्णम् ॥

---

## ॥ शंकराष्टकम् ॥

शीर्षजटागणभारं गरलाहारं समस्तसंहारम् ।
कैलासाद्रिविहारं पारं भववारिधेरहं वन्दे ॥१॥

चन्द्रकलोज्ज्वलफालं कण्ठव्यालं जगत्त्रयीफालम् ।
कृतनरमस्तकमालं कालं कालस्य कोमलं वन्दे ॥२॥

कोपेक्षणहतकामं स्वात्मारामं नगेन्द्रजावामम् ।
संसृतिशोकविरामं श्यामं कंठेन कारणं वन्दे ॥३॥

कटितटविलसितनागं खण्डितयागं महाद्भुतत्यागम् ।
विगतविषयरसरागं भागं यज्ञेषु बिभ्रतं वन्दे ॥४॥

त्रिपुरादिकदनुजांतं गिरिजाकान्तं सदैव संशान्तम् ।
लीलाविजितकृतान्तं भान्तं स्वान्तेषु देहिनां वन्दे ॥५॥

सुरसरिदाप्लुतकेशं त्रिदशकुलेशं हृदालयावेशम् ।
विगताशेषक्लेशं देशं सर्वेष्टसम्पदां वन्दे ॥६॥

करतलकलितपिनाकं विगतजराकं सुकर्मणां पाकम् ।
परपदवीतवराकं नाकङ्गमपूगवन्दितं वन्दे ॥७॥

भूतिविभूषितकायं दुस्तरमायं विवर्जितापायम् ।
प्रमथसमूहसहायं सायं प्रातर्निरन्तरं वन्दे ॥८॥

यस्तु पदाष्टकमेतद्ब्रह्मानन्देन निर्मितं नित्यम् ।
पठति समाहितचेताः प्राप्नोत्यन्ते स शैवमेव पदम् ॥९॥

॥ इति श्रीमत्परमहंसस्वामिब्रह्मानन्दविरचितं श्रीशङ्कराष्टकं संपूर्णम् ॥

---

## ॥ सुवर्णमालास्तुतिः ॥

अथ कथमपिमद्रसनां त्वद्गुणलेशैर्विशोधयामि विभो ।
सांब सदाशिव शम्भो शङ्कर शरणं मे तव चरणयुगम् ॥१॥

आखण्डल मदखण्डन पण्डित तण्डुप्रिय चण्डीश विभो । सांब० ॥

इभचर्मांबर शंबररिपुरपहरणोज्ज्वलनयन विभो । सांब० ॥३॥

ईशागिरीश नरेश परेश महेश बिलेशय भूषण भो । सांब० ॥४॥

उमया दिव्यसुमङ्गल विग्रहयालिङ्गितवामाङ्ग विभो । सांब० ॥५॥
ऊरीकुरु मामज्ञमनाथं दूरीकुरु मे दुरितं भो । सांब० ॥६॥
ऋषिवरमानसहंसचराचरजनन स्थितिलय कारण भो । सांब०॥७॥
ऋक्षाधीश किरीट महोक्षारूढविधृतरुद्राक्ष विभो । सांब० ॥८॥
ॡवर्णद्वन्द्वमवृन्तसुकुसुममिवाङ्घ्रौ तवार्पयामि विभो । सांब० ॥९॥
एकं सदिति श्रुत्या त्वमेव सदसीत्युपास्महेमृड भो । सांब० ॥१०॥
ऐक्यं निजभक्तेभ्यो वितरसि विश्वंभरोऽत्रसाक्षी भो। सांब०॥११॥
ओमिति तव निर्देष्ट्री मायास्माकं मृडोपकर्त्री भो । सांब० ॥१२॥
औदास्यं स्फुटयति विषयेषु दिगम्बरता च तवैव विभो । सांब० ॥
अन्तः करणविशुद्धिं भक्तिं च त्वयि सतीं प्रदेहि विभो । सांब० ॥
अस्तोपाधिसमस्त व्यस्तै रूपै र्जगन्मयोऽसि विभो । सांब० ॥१५॥
करुणावरुणालय मयि दास उदासस्तवोचितो नहि भो । सांब० ॥
खलसहवासं विघटय घटय सतामेव सङ्गमनिशं भो । सांब० ॥
गरलं जगदुपकृतये गिलितं भवता समोऽस्ति कोऽत्र विभो?। सांब०॥
घनसारगौरगात्रप्रचुरजटाजूटबद्धगङ्ग विभो । सांब० ॥१९॥
ज्ञप्तिः सर्वशरीरेष्वखण्डिताया विभाति सात्वं भो । सांब० ॥२०॥
चपलं मम हृदयकपिं विषयद्रुचरं दृढंबधान विभो । सांब०॥२१॥
छायास्थाणोरपि तव पापं नमतां हरत्यहो शिव भो । सांब० ॥२२॥
जयकैलासनिवास प्रमथगणाधीश भूसुरार्चित भो । सांब० ॥२३॥
झणुतक झङ्किणु झणुत त्किटतकशब्दैर्नटासिमहानट भो । सांब० ॥
ज्ञानं विक्षेपादिरहितं कुरु मे गुरुस्त्वमेव विभो । सांब० ॥२५॥

टङ्कारस्तव धनुषो दलयति हृदयं द्विषमशनिरिव भो । सांब० ॥
टाकृतिरिव तवमायाबहिरन्तः शून्यरूपिणी खलु भो । सांब० ॥
डम्बरमम्बुरुहामपि दलयत्यनघं त्वदङ्घ्रियुगलं भो । सांब० ॥२८॥
ढक्काक्षसूत्र शूलद्रुहिणकरोटीसमुल्लसत्कर भो । सांब० ॥२९॥
णाकारगर्भिणी चेच्छुभदा ते शरगति नृणामिह भो । सांब०॥३०॥
तव मन्वतिसञ्जपतः सद्यस्तरति नरोहि भवाब्धिं भो । सांब० ॥
थूत्कारस्तस्य मुखे भूयात्ते नामनास्ति यस्य विभो । सांब० ॥३२॥
दयनीयश्च दयालुः कोऽस्तिमदन्यस्त्वदन्य इह वद भो । सांब० ॥
धर्मस्थापनदक्षत्र्यक्षगुरो दक्षयज्ञशिक्षक भो । सांब० ॥३४॥
ननुताडितोऽसिधनुषा लुब्धधिया त्वं पुरा नरेण विभो । सांब० ॥
परिमातुं तव मूर्तिं नालमजस्तत्परात्परोऽसि विभो । सांब०॥३६॥
फलमिह नृतया जनुषस्त्वत्पदसेवासनातनेश विभो । सांब०॥३७॥
बलमारोग्यं चायुस्त्वद्गुणरुचितां चिरं प्रदेहि विभो । सांब०॥३८॥
भगवन् भर्ग भयापह भूतपते भूतिभूषिताङ्ग विभो । सांब०॥३९॥
महिमा तव नहि माति श्रुतिषु हिमानी धरात्मजाधव भो । सांब०॥
यमनियमादिभिरङ्गैर्यमिनो हृदये भजन्ति सत्वं भो । सांब० ॥
रज्जावहिरिव शुक्तौ रजतमिव त्वयि जगन्ति भान्ति विभो । सांब० ॥
लब्ध्वा भवत्प्रसादाच्चक्रं विधुरवति लोकमखिलं भो । सांब०॥४३॥
वसुधातद्धरच्छयरथमौर्वीशरपराकृतासुर भो । सांब० ॥४४॥
शर्वदेव सर्वोत्तम सर्वद दुर्वृत्तगर्वहरण विभो । सांब० ॥४५॥
षड्रिपुषडूर्मि षड्विकारहर सन्मुख षण्मुख जनक विभो । सांबं० ॥

सत्यं ज्ञानमनन्तं ब्रह्मेत्येतल्लक्षणलक्षित भो । सांब० ॥४७॥
हाहा हूहू मुख सुरगायकगीतापदानपद्य विभो । सांब० ॥४८॥
ळादिर्नहि प्रयोगस्तदन्तमिह मङ्गलं सदास्तु विभो । सांब० ॥४९॥
क्षणमिव दिवसान्नेष्यति त्वत्पदसेवाक्षणोत्सुकः शिव भो। सांब० ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीमच्छङ्करभगवतः कृतौ
॥ सुवर्णमालास्तुतिः संपूर्णा ॥

---

## ॥ विश्वेश्वराष्टकम् ॥

गङ्गातरङ्गकमनीयजटाकलापं गौरीनिरन्तरविभूषितवामभागम् ।
नारायणप्रिय मनङ्गमदापहारं वाराणसीपुरपतिं भज विश्वनाथम् ॥

वाचामगोचरममेयगुणस्वरूपं वागीशविष्णुसुरसेवितपादपीठम् ।
वामेन विग्रहभरेण कळत्रवन्तं वाराणसी० ॥२॥

रागादिदोषरहितं सुगुणानुरागं वैराग्यशान्तिनिलयं गिरिजासहायम् ।
माधुर्यधैर्यनिलयं गरळाभिरामं वाराणसी० ॥३॥

तेजोमयं सकलनिष्कळमद्वितीय मानन्दकन्दमपराजित मप्रमेयम् ।
नानात्मकं सगुणनिर्गुणमादिदेवं वाराणसी० ॥४॥

भूताधिपं भुजगपुङ्गवभूषिताङ्गं व्याघ्राजिनांबरधरं जटिलं त्रिनेत्रम् ।
पाशाङ्कुशाभयवरप्रदशूलपाणिं वाराणसी० ॥५॥

आशां विहाय परिहृत्यपरस्वनिन्दां पापेरतिञ्च विनिवार्यमनस्समाधौ ।
आधारहृत्कमलमध्यगतं परेशं वाराणसी० ॥६॥

शीतांशुशोभितकिरीटविराजमानं फालेक्षणानलविनाशितपञ्चबाणम् ।
नागाधिपारचितभासुरकर्णपूरं वाराणसी० ॥७॥

पञ्चाननं दुरितमत्तमतङ्गजानां नागान्तकं दनुजपुङ्गवपन्नगानाम् ।
दावानलं मरणशोकभयाटवीनां वाराणसी० ॥८॥

वाराणसीपुरपतेः परमेश्वरस्य
व्याघ्रोक्त मष्टकमिदं पठते मनुष्यः ।
विद्याश्रियं विपुलसाख्य मनन्तकीर्तिं
संप्राप्यदेहविलये लभते च मोक्षम् ॥९॥

॥ इति श्रीविश्वेश्वराष्टकं संपूर्णम् ॥

---

## ॥ श्रीवटुकभैरवसहस्रनामस्तोत्रम् ॥

देव्युवाच—

देवेश भक्तिसुलभ देवनायकवन्दित ।
भक्तानां काम्यसिद्ध्यर्थं निदानं ब्रूहि तत्त्वतः ॥१॥

विनैव न्यासजालेन पूजनेन विना भवेत् ।
विनाऽपि कायक्लेशेन विना जप्येन चेश्वर ॥२॥

श्रीमहादेव उवाच—

अस्य श्रीवटुकभैरवसहस्रनाममालामन्त्रस्य ब्रह्मानन्दभैरवऋषिः अनुष्टुप्छन्दः वटुकभैरवो देवता । वं बीजं ह्रीं शक्तिः अभीष्टफलसिद्ध्यर्थे जपे विनियोगः ॥

वटुकः कामदो नाथो नाथप्रियः प्रभाकरः ।
भैरवो भीतिहा दर्पः कन्दर्पो मीनकेतनः ॥३॥

रुद्रो वटुर्विभूतीशो भूतनाथः प्रजापतिः ।
दयालुः क्रूर ईशानो जनीशो लोकवल्लभः ॥४॥

देवो दैत्येश्वरो वीरोवीरवन्द्यो दिवाकरः ।
बलिप्रियः सुरश्रेष्ठः कनिष्ठः कनिष्ठशिशुः ॥५॥

महाबलो महातेजा वित्तजित् द्युतिवर्धनः ।
तेजस्वी वीर्यवान्वृद्धो विवृद्धो भूतनायकः ॥६॥

कालः कपालकामादिविकारः काममर्दनः ।
कामिकारमणः कामी नायकः कालिकाप्रियः ॥७॥

कालीशः कामिनीकान्तः कालिकानन्दवर्धनः ।
कालिकाहृदयज्ञानी कालिकातनयो नयः ॥८॥

खगेशः खेचरः खेटो विशिष्टः खेटकप्रियः ।
कुमारः क्रोधनः कालोप्रियः पर्वतरक्षकः ॥९॥

गणेज्यो गणनो गूढो गूढाशयो गणेश्वरः ।
गणनाथो गणश्रेष्ठो गणमुख्यो गणप्रियः ॥१०॥

घोरनाथो घनश्यामो घनमूर्तिर्घनात्मकः ।
घोरनाशो घनेशानो धनपतिर्धनात्मकः ॥११॥

चंपकाभाश्चिरंजीवो चारुवेषश्चराचरः ।
अन्त्योऽचिन्त्यगणो धीमानसुचित्तश्चितीश्वरः ॥१२॥

छत्री छत्रपतिश्छत्रछिन्ननासामनः प्रियः ।
छिन्नाभश्छिन्नसन्तापश्छर्दिराच्छर्दनन्दनः ॥१३॥

जनो जिष्णुर्जटीशानो जनार्दनो जनेश्वरः ।
जनौको जनसंतोषो जनजाड्य विनाशनः ॥१४॥

जनप्रस्थो जनाराध्यो जनाध्यक्षो जनप्रियः ।
जीवहा जीवदो जन्तुर्जीवनाथो जनेश्वरः ॥१५॥

जयदो जित्वरो जिष्णुर्जयश्रीः जयवर्धनः ।
जयाभूमि र्जयाकारो जयहेतुर्जयेश्वरः ॥१६॥

झंकारहृद्ध्वांतात्मा झङ्कारहेतुरात्मभूः ।
झभैश्वरी हरिर्भर्ता विभर्ता भृत्यकेश्वरः ॥१७॥

ठीकारहृदयोआत्मु ठङ्कशाष्टकनायकः ।
ठकारभूष्ठरन्ध्रेशाष्ठिरीशाष्ठकुरपतिः ॥१८॥

डुडीडकाप्रियः पान्थो डुण्ढिराजो निरन्तकः ।
ताम्रस्तमीश्वरस्त्रेता तीर्थजातस्तडित्प्रभुः ॥१९॥

ऋक्षरः ऋक्षकस्तंभस्तार्क्ष्यकस्तंभदेश्वरः ।
स्थलजः स्थावरस्थाता स्थिरबुद्धिः स्थितेन्द्रियः ॥२०॥

स्थिरज्ञातिः स्थिरप्रीतिः स्थिरस्थितिः स्थिराशयः ।
दरो दामोदरो दंभो दाडिमी कुसुमप्रियः ॥२१॥

दरिद्रहादिमी दिव्यो दिव्यदेहो दिवप्रभः ।
दीक्षाकारो दिवानाथो दिवसेशो दिवाकरः ॥२२॥

दीर्घशान्तिर्दलज्योतिर्दलेशो दलसुन्दरः ।
दलप्रियो दलाभाशो दलश्रेष्ठो दलप्रभुः ॥२३॥
दलकान्तिर्दलाकारो दलसेव्यो दलार्चितः ।
दीर्घबाहुर्दलश्रेष्ठो दललुब्धदलाकृतिः ॥२४॥
दानवेशो दयासिन्धुर्दयालुर्दीनवल्लभः ।
धनेशो धनदो धर्मो धनराजो धनप्रियः ॥२५॥
धनप्रदो धनाध्यक्षो धनमान्यो धनंजयः ।
धीवरो धातुको धाता धूम्रो धूमच्छविवर्धनः ॥२६॥
धनिष्ठो धनलच्छत्री धनकाम्यो धनेश्वरः ।
धीरो धीरतरो धेनुर्धीरेशो धरणीप्रभुः ॥२७॥
धरानाथो धराधीशो धरणीनायको धरः ।
धराकान्तो धरापालो धरणीभृद्धराप्रियः ॥२८॥
धराधारो धराघृष्णो धृतराष्ट्रो धनीश्वरः ।
नारदो नरदो नेता नतिपूज्यो नतिप्रभुः ॥२९॥
नतिलभ्यो नतीशानो नतिलभ्यो नतीश्वरः ।
पाण्डवः पार्थसंपूज्यः पाथोदः प्रणतः पृथुः ॥३०॥
पुराणः प्राणदो पांथो पाञ्चाली पावकप्रभुः ।
पृथिवीशः पृथासूनुः पृथिवी भृत्यकेश्वरः ॥३१॥
पूर्वशूरपतिः श्रेयान् प्रीतिदः प्रीतिवर्धनः ।
पार्वतीशः परेशानः पार्वतीहृदयप्रियः ॥३२॥

पार्वतीरमणः पूतः पवित्रः पापनाशनः ।
पात्रीपात्रालिसन्तुष्टः परितुष्टः पुमान्प्रियः ॥३३॥
पर्वेशः पर्वताधीशः पर्वतो नायकात्मजः ।
फाल्गुनः फल्गुनो नाथः फणेशः फणिरक्षकः ॥३४॥
फणीपतिः फणीशानः फणाळिंदः फणाकृतिः ।
बलभद्रो बली बालो बलधीर्बलवर्धनः ॥३५॥
बलप्राणो बलाधीशो बलिदान प्रियङ्करः ।
बलिराजो बलिप्राणो बलिनाथो बलिप्रभुः ॥३६॥
बली बलश्च बालेशो बालकः प्रियदर्शनः ।
भद्री भद्रप्रदो भीमो भीमसेनो भयङ्करः ॥३७॥
भव्यो भव्यप्रियो भूतपतिर्भूतविनाशकः ।
भूतेशो भूतिदो भर्गो भूतभव्यो भवेश्वरः ॥३८॥
भवानीशो भवेशानो भवानीनायको भवः ।
मकारो माधवो मानी मीनकेतुर्महेश्वरः ॥३९॥
महर्षिर्मदनो मंथो मिथुनेशोऽमराधिपः ।
मरीचिर्मंजुलो मोहो मोहहा मोहमर्दनः ॥४०॥
मोहको मोहनो मेधाप्रियो मोहविनाशकः ।
महीपतिर्महेशानो महाराजो महेश्वरः ॥४१॥
महीश्वरो महीपाळो महीनाथो महीप्रियः ।
महीधरो महीशानो मधुराजो मुनिप्रियः ॥४२॥

मौनी मौनधरो मेधो मन्दारो मतिवर्धनः ।
मतिदो मन्धरो मन्त्रो मन्त्रीशो मन्त्रनायकः ॥४३॥

मेधावी मानदो मानी मानहा मानमर्दनः ।
मीनगो मकराधीशो मकरो मणिरंजितः ॥४४॥

मणिरम्यो मणिभ्राता मणिमण्डल मण्डितः ।
मन्त्रिणो मन्त्रदो मुग्धो मोक्षदो मोक्षवल्लभः ॥४५॥

मल्लो मल्लप्रियो मन्त्रो मेलको मेलनप्रभः ।
मल्लिकागन्धरमणो मालतीकुसुमप्रभः ॥४६॥

मालतीशो मघाधीशो माघमूर्तिर्मघेश्वरः ।
मूलाभो मूलहा मूलो मूलदो मूलसंभवः ॥४७॥

माणिक्यरोचिः संमुग्धो मणिकूटो मणिप्रियः ।
मुकुन्दो मदनो मन्दो मदवन्द्यो मनुप्रभुः ॥४८॥

मनस्थो मेनकाधीशो मेनका प्रियदर्शनः ।
यमोऽपि यामलो येता यादवो यदुनायकः ॥४९॥

याचको यज्ञको यज्ञो यज्ञेशो यज्ञवर्धनः ।
रमापती रमाधीशो रमेशो रामवल्लभः ॥५०॥

रमापती रमानाथो रमाकान्तो रमेश्वरः ।
रेवती रमणो रामो रामेशो रामनन्दनः ॥५१॥

रम्यमूर्ती रतीशानो राकाया नायको रविः ।
लक्ष्मीधरो ललज्जिह्वो लक्ष्मीबीजजपे रतः ॥५२॥

लंपटो लंबराजेशो लंबदेशो लकारभूः ।
वामनो वल्लभो वन्द्यो वनमाली वलेश्वरः ॥५३॥
वशस्थो वनगो वन्ध्यो वनराजो वनाह्वयः ।
वनेचरो वनाधीशो वनमाला विभूषणः ॥५४॥
वेणुप्रियो वनाकारो वनराध्यो वनप्रभुः ।
शंभुः शङ्करसन्तुष्टः शंबरारिः सनातनः ॥५५॥
शबरीप्रणतः शालः शिलीमुखध्वनिप्रियः ।
शकुलः शल्लकः शीलः शीतरश्मिः सितांशुकः ॥५६॥
शीलदः शीकरः शीलः शालशाली शनैश्चरः ।
सिद्धः सिद्धिकरः साध्यः सिद्धिभूः सिद्धिभावनः ॥५७॥
सिद्धान्तवल्लभः सिन्धुः सिन्धुतीरनिषेवकः ।
सिन्धुपतिः सुराधीशः सरसीरुहलोचनः ॥५८॥
सरित्पतिस्सरित्संस्थः सरः सिन्धुसरोवरः ।
सखा वीरयतिः सूतः सचेता सत्पतिः सितः ॥५९॥
सिन्धुराजः सदाभूतः सदाशिवः सताङ्गतिः ।
सदृशः साहसी शूरः सेव्यमानः सतीपतिः ॥६०॥
सूर्यः सूर्यपतिः सेव्यः सेवाप्रियः सनातनः ।
सनीशः शशिनाथः सतीसेव्यः सतीरतः ॥६१॥
सतीप्राणः सतीनाथस्सतीसेव्यः सतीश्वरः ।
सिद्धराजः सतीतुष्टः सचिवः सव्यवाहनः ॥६२॥

सतीनायकसन्तुष्टः सव्यसाची समन्तकः ।
सचितः सर्वसन्तोषी सर्वाराधन सिद्धिदः ॥६३॥

सर्वाराध्यः शचीवाच्यः सतीपतिः सुसेवितः ।
सागरः सगरः सार्धः समुद्रप्रियदर्शनः ॥६४॥

समुद्रेशः परो नाथः सरसीरुहलोचनः ।
सरसीजलदाकारः सरसीजलदार्चितः ॥६५॥

सामुद्रिकः समुद्रात्मा सेव्यमानः सुरेश्वरः ।
सुरसेव्यः सुरेशानः सुरनाथ स्सुरेश्वरः ॥६६॥

सुराध्यक्षः सुराराध्यः सुरबृन्दविशारदः ।
सुरश्रेष्ठः सुरप्राणः सुरसिन्धुनिवासिनः ॥६७॥

सुधाप्रियः सुधाधीशः सुधासाध्यः सुधापतिः ।
सुधानाथः सुधाभूतः सुधासागरसेवितः ॥६८॥

हाटको हीरको हन्ता हाटको रुचिरप्रभः ।
हव्यवाहो हरिद्राभो हरिद्रारसमर्दनः ॥६९॥

हेतिर्हेतुर्हरिर्नाथो हरिनाथो हरिप्रियः ।
हरिपूज्यो हरिप्राणो हरिहृष्टो हरिद्रकः ॥७०॥

हरीशो हन्त्रिको हीरो हरिनाम परायणः ।
हरिमुग्धो हरीरम्यो हरिदासो हरीश्वरः ॥७१॥

हरो हरपति हारो हरिणीचित्तहारकः ।
हरो हितो हरिप्राणो हरिवाहनशोभनः ॥७२॥

हंसो हासप्रियो हुंहुं हुतभुक् हुतवाहनः ।
हुताशनो हवी हिक्को हालाहलहलायुधः ॥७३॥
हलाकारो हलीशानो हलिपूज्यो हलिप्रियः ।
हरपुत्रो हरोत्साहो हरसूनुर्हरात्मजः ॥७४॥
हरबन्धो हराधीशो हरान्तको हराकृतिः ।
हरप्राणो हरमान्यो हरवैरिविनाशनः ॥७५॥
हरशत्रुर्हराभ्यर्च्यो हुङ्कारो हरिणीप्रियः ।
हाटकेशो हरेशानो हाटकप्रियदर्शनः ॥७६॥
हाटको हाटकप्राणो हाटभूषणभूषकः ।
हेतिदो हेतिको हंसो हंसागतिराह्वयः ॥७७॥
हंसीपतिर्हरोन्मत्तो हंसीशो हरवल्लभः ।
हरपुष्पप्रभो हंसीप्रियो हंसविलासितः ॥७८॥
हरजीवरतो हारी हरितो हरितांपतिः ।
हरित्प्रभुर्हरित्पालो हरिदन्तरनायकः ॥७९॥
हरिदीशो हरित्प्रायो हरिप्रियप्रियो हितः ।
हेरम्वो हुंकृतिक्रुद्धो हेरम्बो हुंकृती हरी ॥८०॥
हेरम्ब प्राणसंहर्ता हेरम्बहृदयप्रियः ।
क्षमापतिः क्षणं क्षान्तः क्षुरधारः क्षितीश्वरः ॥८१॥
क्षितीशः क्षितिभृत् क्षीणः क्षितिपालः क्षितिप्रभुः ।
क्षितीशानः क्षितिप्राणः क्षितिनायक सात्प्रियः ॥८२॥

क्षितिराजः क्षणाधीशः क्षणपतिः क्षणेश्वरः ।
क्षणप्रियः क्षमानाथः क्षणदानायकप्रियः ॥८३॥

क्षणिकः क्षणकाधीशः क्षणदाप्राणदः क्षमी ।
क्षमः क्षोणीपतिः क्षोभः क्षोभकारी क्षमाप्रियः ॥८४॥

क्षमाशीलः क्षमारूपः क्षमामण्डलमण्डितः ।
क्षमानाथः क्षमाधारः क्षमाधारी क्षमाधरः ॥८५॥

क्षेमक्षीणरुजाक्षुद्रः क्षुद्रपालविशारदः ।
क्षुद्रासनः क्षणाकारः क्षीरपानकतत्परः ॥८६॥

क्षीरशायी क्षणेशानः क्षोणीभृत् क्षणदोत्सवः ।
क्षेमङ्करक्षमालुब्धः क्षमाहृदयमण्डनः ॥८७॥

नीलाद्रिरुचिरावेशः नीलोपचित सन्निभः ।
नीलमणिप्रभारम्यो नीलभूषणभूषितः ॥८८॥

नीलवर्णो नीलभ्रुवो मुण्डमालाविभूषितः ।
मुण्डस्थो मुण्डसन्तुष्टो मुण्डमालाधरो नयः ॥८९॥

दिग्वासा विदिताकारो दिगम्बरवरप्रदः ।
दिगम्बरीश आनन्दी दिग्बन्ध प्रियनन्दनः ॥९०॥

पिङ्गलैकजटो हृष्टो डमरूवादनप्रियः ।
श्रेणीकरः श्रेणाशायः खड्गधृक् खड्गपालकः ॥९१॥

शूलहस्तो मतङ्गाभो मातङ्गोत्सवसुन्दरः ।
अभयङ्कर ऊर्वङ्गो लङ्कापतिर्विनायकः ॥९२॥

नगेशयो नगेशानो नागमण्डलमण्डितः ।
नागाकारो नागधीशो नागशायी नगप्रियः ॥९३॥
घटोत्सवो घटाकारो घण्टावाद्य विशारदः ।
कपालपाणि रम्बेशः कपालाशनशारदः ॥९४॥
पद्मपाणिः करालास्य स्त्रिनेत्रो नागवल्लभः ।
किङ्किणीजालसंहृष्टो जनाशयो जननायकः ॥९५॥
अपमृत्युहरो मायामोहमूलविनाशकः ।
आयुकः कमलानाथः कमलाकान्तवल्लभः ॥९६॥
राज्यदो राजराजेशो राजवत्सदशोभनः ।
डाकिनीनायको नित्यो नित्यधर्मपरायणः ॥९७॥
डाकिनीहृदयज्ञानी डाकिनीदेहनायकः ।
डाकिनीप्राणदः सिद्धः श्रद्धेयचरितोविभुः ॥९८॥
हेमप्रभो हिमेशानो हिमानीप्रियदर्शनः ।
हेमदो नर्मदो मानी नामधेयो नगात्मजः ॥९९॥
वैकुण्ठो वासुकिप्राणो वासुकीकण्ठभूषणः ।
कुण्डलीशो मुखध्वंसी मखराजो मखेश्वरः ॥१००॥
मखाकारो मखाधीशो मखमालिविभूषणः ।
अम्बिकावल्लभो वाणीमतिर्वाणीविशारदः ॥१०१॥
वाणीशो वचनप्राणो वचनस्थो वनप्रियः ।
वेलाधारो दिशामीशो दिग्भागो हि दिगीश्वरः ॥१०२॥

पट्टुप्रियो दुराराध्यो दारिद्र्यभञ्जनक्षमः ।
तर्कतर्कप्रियोऽतर्क्यो वित्तर्क्यस्तर्कवल्लभः ॥१०३॥

तर्कसिद्धः सुसिद्धात्मा सिद्धदेहो ग्रहासनः ।
ग्रहगर्वो ग्रहेशानो गन्धो गन्धीविशारदः ॥१०४॥

मङ्गळं मङ्गळाकारो मङ्गळवाद्यवादकः ।
मङ्गळीशो विमानस्थो विमानैकसुनायकः ॥१०५॥

बुधेशो विविधाधीशो बुधवारो बुधाकरः ।
बुधनाथो बुधप्रीतो बुधवन्द्यो बुधाधिपः ॥१०६॥

बुधसिद्धो बुधप्राणो बुधप्रियो बुधोबुधः ।
सोमः सोमसमाकारः सोमपाः सोमनायकः ॥१०७॥

सोमप्रभः सोमसिद्धो मनःप्राणप्रणायकः ।
कामगः कामहा बौद्ध कामनाफलदोऽधिपः ॥१०८॥

त्रिदशो दशरात्रीशो दशाननविनाशकः ।
लक्ष्मणो लक्षसंभर्ता लक्ष्यसंख्यो मनःप्रियः ॥१०९॥

विभावसुर्नवेशानो नायको नगरप्रियः ।
नरकान्तिर्नलोत्साहो नरदेवोनलाकृतिः ॥११०॥

नरपतिर्नरेशानो नारायणो नरेश्वरः ।
अनिलो मारुतो मांसो मांसैकरससेवितः ॥१११॥

मरीचिरमरेशानो मागधो मगधप्रभुः ।
सुन्दरीसेवको द्वारी द्वारदेशनिवासिनः ॥११२॥

देवकीगर्भसञ्जातो देवकीसेवकी कुहुः ।
बृहस्पतिः कविः शुक्रः शारदासाधनाप्रियः ॥११३॥
शारदासाधकप्राणः शरदीसेवकोत्सुकः ।
शारदासाधकश्रेष्ठो मधुपानसदारतिः ॥११४॥
मोदकादानसंप्रीतो मोदकामोदमोदितः ।
आमोदानन्दनो नन्दो नन्दिकेशोऽमहेश्वरः ॥११५॥
नन्दिप्रियो नदीनाथो नदीतीरतरुस्तथा ।
तपनस्तापनस्तप्ता तापहा तापकारकः ॥११६॥
पतङ्गगोमुखो गौरगोपालो गोपवर्धनः ।
गोपतिर्गोपसंहर्ता गोविन्दैकप्रियोऽतिगः ॥११७॥
गण्येष्ठो गणरम्यश्च गुणसिन्धुर्गुणाप्रियः ।
गुणपूज्यो गुणोपेतो गुणवान्गुणोत्सवः ॥११८॥
गुणीसकेवलो गर्भः सुगर्भो गर्भरक्षकः ।
गाम्भीरधारको धर्ता विधर्ता धर्मपालकः ॥११९॥
जगदीशो जगन्मित्रो जगज्जाड्यविनाशनः ।
जगत्कर्ता जगद्धाता जगज्जीवनजीवनः ॥१२०॥
मालतीपुष्पसंप्रीतो मालतीकुसुमोत्सवः ।
मालतीकुसुमाकारो मालतीकुसुमप्रभुः ॥१२१॥
रसालमञ्जरीरम्यो रसालगन्धसेवितः ।
रसालमञ्जरी लुब्धो रसालतरुवल्लभः ॥१२२॥

रसालपादपासीनो रसालफलसुन्दरः ।
रसालरससन्तुष्टो रसालरससालयः ॥१२३॥

केतकीपुष्पसन्तुष्टः केतकीगर्भसम्भवः ।
केतकीपत्रसङ्काशः केतकीप्राणनाशकः ॥१२४॥

गर्तस्थो गर्तगम्भीरो गर्ततीरनिवासिनः ।
गणसेव्यो गणाध्यक्षो गणराजो गर्णाह्वयः ॥१२५॥

आनन्दभैरवो भीरुभैरवेशो रुरुभैगः ।
सुब्रह्मण्यभैरवो नामभैरवो भूतभावनः ॥१२६॥

भैरवीतनयो देवीपुत्रः पर्वतसन्निभः ।
नाम्नाऽनेन सहस्रेण स्तुत्वा वटुकभैरवम् ॥१२७॥

लभते ह्यतुलां लक्ष्मीं देवतामपि दुर्लभाम् ।
उपदेशं गुरोर्लब्ध्वा योगेन्द्रमण्डली भवेत् ॥१२८॥

तस्मिन्योगे महेशानस्सर्वसिद्धि मवाप्नुयात् ।
लक्षमावर्तयेन्मन्त्री मन्त्रराजं नरेश्वरः ॥१२९॥

नित्यकर्मसु सिध्यर्थं तत्फलं लभते ध्रुवं ।
स्तवमेनं पठेन्मन्त्री पाठयित्वा यथाविधि ॥१३०॥

दुर्लभां लभते सिद्धिं सर्वदेवनमस्कृताम् ।
न प्रकाश्यं च पुत्राय भ्रष्टेषु न कदाचन ॥१३१॥

अन्यथा सिद्धिरोधः स्याच्चतुरो वा भवेत् प्रियः ।
स्तवस्यास्य प्रसादेन देवनाकमतिप्रियः ॥१३२॥

संग्रामे विजये च्छत्रून्मातङ्गानिव केसरी ।
राजानं वशयेत्सद्यो देवानपि शमं नयेत् ॥१३३॥

किमपरं फलं प्राप्य स्तवराजस्य कथ्यते ।
यद्यन्मनसि सङ्कल्पस्तवमेतदुदीरितम् ॥१३४॥

तत्तत्प्राप्नोति देवेश वटुकस्य प्रसादतः ।
आपदां हि विनाशाय कारणं कान्तदुर्लभम् ॥१३५॥

देवासुररणे घोरे देवानामुपकारकम् ।
प्रकाशितं मया नाथ तन्त्रे भैरवदीपके ॥१३६॥

अपुत्रो लभते पुत्रान् षण्मासे च निरन्तरम् ।
पठित्वा पाठयित्वाऽपि स्तवराज मनुत्तमम् ॥१३७॥

दरिद्रो लभते लक्ष्मी मायुःप्राप्तिमतिश्चिरम् ।
कन्यार्थी लभते कन्यां सर्वरूपसमन्विताम् ॥१३८॥

प्रदोषे बलिदाने च वशये दखिलं जगत् ।
वटे वा बिल्वमूले वा रम्भायां विपिने वने ॥१३९॥

जपे त्सततमालक्ष्य मन्त्रराजस्य सिद्धये ।
वर्णलक्षं जपेद्वापि दिङ्मात्रं हि प्रदर्शितम् ॥१४०॥

पूजयेत्तुतिलैर्माषैर्दुग्धैर्मांसैर्झषैस्तथा ।
घृतपक्वान्नतो वापि व्यञ्जनै रससङ्कुलैः ॥१४१॥

पूजयेद्धारयेद्वापि स्तवमेनं सुसाधकः ।
पठेद्वा पाठयेद्वापि यथाविधि सुरप्रिये ॥१४२॥

शत्रुतो न भयं तेषां नाग्निचौराब्जजं भयम् ।
ज्वरादिसम्भवं चापि सत्यं सत्यं महेश्वरि ॥१४३॥

भैरवाराधने शक्तो यो भवेत्साधकः प्रभो ।
सदाशिवः सविज्ञेयो भैरवेणेति भाषितम ॥१४४॥

श्रीमद्भैरवराजसेवनविधौ वैयाग्रमासेदुषः
पुंसः पञ्चविधा भवन्ति नवधा ह्यष्टौ महासिद्धयः ।
क्षोणिपालकिरीटकोटिमणिरुङ्मालामरैर्भूयशो
मौद्र्यंपादपयोजयोर्निवहते मूर्ध्निपयस्सिच्यताम् ॥१४५॥

इति भैरवतन्त्रे देवीहरसंवादे श्रीवटुकभैरवसहस्रनामस्तोत्रं

॥ संपूर्णम् ॥



॥ ॐ ॥

# ॥ बृहत्स्तोत्ररत्नाकरः ॥

## ॥ आदित्यहृदयम् ॥

ततो युद्धपरिश्रान्तं समरे चिन्तया स्थितम् ।
रावणं चाग्रतो दृष्ट्वा युद्धाय समुपस्थितम् ॥१॥

दैवतैश्च समागम्य द्रष्टुमभ्यागतो रणम् ।
उपगम्याब्रवीद्राममगस्त्यो भगवानृषिः ॥२॥

राम राम महाबाहो शृणु गुह्यं सनातनम् ।
येन सर्वानरीन्वत्स समरे विजयिष्यसि ॥३॥

आदित्यहृदयं पुण्यं सर्वशत्रुविनाशनम् ।
जयावहं जपेन्नित्यमक्षय्यं परमं शुभम् ॥४॥

सर्वमङ्गलमाङ्गल्यं सर्वपापप्रणाशनम् ।
चिन्ताशोकप्रशमनमायुर्वर्धनमुत्तमम् ॥५॥

रश्मिमन्तं समुद्यन्तं देवासुरनमस्कृतम् ।
पूजयस्व विवस्वन्तं भास्करं भुवनेश्वरम् ॥६॥

सर्वदेवात्मको ह्येष तेजस्वी रश्मिभावनः ।
एष देवासुरगणाँल्लोकान्पाति गभस्तिभिः ॥७॥

एष ब्रह्माच विष्णुश्च शिवस्स्कन्दः प्रजापतिः ।
महेन्द्रो धनदः कालो यमस्सोमो ह्यपांपतिः ॥८॥
पितरो वसवस्साध्या ह्यश्विनौ मरुतो मनुः ।
वायुर्वह्निः प्रजाः प्राणा ऋतुकर्ता प्रभाकरः ॥९॥
आदित्यस्सविता सूर्यः खगः पूषा गभस्तिमान् ।
सुवर्णसदृशोभानुर्हिरण्यरेता दिवाकरः ॥१०॥
हरिदश्वस्सहस्रार्चिस्सप्तसप्तिर्मरीचिमान् ।
तिमिरोन्मथनश्शम्भुस्त्वष्टामार्तण्ड अंशुमान् ॥११॥
हिरण्यगर्भश्शिशिरस्तपनो भास्करो रविः ।
अग्निगर्भोऽदितेः पुत्रश्शङ्खश्शिशिरनाशनः ॥१२॥
व्योमनाथस्तमोभेदी ऋग्यजुस्सामपारगः ।
घनवृष्टिरपांमित्रो विन्ध्यवीथीप्लवङ्गमः ॥१३॥
आतपी मण्डली मृत्युः पिङ्गळस्सर्वतापनः ।
कविर्विश्वो महातेजा रक्तस्सर्वभवोद्भवः ॥१४॥
नक्षत्रग्रहताराणामधिपो विश्वभावनः ।
तेजसामपि तेजस्वी द्वादशात्मन्नमोऽस्तु ते ॥१५॥
नमः पूर्वाय गिरये पश्चिमे गिरये नमः ।
ज्योतिर्गणानां पतये दिनाधिपतये नमः ॥१६॥
जयाय जयभद्राय हर्यश्वाय नमो नमः ।
नमो नमस्सहस्रांशो आदित्याय नमो नमः ॥१७॥

नम उग्राय वीराय सारङ्गाय नमो नमः ।
नमः पद्मप्रबोधाय मार्ताण्डाय नमो नमः ॥१८॥

ब्रह्मेशानाच्युतेशाय सूर्यायादित्यवर्चसे ।
भास्वते सर्वभक्षाय रौद्राय वपुषे नमः ॥१९॥

तमोघ्नाय हिमघ्नाय शत्रुघ्नायाऽमितात्मने ।
कृतघ्नघ्नाय देवाय ज्योतिषां पतये नमः ॥२०॥

तप्तचामीकराभाय वह्नये विश्वकर्मणे ।
नमस्तमोऽभिनिघ्नाय रुचये लोकसाक्षिणे ॥२१॥

नाशयत्येष वै भूतं तदेव सृजति प्रभुः ।
पायत्येष तपत्येष वर्षत्येष गभस्तिभिः ॥२२॥

एष सुप्तेषु जागर्ति भूतेषु परिनिष्ठितः ।
एष चैवाग्निहोत्रं च फलं चैवाग्निहोत्रिणाम् ॥२३॥

वेदाश्च क्रतवश्चैव क्रतूनां फलमेव च ।
यानि कृत्यानि लोकेषु सर्व एष रविः प्रभुः ॥२४॥

एन मापत्सु कृच्छ्रेषु कान्तारेषु भयेषु च ।
कीर्तयन्पुरुषः कश्चिन्नावसीदति राघव ॥२५॥

पूजयस्वैनमेकाग्रो देवदेवं जगत्पतिम् ।
एतत्त्रिगुणितं जप्त्वा युद्धेषु विजयिष्यसि ॥२६॥

अस्मिन्क्षणे महाबाहो रावणं त्वं वधिष्यसि ।
एवमुक्त्वा तदाऽगस्त्यो जगाम च यथागतम् ॥२७॥

एतच्छ्रुत्वा महातेजा नष्टशोकोऽभवत्तदा ।
धारयामास सुप्रीतो राघवः प्रयतात्मवान् ॥२८॥
आदित्यं प्रेक्ष्य जप्त्वा तु परं हर्षमवाप्तवान् ।
त्रिराचम्य शुचिर्भूत्वा धनुरादाय वीर्यवान् ॥२९॥
रावणं प्रेक्ष्य हृष्टात्मा युद्धाय समुपागमत् ।
सर्वयत्नेन महता वधे तस्य धृतोऽभवत् ॥३०॥
अथ रविरवदन्निरीक्ष्यरामं मुदितमनाः परमं प्रहृष्यमाणः ।
निशिचरपतिसंक्षयं विदित्वा सुरगणमध्यगतो वचस्त्वरेति ॥३१॥

॥ इति श्रीमद्रामायणे आदित्यहृदयं समाप्तम् ॥

## ॥ सूर्याष्टकम् ॥

साम्ब उवाच—

आदिदेव नमस्तुभ्यं प्रसीद मम भास्कर ।
दिवाकर नमस्तुभ्यं प्रभाकर नमोऽस्तु ते ॥१॥
सप्ताश्वरथमारूढं प्रचण्डं कश्यपात्मजम् ।
श्वेतपद्मधरं देवं तं सूर्यं प्रणमाम्यहम् ॥२॥
लोहितं रथमारूढं सर्वलोकपितामहम् ।
महापापहरं देवं तं सूर्यं० ॥३॥
त्रैगुण्यं च महाशूरं ब्रह्मविष्णुमहेश्वरम् ।
महापापहरं देवं तं सूर्यं० ॥४॥
बृंहितं तेजःपुंजं च वायुमाकाशमेव च ।
प्रभुं च सर्वलोकानां तं सूर्यं० ॥५॥

बन्धूकपुष्पसङ्काशं हारकुण्डलभूषितम् ।
एकचक्रधरं देवं तं सूर्यं० ॥६॥

तं सूर्यं जगत्कर्तारं महातेजःप्रदीपनम् ।
महापापहरं देवं तं सूर्यं० ॥७॥

तं सूर्यं जगतां नाथं ज्ञानविज्ञानमोक्षदम् ।
महापापहरं देवं तं सूर्यं० ॥८॥

सूर्याष्टकं पठेन्नित्यं ग्रहपीडाप्रणाशनम् ।
अपुत्रो लभते पुत्रं दरिद्रो धनवान्भवेत् ॥९॥

आमिषं मधुपानं च यः करोति रवेर्दिने ।
सप्तजन्म भवेद्रोगी जन्मजन्म दरिद्रता ॥१०॥

स्त्रीतैलमधुमांसानि यस्त्यजेत्तु रवेर्दिने ।
न व्याधिः शोकदारिद्र्यं सूर्यलोकं स गच्छति ॥११॥

॥ इति श्रीसूर्याष्टकस्तोत्रं संपूर्णम् ॥

## ॥ सूर्यार्यास्तोत्रम् ॥

शुकतुण्डच्छवि सवितुश्चण्डरुचेः पुण्डरीकवनबन्धोः ।
मण्डलमुदितं वन्दे कुण्डलमाखण्डलाशायाः ॥१॥

यस्योदयास्तसमये सुरमकुटनिघृष्टचरणकमलोऽपि ।
कुरुतेऽञ्जलिं त्रिनेत्रः स जयति धाम्नां निधिः सूर्यः ॥२॥

उदयाचलतिलकाय प्रणतोऽस्मि विवस्वते ग्रहेशाय ।
अम्बरचूडामणये दिग्वनिताकर्णपूराय ॥३॥

जयति जनानन्दकरः करनिकरनिरस्ततिमिरसङ्घातः ।
लोकालोकालोकः कमलारुणमण्डलः सूर्यः ॥४॥

प्रतिबोधितकमलवनः कृतघटनश्चक्रवाकमिथुनानाम् ।
दर्शितसमस्तभुवनः परहितनिरतो रविः सदा जयति ॥५॥

अपनयतु सकलकलिकृतमलपटलं सुप्रतप्तकनकाभः ।
अरविन्दवृन्दविघटनपटुतरकिरणोत्करः सविता ॥६॥

उदयाद्रिचारुचामरहरितहयखुरपरिहितरेणुराग ।
हरितहय हरितपरिकर गगनाङ्गनदीपक नमस्ते ॥७॥

उदितवति त्वयि विकसति मुकुलीयति समस्तमस्तमितबिम्बे ।
नह्यन्यस्मिन्दिनकरसकलं कमलायते भुवनम् ॥८॥

जयति रविरुदयसमये बालातपः कनकसंनिभो यस्य ।
कुसुमाञ्जलिरिव जलधौ तरन्ति रथसप्तयः सह ॥९॥

आर्याः सांबपुरे सप्त आकाशात्पतिता भुवि ।
यस्य कण्ठे गृहे वापि न स लक्ष्म्या वियुज्यते ॥१०॥

आर्याः सप्त सदा यस्तु सप्तम्यां सप्तधा जपेत् ।
तस्य गेहं च देहं च पद्मा सत्यं न मुञ्चति ॥११॥

निधिरेष दरिद्राणां रोगिणां परमौषधम् ।
सिद्धिः सकलकार्याणां गाथेयं संस्मृता रवेः ॥१२॥

॥ इति श्रीयाज्ञवल्क्यविरचितं सूर्यार्यास्तोत्रं संपूर्णम् ॥

---

॥ ॐ ॥

# ॥ बृहत्स्तोत्ररत्नाकरः ॥



## ॥ श्रीविष्णुसहस्रनामस्तोत्रम् ॥

शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत् सर्वविघ्नोपशान्तये ॥

हरिः ओम्—

व्यासं वसिष्ठनप्तारं शक्तेः पौत्रमकल्मषम् ।
पराशरात्मजं वन्दे शुकतातं तपोनिधिम् ॥१॥

व्यासाय विष्णुरूपाय व्यासरूपाय विष्णवे ।
नमो वै ब्रह्मनिधये वासिष्ठाय नमो नमः ॥२॥

अविकाराय शुद्धाय नित्याय परमात्मने ।
सदैकरूपरूपाय विष्णवे सर्वजिष्णवे ॥३॥

यस्य स्मरणमात्रेण जन्मसंसारबन्धनात् ।
विमुच्यते नमस्तस्मै विष्णवे प्रभविष्णवे ॥४॥

ओं नमो विष्णवे प्रभविष्णवे ॥

वैशंपायन उवाच—

श्रुत्वा धर्मानशेषेण पावनानि च सर्वशः ।
युधिष्ठिरः शान्तनवं पुनरेवाभ्यभाषत ॥५॥

युधिष्ठिर उवाच—

किमेकं दैवतं लोके किंवाप्येकं परायणम् ।
स्तुवन्तः कं कमर्चन्तः प्राप्नुयुर्मानवाः शुभम् ॥६॥

को धर्मः सर्वधर्माणां भवतः परमो मतः ? ।
किं जपन् मुच्यते जन्तुर्जन्मसंसारबन्धनात् ? ॥७॥

भीष्म उवाच—

जगत्प्रभुं देवदेवमनन्तं पुरुषोत्तमम् ।
स्तुवन्नामसहस्रेण पुरुषः सततोत्थितः ॥८॥

तमेव चार्चयन्नित्यं भक्त्या पुरुषमव्ययम् ।
ध्यायन् स्तुवन्नमस्यंश्च यजमानस्तमेव च ॥९॥

अनादिनिधनं विष्णुं सर्वलोकमहेश्वरम् ।
लोकाध्यक्षं स्तुवन्नित्यं सर्वदुःखातिगो भवेत् ॥१०॥

ब्रह्मण्यं सर्वधर्मज्ञं लोकानां कीर्तिवर्धनम् ।
लोकनाथं महद्भूतं सर्वभूतभवोद्भवम् ॥११॥

एष मे सर्वधर्माणां धर्मोऽधिकतमो मतः ।
यद्भक्त्या पुण्डरीकाक्षं स्तवैरर्चेन्नरः सदा ॥१२॥

परमं यो महत्तेजः परमं यो महत्तपः ।
परमं यो महद्ब्रह्म परमं यः परायणम् ॥१३॥

पवित्राणां पवित्रं यो मङ्गलानां च मङ्गलम् ।
दैवतं देवतानां च भूतानां योऽव्ययः पिता ॥१४॥

यतः सर्वाणि भूतानि भवन्त्यादियुगागमे ।
यस्मिंश्च प्रलयं यान्ति पुनरेव युगक्षये　　॥१५॥

तस्य लोकप्रधानस्य जगन्नाथस्य भूपते ।
विष्णोर्नामसहस्रं मे शृणु पापभयापहम्　　॥१६॥

यानि नामानि गौणानि विख्यातानि महात्मनः ।
ऋषिभिः परिगीतानि तानि वक्ष्यामि भूतये　　॥१७॥

ऋषिर्नाम्नां सहस्रस्य वेदव्यासो महामुनिः ।
छन्दोऽनुष्टुप् तथा देवो भगवान् देवकीसुतः　　॥१८॥

अमृतांशूद्भवो बीजं शक्तिर्देवकिनन्दनः ।
त्रिसामा हृदयं तस्य शान्त्यर्थे विनियुज्यते　　॥१९॥

विष्णुं जिष्णुं महाविष्णुं प्रभविष्णुं महेश्वरम् ।
अनेकरूपदैत्यान्तं नमामि पुरुषोत्तमम्　　॥२०॥

अस्य श्रीविष्णोर्दिव्यसहस्रनामस्तोत्रमहामन्त्रस्य, श्रीवेदव्यासो भगवान् ऋषिः, अनुष्टुप् छन्दः श्रीविष्णुः परमात्मा श्रीमन्नारायणो देवता । अमृतांशूद्भवो भानुरिति बीजम् । देवकीनन्दनः स्रष्टेति शक्तिः । *उद्भवः क्षोभणो देव इति परमो मन्त्रः । शङ्खभृन्नन्दकी चक्रीति कीलकम् । शार्ङ्गधन्वा गदाधर इत्यस्त्रम् । रथाङ्गपाणिरक्षोभ्य इति नेत्रम् । त्रिसामा सामगः सामेति कवचम् ।

* 'त्रिसामा सामगस्सामेति हृदयम् । शङ्खभृन्नन्दकी चक्रीति कीलकम् । शार्ङ्गधन्वा गदाधर इत्यस्त्रम् । रथाङ्गपाणिरक्षोभ्यइति कवचम् । उद्भवः क्षोभणो देव इति परमो मन्त्रः । श्रीमहाविष्णुप्रीत्यर्थे जपे विनियोगः' इति क्वचित्पाठः ॥

आनन्दं परं ब्रह्मेति योनिः । ऋतुस्सुदर्शनः काल इति दिग्बन्धः । विश्वरूपइति ध्यानम् ॥ श्रीमहाविष्णुप्रीत्यर्थे जपे विनियोगः ॥ विश्वं विष्णुर्वषट्कार इत्यङ्गुष्ठाभ्यां नमः । अमृतांशूद्भवो भानुरिति तर्जनीभ्यां नमः । ब्रह्मण्यो ब्रह्मकृत् ब्रह्मेति मध्यमाभ्यां नमः । सुवर्णबिन्दुरक्षोभ्य इत्यनामिकाभ्यां नमः । निमिषोऽनिमिषः स्रग्वीति कनिष्ठिकाभ्यां नमः । रथाङ्गपाणिरक्षोभ्य इति करतलकरपृष्ठाभ्यां नमः । सुकृतः सुमुखः सूक्ष्मेति ज्ञानाय हृदयाय नमः । सहस्रमूर्धा विश्वात्मेति ऐश्वर्याय शिरसे स्वाहा । सहस्रार्चिः सप्तजिह्वेति शक्त्यै शिखायै वौषट् । त्रिसामा सामगः सामेति बलाय कवचाय हुं । रथाङ्गपाणिरक्षोभ्य इति तेजसे नेत्रत्रयाय वौषट् । शार्ङ्गधन्व गदाधर इति वीर्याय अस्त्रायफट् । ऋतुः सुदर्शनः काल इति भूर्भुवरोम् इति दिग्बन्धः ॥

ध्यानम्—

क्षीरोदन्वत्प्रदेशे शुचिमणिविलसत्सैकतेमौक्तिकानां
मालाकॢप्तासनस्थः स्फटिकमणिनिभैर्मौक्तिकैर्मण्डिताङ्गः ।
शुभ्रैरभ्रैरदभ्रैरुपरिविरचितैर्मुक्तपीयूषवर्षै-
रानन्दी नःपुनीयादरिनलिनगदाशङ्खपाणिर्मुकुन्दः ॥

भूः पादौ यस्य नाभिर्वियदसुरनिलश्चन्द्रसूर्यौ च नेत्रे
कर्णावाशाः शिरो द्यौर्मुखमपि दहनो यस्य वासोऽयमब्धिः ।
अन्तःस्थं यस्य विश्वं सुरनरखगगोभोगिगन्धर्वदैत्यै-
श्चित्रं रंरम्यते तं त्रिभुवनवपुषं विष्णुमीशं नमामि ॥

शान्ताकारं भुजगशयनं पद्मनाभं सुरेशं
विश्वाकारं गगनसदृशं मेघवर्णं शुभाङ्गम् ।
लक्ष्मीकान्तं कमलनयनं योगिहृद्ध्यानगम्यं
वन्दे विष्णुं भवभयहरं सर्वलोकैकनाथम् ॥
मेघश्यामं पीतकौशेयवासं श्रीवत्साङ्कं कौस्तुभोद्भासिताङ्गम् ।
पुण्योपेतं पुण्डरीकायताक्षं विष्णुं वन्दे सर्वलोकैकनाथम् ॥

हरिः ओम्॥

विश्वं विष्णुर्वषट्कारो भूतभव्यभवत्प्रभुः ।
भूतकृद्भूतभृद्भावो भूतात्मा भूतभावनः ॥१॥
पूतात्मा परमात्मा च मुक्तानां परमा गतिः ।
अव्ययः पुरुषः साक्षी क्षेत्रज्ञोऽक्षर एव च ॥२॥
योगो योगविदां नेता प्रधानपुरुषेश्वरः ।
नारसिंहवपुः श्रीमान् केशवः पुरुषोत्तमः ॥३॥
सर्वः शर्वः शिवः स्थाणुर्भूतादिर्निधिरव्ययः ।
सम्भवो भावनो भर्ता प्रभवः प्रभुरीश्वरः ॥४॥
स्वयम्भूः शम्भुरादित्यः पुष्कराक्षो महास्वनः ।
अनादिनिधनो धाता विधाता धातुरुत्तमः ॥५॥
अप्रमेयो हृषीकेशः पद्मनाभोऽमरप्रभुः ।
विश्वकर्मा मनुस्त्वष्टा स्थविष्ठः स्थविरो ध्रुवः ॥६॥
अग्राह्यः शाश्वतः कृष्णो लोहिताक्षः प्रतर्दनः ।
प्रभूतस्त्रिककुद्धाम पवित्रं मङ्गलं परम् ॥७॥

ईशानः प्राणदः प्राणो ज्येष्ठः श्रेष्ठः प्रजापतिः ।
हिरण्यगर्भो भूगर्भो माधवो मधुसूदनः ॥८॥

ईश्वरो विक्रमी धन्वी मेधावी विक्रमः क्रमः ।
अनुत्तमो दुराधर्षः कृतज्ञः कृतिरात्मवान् ॥९॥

सुरेशः शरणं शर्म विश्वरेताः प्रजाभवः ।
अहः संवत्सरो व्यालः प्रत्ययः सर्वदर्शनः ॥१०॥

अजः सर्वेश्वरः सिद्धः सिद्धिः सर्वादिरच्युतः ।
वृषाकपिरमेयात्मा सर्वयोगविनिस्सृतः ॥११॥

वसुर्वसुमनाः सत्यः समात्मा सम्मितः समः ।
अमोघः पुण्डरीकाक्षो वृषकर्मा वृषाकृतिः ॥१२॥

रुद्रो बहुशिरा बभ्रुर्विश्वयोनिः शुचिश्रवाः ।
अमृतः शाश्वतः स्थाणुर्वरारोहो महातपाः ॥१३॥

सर्वगः सर्वविद्भानुर्विष्वक्सेनो जनार्दनः ।
वेदो वेदविदव्यङ्गो वेदाङ्गो वेदवित्कविः ॥१४॥

लोकाध्यक्षः सुराध्यक्षो धर्माध्यक्षः कृताकृतिः ।
चतुरात्मा चतुर्व्यूहश्चतुर्दंष्ट्रश्चतुर्भुजः ॥१५॥

भ्राजिष्णुर्भोजनं भोक्ता सहिष्णुर्जगदादिजः ।
अनघो विजयो जेता विश्वयोनिः पुनर्वसुः ॥१६॥

उपेन्द्रो वामनः प्रांशुरमोघः शुचिरूर्जितः ।
अतीन्द्रः सङ्ग्रहः सर्गो धृतात्मा नियमो यमः ॥१७॥

वेद्यो वैद्यः सदायोगी वीरहा माधवो मधुः ।
अतीन्द्रियो महामायो महोत्साहो महाबलः ॥१८॥
महाबुद्धिर्महावीर्यो महाशक्तिर्महाद्युतिः ।
अनिर्देश्यवपुः श्रीमानमेयात्मा महाद्रिधृत् ॥१९॥
महेष्वासो महीभर्ता श्रीनिवासः सतां गतिः ।
अनिरुद्धः सुरानन्दो गोविन्दो गोविदां पतिः ॥२०॥
मरीचिर्दमनो हंसः सुपर्णो भुजगोत्तमः ।
हिरण्यनाभः सुतपाः पद्मनाभः प्रजापतिः ॥२१॥
अमृत्युः सर्वदृक् सिंहः सन्धाता सन्धिमान् स्थिरः ।
अजो दुर्मर्षणः शास्ता विश्रुतात्मा सुरारिहा ॥२२॥
गुरुर्गुरुतमो धाम सत्यः सत्यपराक्रमः ।
निमिषोऽनिमिषः स्रग्वी वाचस्पतिरुदारधीः ॥२३॥
अग्रणीर्ग्रामणीः श्रीमान्न्यायो नेता समीरणः ।
सहस्रमूर्धा विश्वात्मा सहस्राक्षः सहस्रपात् ॥२४॥
आवर्तनो निवृत्तात्मा संवृतः संप्रमर्दनः ।
अहः संवर्तको वह्निरनिलो धरणीधरः ॥२५॥
सुप्रसादः प्रसन्नात्मा विश्वधृग्विश्वभुग्विभुः ।
सत्कर्ता सत्कृतः साधुर्जह्नुर्नारायणो नरः ॥२६॥
असंख्येयोऽप्रमेयात्मा विशिष्टः शिष्टकृच्छुचिः ।
सिद्धार्थः सिद्धसङ्कल्पः सिद्धिदः सिद्धिसाधनः ॥२७॥

वृषाही वृषभो विष्णुर्वृषपर्वा वृषोदरः ।
वर्द्धनोवर्द्धमानश्च विविक्तः श्रुतिसागरः ॥२८॥

सुभुजो दुर्धरो वाग्मी महेन्द्रो वसुदो वसुः ।
नैकरूपो बृहद्रूपः शिपिविष्टः प्रकाशनः ॥२९॥

ओजस्तेजोद्युतिधरः प्रकाशात्मा प्रतापनः ।
ऋद्धः स्पष्टाक्षरो मन्त्रश्चन्द्रांशुर्भास्करद्युतिः ॥३०॥

अमृतांशूद्भवो भानुः शशबिन्दुः सुरेश्वरः ।
औषधं जगतः सेतुः सत्यधर्मपराक्रमः ॥३१॥

भूतभव्यभवन्नाथः पवनः पावनोऽनलः ।
कामहा कामकृत्कान्तः कामः कामप्रदः प्रभुः ॥३२॥

युगादिकृद्युगावर्तो नैकमायो महाशनः ।
अदृश्योऽव्यक्तरूपश्च सहस्रजिदनन्तजित् ॥३३॥

इष्टो विशिष्टः शिष्टेष्टः शिखण्डी नहुषो वृषः ।
क्रोधहा क्रोधकृत्कर्ता विश्वबाहुर्महीधरः ॥३४॥

अच्युतः प्रथितः प्राणः प्राणदो वासवानुजः ।
अपांनिधिरधिष्ठानमप्रमत्तः प्रतिष्ठितः ॥३५॥

स्कन्दः स्कन्दधरो धुर्यो वरदो वायुवाहनः ।
वासुदेवो बृहद्भानुरादिदेवः पुरन्दरः ॥३६॥

अशोकस्तारणस्तारः शूरः शौरिर्जनेश्वरः ।
अनुकूलः शतावर्त्तः पद्मी पद्मनिभेक्षणः ॥३७॥

पद्मनाभोऽरविन्दाक्षः पद्मगर्भः शरीरभृत् ।
महर्द्धि ऋद्धो वृद्धात्मा महाक्षो गरुडध्वजः ॥३८॥

अतुलः शरभो भीमः समयज्ञो हविर्हरिः ।
सर्वलक्षणलक्षण्यो लक्ष्मीवान् समितिंजयः ॥३९॥

अक्षरो रोहितो मार्गो हेतुर्दामोदरः सहः ।
महीधरो महाभागो वेगवानमिताशनः ॥४०॥

उद्भवः क्षोभणो देवः श्रीगर्भः परमेश्वरः ।
करणं कारणं कर्ता विकर्ता गहनो गुहः ॥४१॥

व्यवसायो व्यवस्थानः संस्थानः स्थानदो ध्रुवः ।
परर्धिः परमः स्पष्टस्तुष्टः पुष्टः शुभेक्षणः ॥४२॥

रामो विरामो विरजो मार्गो नेयो नयो नयः ।
वीरः शक्तिमतां श्रेष्ठो धर्मो धर्मविदुत्तमः ॥४३॥

वैकुण्ठः पुरुषः प्राणः प्राणदः प्रणवः पृथुः ।
हिरण्यगर्भः शत्रुघ्नो व्याप्तो वायुरधोक्षजः ॥४४॥

ऋतुः सुदर्शनः कालः परमेष्ठी परिग्रहः ।
उग्रः संवत्सरो दक्षो विश्रामो विश्वदक्षिणः ॥४५॥

विस्तारः स्थावरः स्थाणुः प्रमाणं बीजमव्ययम् ।
अर्थोऽनर्थो महाकोशो महाभोगो महाधनः ॥४६॥

अनिर्विण्णः स्थविष्ठो भूर्धर्मयूपो महामखः ।
नक्षत्रनेमिर्नक्षत्री क्षमः क्षामः समीहनः ॥४७॥

यज्ञ इज्यो महेज्यश्च क्रतुः सत्रं सतां गतिः ।
सर्वदर्शी विमुक्तात्मा सर्वज्ञो ज्ञानमुत्तमम् ॥४८॥

सुव्रतः सुमुखः सूक्ष्मः सुघोषः सुखदः सुहृत ।
मनोहरो जितक्रोधो वीरबाहुर्विदारणः ॥४९॥

स्वापनः स्ववशो व्यापी नैकात्मा नैककर्मकृत ।
वत्सरो वत्सलो वत्सो रत्नगर्भो धनेश्वरः ॥५०॥

धर्मगुब्धर्मकृद्धर्मी सदसत् क्षरमक्षरम् ।
अविज्ञाता सहस्रांशुर्विधाता कृतलक्षणः ॥५१॥

गभस्तिनेमिः सत्वस्थः सिंहो भूतमहेश्वरः ।
आदिदेवो महादेवो देवेशो देवभृद्गुरुः ॥५२॥

उत्तरो गोपतिर्गोप्ता ज्ञानगम्यः पुरातनः ।
शरीरभूतभृद्भोक्ता कपीन्द्रो भूरिदक्षिणः ॥५३॥

सोमपोऽमृतपः सोमः पुरुजित्पुरुसत्तमः ।
विनयो जयः सत्यसन्धो दाशार्हः सात्वतांपतिः ॥५४॥

जीवो विनयिता साक्षी मुकुन्दोऽमितविक्रमः ।
अम्भोनिधिरनन्तात्मा महोदधिशयोऽन्तकः ॥५५॥

अजो महार्हः स्वाभाव्यो जितामित्रः प्रमोदनः ।
आनन्दो नन्दनोनन्दः सत्यधर्मा त्रिविक्रमः ॥५६॥

महर्षिः कपिलाचार्यः कृतज्ञो मेदिनीपतिः ।
त्रिपदस्त्रिदशाध्यक्षो महाशृङ्गः कृतान्तकृत् ॥५७॥

महावराहो गोविन्दः सुषेणः कनकाङ्गदी ।
गुह्यो गभीरो गहनो गुप्तश्चक्रगदाधरः ॥५८॥

वेधाः स्वाङ्गोऽजितः कृष्णो दृढः सङ्कर्षणोऽच्युतः ।
वरुणो वारुणो वृक्षः पुष्कराक्षो महामनाः ॥५९॥

भगवान् भगहाऽऽनन्दी वनमाली हलायुधः ।
आदित्यो ज्योतिरादित्यः सहिष्णुर्गतिसत्तमः ॥६०॥

सुधन्वा खण्डपरशुर्दारुणो द्रविणप्रदः ।
दिवस्पृक् सर्वदृग्व्यासो वाचस्पतिरयोनिजः ॥६१॥

त्रिसामा सामगः साम निर्वाणं भेषजं भिषक् ।
संन्यासकृच्छमः शान्तो निष्ठा शान्तिः परायणम् ॥६२॥

शुभाङ्गः शान्तिदः स्रष्टा कुमुदः कुवलेशयः ।
गोहितो गोपतिर्गोप्ता वृषभाक्षो वृषप्रियः ॥६३॥

अनिवर्ती निवृत्तात्मा संक्षेप्ता क्षेमकृच्छिवः ।
श्रीवत्सवक्षाः श्रीवासः श्रीपतिः श्रीमतां वरः ॥६४॥

श्रीदः श्रीशः श्रीनिवासः श्रीनिधिः श्रीविभावनः ।
श्रीधरः श्रीकरः श्रेयः श्रीमाँल्लोकत्रयाश्रयः ॥६५॥

स्वक्षः स्वङ्गः शतानन्दो नन्दिर्ज्योतिर्गणेश्वरः ।
विजितात्मा विधेयात्मा सत्कीर्तिश्छिन्नसंशयः ॥६६॥

उदीर्णः सर्वतश्चक्षुरनीशः शाश्वतः स्थिरः ।
भूशयो भूषणो भूतिर्विशोकः शोकनाशनः ॥६७॥

अर्चिष्मानार्चितः कुम्भो विशुद्धात्मा विशोधनः ।
अनिरुद्धोऽप्रतिरथः प्रद्युम्नोऽमितविक्रमः ॥६८॥
कालनेमिनिहा वीरः शौरिः शूरजनेश्वरः ।
त्रिलोकात्मा त्रिलोकेशः केशवः केशिहा हरिः ॥६९॥
कामदेवः कामपालः कामी कान्तः कृतागमः ।
अनिर्देश्यवपुर्विष्णुर्वीरोऽनन्तो धनञ्जयः ॥७०॥
ब्रह्मण्यो ब्रह्मकृद्ब्रह्मा ब्रह्म ब्रह्मविवर्द्धनः ।
ब्रह्मविद्ब्राह्मणो ब्रह्मी ब्रह्मज्ञो ब्राह्मणप्रियः ॥७१॥
महाक्रमो महाकर्मा महातेजा महोरगः ।
महाक्रतुर्महायज्वा महायज्ञो महाहविः ॥७२॥
स्तव्यः स्तवप्रियः स्तोत्रं स्तुतिः स्तोता रणप्रियः ।
पूर्णः पूरयिता पुण्यः पुण्यकीर्त्तिरनामयः ॥७३॥
मनोजवस्तीर्थकरो वसुरेता वसुप्रियः ।
वसुप्रदो वासुदेवो वसुर्वसुमना हविः ॥७४॥
सद्गतिः सत्कृतिः सत्ता सद्भूतिः सत्परायणः ।
शूरसेनो यदुश्रेष्ठः सन्निवासः सुयामुनः ॥७५॥
भूतावासो वासुदेवः सर्वासुनिलयोऽनलः ।
दर्पहा दर्पदो दृप्तो दुर्धरोऽथापराजितः ॥७६॥
विश्वमूर्तिर्महामूर्तिर्दीप्तमूर्तिरमूर्तिमान् ।
अनेकमूर्तिरव्यक्तः शतमूर्तिः शताननः ॥७७॥

एको नैकः स्तवः कः किं यत्तत्पदमनुत्तमम् ।
लोकबन्धुर्लोकनाथो माधवो भक्तवत्सलः ॥७८॥

सुवर्णवर्णो हेमाङ्गो वराङ्गश्चन्दनाङ्गदी ।
वीरहा विषमः शून्यो घृताशीरचलश्चलः ॥७९॥

अमानी मानदो मान्यो लोकस्वामी त्रिलोकधृक् ।
सुमेधा मेधजो धन्यः सत्यमेधा धराधरः ॥८०॥

तेजोवृषो द्युतिधरः सर्वशस्त्रभृतांवरः ।
प्रग्रहो निग्रहोऽव्यग्रो नैकशृङ्गो गदाग्रजः ॥८१॥

चतुर्मूर्तिश्चतुर्बाहुश्चतुर्व्यूहश्चतुर्गतिः ।
चतुरात्मा चतुर्भावश्चतुर्वेदविदेकपात् ॥८२॥

समावर्तो निवृत्तात्मा दुर्जयो दुरतिक्रमः ।
दुर्लभो दुर्गमो दुर्गो दुरावासो दुरारिहा ॥८३॥

शुभाङ्गो लोकसारङ्गः सुतन्तुस्तन्तुवर्धनः ।
इन्द्रकर्मा महाकर्मा कृतकर्मा कृतागमः ॥८४॥

उद्भवः सुन्दरः सुन्दो रत्ननाभः सुलोचनः ।
अर्को वाजसनिः शृङ्गी जयन्तः सर्वविज्जयी ॥८५॥

सुवर्णबिन्दुरक्षोभ्यः सर्ववागीश्वरेश्वरः ।
महाह्रदो महागर्तो महाभूतो महानिधिः ॥८६॥

कुमुदः कुन्दरः कुन्दः पर्जन्यः पवनोऽनिलः ।
अमृतांशोऽमृतवपुः सर्वज्ञः सर्वतोमुखः ॥८७॥

सुलभः सुव्रतः सिद्धः शत्रुजिच्छत्रुतापनः ।
न्यग्रोधोदुम्बरोऽश्वत्थश्चाणूरान्ध्रनिषूदनः ॥८८॥

सहस्रार्चिः सप्तजिह्वः सप्तैधाः सप्तवाहनः ।
अमूर्तिरनघोऽचिन्त्यो भयकृद्भयनाशनः ॥८९॥

अणुर्बृहत्कृशः स्थूलो गुणभृन्निर्गुणो महान् ।
अधृतः स्वधृतः स्वास्थः प्राग्वंशो वंशवर्धनः ॥९०॥

भारभृत्कथितो योगी योगीशः सर्वकामदः ।
आश्रमः श्रमणः क्षामः सुपर्णो वायुवाहनः ॥९१॥

धनुर्धरोधनुर्वेदो दण्डो दमयिता दमः ।
अपराजितः सर्वसहो नियन्ता नियमो यमः ॥९२॥

सत्त्ववान्सात्त्विकः सत्यः सत्यधर्मपरायणः ।
अभिप्रायः प्रियार्होऽर्हः प्रियकृत्प्रीतिवर्धनः ॥९३॥

विहायसगतिर्ज्योतिः सुरुचिर्हुतभुग्विभुः ।
रविर्विरोचनः सूर्यः सविता रविलोचनः ॥९४॥

अनन्तहुतभुग्भोक्ता सुखदो नैकदोऽग्रजः ।
अनिर्विण्णः सदामर्षी लोकाधिष्ठानमद्भुतम् ॥९५॥

सनात्सनातनतमः कपिलः कपिरव्ययः ।
स्वस्तिदः स्वस्तिकृत्स्वस्ति स्वस्तिभुक्स्वस्तिदक्षिणः ॥९६॥

अरौद्रः कुण्डली चक्री विक्रम्यूर्जितशासनः ।
शब्दातिगः शब्दसहः शिशिरः शर्वरीकरः ॥९७॥

अक्रूरः पेशलो दक्षो दक्षिणः क्षमिणां वरः ।
विद्वत्तमो वीतभयः पुण्यश्रवणकीर्तनः ॥९८॥
उत्तारणो दुष्कृतिहा पुण्यो दुस्स्वप्ननाशनः ।
वीरहा रक्षणः सन्तो जीवनं पर्यवस्थितः ॥९९॥
अनन्तरूपोऽनन्तश्रीः जितमन्युर्भयापहः ।
चतुरश्रो गभीरात्मा विदिशो व्यादिशो दिशः ॥१००॥
अनादिर्भूर्भुवो लक्ष्मीः सुवीरो रुचिराङ्गदः ।
जननो जनजन्मादिर्भीमो भीमपराक्रमः ॥१०१॥
आधारनिलयो धाता पुष्पहासः प्रजागरः ।
ऊर्ध्वगः सत्पथाचारः प्राणदः प्रणवः पणः ॥१०२॥
प्रमाणं प्राणनिलयः प्राणभृत्प्राणजीवनः ।
तत्त्वं तत्त्वविदेकात्मा जन्ममृत्युजरातिगः ॥१०३॥
भूर्भुवः स्वस्तरुस्तारः सविता प्रपितामहः ।
यज्ञो यज्ञपतिर्यज्वा यज्ञाङ्गो यज्ञवाहनः ॥१०४॥
यज्ञभृद्यज्ञकृद्यज्ञी यज्ञभुग्यज्ञसाधनः ।
यज्ञान्तकृद्यज्ञगुह्यमन्नमन्नाद एव च ॥१०५॥
आत्मयोनिः स्वयंजातो वैखानः सामगायनः ।
देवकीनन्दनः स्रष्टा क्षितीशः पापनाशनः ॥१०६॥
शङ्खभृन्नन्दकी चक्री शार्ङ्गधन्वा गदाधरः ।
रथाङ्गपाणिरक्षोभ्यः सर्वप्रहरणायुधः ॥१०७॥

सर्वप्रहरणायुध ओन्नम इति ॥

वनमाली गदी शार्ङ्गी शङ्खी चक्री च नन्दकी ।
श्रीमान्नारायणो विष्णुः वासुदेवोऽभिरक्षतु ॥१॥

इतीदं कीर्तनीयस्य केशवस्य महात्मनः ।
नाम्नां सहस्रं दिव्यानामशेषेण प्रकीर्तितम् ॥२॥

य इदं शृणुयान्नित्यं यश्चापि परिकीर्तयेत् ।
नाशुभं प्राप्नुयात् किंचित्सोमुत्रेह च मानवः ॥३॥

वेदान्तगो ब्राह्मणः स्यात्क्षत्रियो विजयी भवेत् ।
वैश्यो धनसमृद्धः स्याच्छूद्रः सुखमवाप्नुयात् ॥४॥

धर्मार्थी प्राप्नुयाद्धर्ममर्थार्थी चार्थमाप्नुयात् ।
कामानवाप्नुयात्कामी प्रजार्थी प्राप्नुयात्प्रजाम् ॥५॥

भक्तिमान्यः सदोत्थाय शुचिस्तद्गतमानसः ।
सहस्रं वासुदेवस्य नाम्नामेतत्प्रकीर्तयेत् ॥६॥

यशः प्राप्नोति विपुलं याति प्राधान्यमेव च ।
अचलां श्रियमाप्नोति श्रेयः प्राप्नोत्यनुत्तमम् ॥७॥

न भयं क्वचिदाप्नोति वीर्यं तेजश्च विन्दति ।
भवत्यरोगो द्युतिमान्बलरूपगुणान्वितः ॥८॥

रोगार्तो मुच्यते रोगाद्बद्धो मुच्येत बन्धनात् ।
भयान्मुच्येत भीतस्तु मुच्येतापन्न आपदः ॥९॥

दुर्गाण्यतितरत्याशु पुरुषः पुरुषोत्तमम् ।
स्तुवन्नामसहस्रेण नित्यं भक्तिसमन्वितः ॥१०॥

वासुदेवाश्रयो मर्त्यो वासुदेवपरायणः ।
सर्वपापविशुद्धात्मा याति ब्रह्म सनातनम् ॥११॥

न वासुदेवभक्तानामशुभं विद्यते क्वचित् ।
जन्ममृत्युजराव्याधिभयं नैवोपजायते ॥१२॥

इमं स्तवमधीयानः श्रद्धाभक्तिसमन्वितः ।
युज्येतात्मासुखक्षान्तिश्रीधृतिस्मृतिकीर्तिभिः ॥१३॥

न क्रोधो न च मात्सर्यं न लोभो नाशुभा मतिः ।
भवन्ति कृतपुण्यानां भक्तानां पुरुषोत्तमे ॥१४॥

द्यौः सचन्द्रार्कनक्षत्रा खं दिशो भूर्महोदधिः ।
वासुदेवस्य वीर्येण विधृतानि महात्मनः ॥१५॥

ससुरासुरगन्धर्वं सयक्षोरगराक्षसम् ।
जगद्वशे वर्ततेदं कृष्णस्य सचराचरम् ॥१६॥

इन्द्रियाणि मनो बुद्धिः सत्त्वं तेजो बलं धृतिः ।
वासुदेवात्मकान्याहुः क्षेत्रं क्षेत्रज्ञ एव च ॥१७॥

सर्वागमानामाचारः प्रथमं परिकल्पितः ।
आचारप्रभवो धर्मो धर्मस्य प्रभुरच्युतः ॥१८॥

ऋषयः पितरो देवा महाभूतानि धातवः ।
जङ्गमाजङ्गमं चेदं जगन्नारायणोद्भवम् ॥१९॥

योगो ज्ञानं तथा सांख्यं विद्याः शिल्पादिकर्म च ।
वेदाः शास्त्राणि विज्ञानमेतत्सर्वं जनार्दनात् ॥२०॥

एको विष्णुर्महद्भूतं पृथग्भूतान्यनेकशः ।
त्रीन्लोकान्व्याप्य भूतात्मा भुङ्क्ते विश्वभुगव्ययः ॥२१॥

इमं स्तवं भगवतो विष्णोर्व्यासेन कीर्तितम् ।
पठेद्य इच्छेत्पुरुषः श्रेयः प्राप्तुं सुखानि च ॥२२॥

विश्वेश्वरमजं देवं जगतः प्रभुमव्ययम् ।
भजन्ति ये पुष्कराक्षं न ते यान्ति पराभवम् ॥२३॥

न ते यान्ति पराभवमोन्नम इति ॥

अर्जुन उवाच—

पद्मपत्र विशालाक्ष पद्मनाभ सुरोत्तम ।
भक्तानामनुरक्तानां त्राता भव जनार्दन ॥२४॥

श्रीभगवानुवाच—

यो मां नामसहस्रेण स्तोतुमिच्छति पाण्डव ।
सोऽहमेकेन श्लोकेन स्तुत एव न संशयः ॥२५॥

स्तुत एव न संशय ओन्नम इति ॥

व्यास उवाच—

वासनाद्वासुदेवस्य वासितं ते जगत्त्रयम् ।
सर्वभूतनिवासोऽसि वासुदेव नमोऽस्तु ते ॥२६॥

श्रीवासुदेव नमोऽस्तुत ओन्नम इति ॥

पार्वत्युवाच—

केनोपायेन लघुना विष्णोर्नामसहस्रकम् ।
पठ्यते पण्डितैर्नित्यं श्रोतुमिच्छाम्यहं प्रभो ॥२७॥

ईश्वर उवाच—

श्रीराम राम रामेति रमे रामे मनोरमे ।

सहस्रनामत(स्तु)त्तुल्यं रामनाम वरानने ॥२८॥

रामनाम वरानन ओन्नम इति ॥

ब्रह्मोवाच—

नमोऽस्त्वनन्ताय सहस्रमूर्तये सहस्रपादाक्षिशिरोरुबाहवे ।

सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटीयुगधारिणे नमः ॥२९॥

सञ्जय उवाच—

यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ।

तत्रश्रीर्विजयोभूतिर्ध्रुवा नीतिर्मतिर्मम ॥३०॥

श्रीभगवानुवाच—

अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।

तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥३१॥

परित्राणायसाधूनां विनाशाय च दुष्कृताम् ।

धर्मसंस्थापनार्थाय संभवामि युगेयुगे ॥३२॥

आर्ता विषण्णाः शिथिलाश्च भीताः घोरेषु च व्याधिषु वर्तमानाः ।

सङ्कीर्त्य नारायणशब्दमात्रं विमुक्तदुःखाः सुखिनो भवन्ति ॥३३॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां

वैयासिक्यामानुशासनपर्वान्तर्गतानुशासनिकपर्वणि भीष्मयुधिष्ठिरसंवादे

॥ श्रीविष्णुसहस्रनामस्तोत्रं संपूर्णम् ॥

## ॥ श्रीनारायणकवचम् ॥

राजोवाच—

येन गुप्तस्सहस्राक्षस्सवाहानरिसैनिकान् ।
क्रीडन्निव विनिर्जित्य त्रिलोक्या बुभुजे श्रियम् ॥१॥

भगवंस्तन्ममाचक्ष्व वर्म नारायणात्मकम् ।
यथाऽततायिनश्शत्रून्येन गुप्तोऽजयन्मृधे ॥२॥

श्रीशुक उवाच—

वृतः पुरोहितस्त्वाष्ट्रो महेन्द्रायानुपृच्छते ।
नारायणाख्यं वर्माह तदिहैकमनाश्शृणु ॥३॥

विश्वरूप उवाच—

धौताङ्घ्रिपाणिराचम्य सपवित्र उदङ्मुखः ।
कृतस्वाङ्गकरन्यासो मन्त्राभ्यां वाग्यतश्शुचिः ॥४॥

नारायणमयं वर्म सन्नह्यद्भय आगते ।
दैवभूतात्मकर्मभ्यो नारायणमयः पुमान् ॥५॥

पादयोर्जानुनोरूर्वोरुदरे हृद्यथोरसि ।
मुखेशिरस्यानुपूर्व्यादोङ्कारादीनि विन्यसेत् ॥६॥

ओं नमोनारायणायेति विपर्ययमथापि वा ।
करन्यासं ततः कुर्याद्द्वादशाक्षरविद्यया ॥७॥

प्रणवादियकारान्त मङ्गुल्यङ्गुष्ठपर्वसु ।
न्यसेद्धृदय ओंकारं विकारमनुमूर्धनि ॥८॥

षकारस्तु भ्रुवोर्मध्ये णकारं शिखया न्यसेत् ।
वेकारं नेत्रयोर्युञ्ज्यान्नकारं सर्वसन्धिषु ॥९॥
मकारमस्त्रमुद्दिश्य मन्त्रमूर्तिर्भवेद्बुधः ।
सविसर्गं फडन्तन्तु सर्वदिक्षु विनिर्दिशेत् ॥१०॥

ओं श्रीविष्णवे नमः ॥

इत्यात्मानं परं ध्याये द्ध्येयं षट्छक्तिभिर्युतम् ।
विद्यातेजस्तपोमूर्तिमिमं मन्त्रमुदाहरेत् ॥११॥
ओं हरिर्विदध्यान्मम सर्वरक्षां न्यस्तांङ्घ्रिपद्मः पतगेन्द्रपृष्ठे ।
दरारिचर्मासिगदेषुचापपाशान्दधानोऽष्टगुणोऽष्टबाहुः ॥१२॥
जलेषु मां रक्षतु मत्स्यमूर्तिर्यादोगणेभ्यो वरुणस्य पाशात् ।
स्थलेषु मायावटुवामनोऽव्यात्त्रिविक्रमः खेऽवतु विश्वरूपः ॥१३॥
दुर्गेष्वटव्याजिमुखादिषु प्रभुः पायान्नृसिंहोऽसुरयूथपारिः ।
विमुञ्चतो यस्य महाट्टहासं दिशोविनेदुर्न्यपतंश्च गर्भाः ॥१४॥
रक्षत्यसौ माऽध्वनि यज्ञकल्पस्स्वदंष्ट्रयोन्नीतधरो वराहः ।
रामोऽद्रिकूटेष्वथ विप्रवासे सलक्ष्मणोऽव्याद्भरताग्रजो माम् ॥१५॥
मामुग्रधर्मादखिलात्प्रमादान्नारायणः पातु नरश्च हासात् ।
दत्तस्त्वयोगादथ योगनाथः पायाद्गुणेशः कपिलः कर्मबन्धात् ॥१६॥
सनत्कुमारोऽवतु कामदेवाद्धयाननो मां पथि देवहेळनात् ।
देवर्षिवर्यः पुरुषार्चनान्तरात्कूर्मो हरिर्मां निरयादशेषात् ॥१७॥
धन्वन्तरिर्भगवान्पात्वपथ्याद्द्वन्द्वाद्भयादृषभो निर्जितात्मा ।
यज्ञश्च लोकादुतत्कृतान्नो बलो गणात् क्रोधवशादहीन्द्रः ॥१८॥

द्वैपायनो भगवान्संप्रमोहाद्बुद्धश्च पाषण्डगणात्प्रमादात् ।
कल्किः कलेः कालमलात्प्रमादाद्धर्मावनायोरुकृतावतारः ॥१९॥

मां केशवो गदया प्रातरव्याद्गोविन्द आसङ्गवमात्तवेणुः ।
नारायणः प्राह्ण उदात्तशक्तिर्मध्यंदिने विष्णुररीन्द्रपाणिः ॥२०॥

देवोऽपराह्णे मधुहोग्रधन्वा सायं त्रिधामाऽवतु माधवो माम् ।
दोषे हृषीकेश उतार्धरात्रे निशीथ एकोऽवतु पद्मनाभः ॥२१॥

श्रीवत्सधामाऽपररात्र ईशः प्रत्यूष ईशोऽसिधरो जनार्दनः ।
दामोदरोऽव्यादनुसन्ध्यं प्रभाते विश्वेश्वरो भगवान्कालमूर्तिः ॥२२॥

चक्रं युगान्तानलतिग्मनेमिभ्रमत्समन्ताद्भगवत्प्रयुक्तम् ।
दन्दग्धिदन्दग्ध्यरिसैन्यमाशु कक्षं यथा वायुसखो हुताशः ॥२३॥

गदेऽशनिस्पर्शनविस्फुलिङ्गे निष्पिण्ड निष्पिण्ड्यजितप्रियासि ।
कूश्माण्डवैनायकयक्षरक्षोभूतग्रहांश्चूर्णय चूर्णयारीन् ॥२४॥

त्वं यातुधानप्रमथप्रमातृपिशाचविप्रग्रहघोरदृष्टीन् ।
दरेन्द्र विद्रावय कृष्णपूरितो भीमस्वनारेर्हृदयानि कंपय ॥२५॥

त्वं तिग्मधारासिवरारिसैन्यमीशप्रयुक्तो मम छिन्धि छिन्धि ।
चक्षूंषि शर्मन् शतचन्द्र छादय द्विषामघोनां हरपापचक्षुषाम् ॥२६॥

यन्नो भयं ग्रहेभ्योऽभूत्केतुभ्यो नृभ्य एव च ।
सरीसृपेभ्यो दंष्ट्रिभ्यो भूतेभ्योऽघेभ्य एव च ॥२७॥

सर्वाण्येतानि भगवन्नामरूपास्त्रकीर्तनात् ।
प्रयान्तु संक्षयं सद्यो येऽन्ये श्रेयःप्रतीपकाः ॥२८॥

गरुडो भगवांस्तोत्रस्तोभश्छन्दोमयः प्रभुः ।
रक्षत्वशेषकृच्छ्रेभ्यो विष्वक्सेनस्स्ववाहनम् ॥२९॥
सर्वापद्भ्यो हरेर्नामरूपयानायुधानि नः ।
बुद्धीन्द्रियमनःप्राणान्पान्तु पार्षदभूषणाः ॥३०॥
यथा हि भगवानेव वस्तुतस्सदसच्च यत् ।
सत्येनानेन नस्सर्वे यान्तु नाशमुपद्रवाः ॥३१॥
यथैकात्म्यानुभावानां विकल्परहितस्स्वयम् ।
भूषणायुधलिङ्गाख्या धत्ते शक्तिस्स्वमायया ॥३२॥
तेनैवसत्यमानेन सर्वज्ञो भगवान् हरिः ।
पातु सर्वस्स्वरूपेण सदा सर्वत्रसर्वगः ॥३३॥
विदिक्षु दिक्षूर्ध्वमधस्समन्तादन्तर्बहिर्भगवान्नारसिंहः ।
प्रहापयन्लोकभयं स्वनेन स्वतेजसाग्रस्तसमस्ततेजाः ॥३४॥

श्रीविश्वरूपः—

मघवन्निदमाख्यातं वर्म नारायणात्मकम् ।
विजेष्यस्यञ्जसा येन दंशितोऽसुरयूथपान् ॥३५॥
एतद्धारयमाणस्तु यं यं पश्यति चक्षुषा ।
पदा वा संस्पृशेत्सद्यस्साध्वसात्स विमुच्यते ॥३६॥
न कुतश्चिद्भयं तस्य विद्यां धारयतो भवेत् ।
राजदस्युग्रहादिभ्यो व्याध्यादिभ्यश्च कर्हिचित् ॥३७॥
इमां विद्यां पुराकश्चित्कौशिको धारयन्द्विजः ।
योगधारणया स्वाङ्गं जहौ समरुधन्वनि ॥३८॥

तस्योपरि विमानेन गन्धर्वपतिरेकदा ।
ययौ चित्ररथस्त्रीभिर्वृतो यत्र द्विजक्षयः ॥३९॥

गगनान्न्यपतत्सद्यस्सविमानो ह्यवाक्छिराः ।
सवालखिल्यवचनादस्थीन्यादाय विस्मितः ॥४०॥

प्राप्यप्राच्यां सरस्वत्यां स्नात्वा धाम स्वमन्वगात् ।
य इदं शृणुयात्काले यो धारयति चादृतः ॥४१॥

तं नमस्यन्ति भूतानि मुच्यते सर्वतो भयात् ॥

श्रीशुक उवाच—

एतां विद्यामधिगतो विश्वरूपाच्छतक्रतुः ।
त्रैलोक्यलक्ष्मीं बुभुजे विनिर्जित्य मृधेऽसुरान् ॥४२॥

॥ इति श्रीभागवते षष्ठस्कन्धे नारायणकवचं संपूर्णम् ॥

## ॥ जितं ते स्तोत्रम् ॥

### प्रथमोभागः.

जितं ते पुण्डरीकाक्ष नमस्ते विश्वभावन ।
नमस्तेऽस्तु हृषीकेश महापुरुष पूर्वज ॥१॥

देवानां दानवानां च सामान्यमधिदैवतम् ।
सर्वदा चरणद्वन्द्वं व्रजामि शरणं तव ॥२॥

एकस्त्वमसि लोकस्य स्रष्टा संहारकस्तथा ।
अध्यक्षश्चानुमन्ता च गुणमायासमावृतः ॥३॥

संसारसागरं घोरमनन्तक्लेशभाजनम् ।
त्वामेव शरणं प्राप्य निस्तरन्ति मनीषिणः ॥४॥

न ते रूपं न चाकारो नायुधानि न चास्पदम् ।
तथाऽपि पुरुषाकारो भक्तानां त्वं प्रकाशसे ॥५॥

नैव किञ्चित्परोक्षं ते प्रत्यक्षोऽसि न कस्यचित् ।
नैव किञ्चिदसिद्धं ते न च सिद्धोऽसि कस्यचित् ॥६॥

कार्याणां कारणं पूर्वं वचसां वाच्यमुत्तमम् ।
योगानां परमां सिद्धिं परमं ते पदं विदुः ॥७॥

अहं भीतोऽस्मि देवेश संसारेऽस्मिन्भयावहे ।
पाहि मां पुण्डरीकाक्ष न जाने शरणं परम् ॥८॥

कालेष्वपि च सर्वेषु दिक्षु सर्वासु चाच्युत ।
शरीरे च गतौ चापि वर्तते मे महद्भयम् ॥९॥

त्वत्पादकमलादन्यत्र मे जन्मान्तरेष्वपि ।
निमित्तं कुशलस्यास्ति येन गच्छामि सद्गतिम् ॥१०॥

विज्ञानं यदिदं प्राप्तं यदिदं स्थानमार्जितम् ।
जन्मान्तरेपि मे देव माभूत्तस्य परिक्षयः ॥११॥

दुर्गतावपि जातायां त्वद्गतो मे मनोरथः ।
यदि नाशं न विन्देत तावताऽस्मि कृती सदा ॥१२॥

न काम कलुषं चित्तं मम ते पादयोस्स्थितम् ।
कामये वैष्णवत्वं तु सर्वजन्मसु केवलम् ॥१३॥

सर्वेषु देशकालेषु सर्वावस्थासु चाच्युत ।
किङ्करोऽस्मि हृषीकेश भूयो भूयोऽस्मि किङ्करः ॥१४॥
इत्येवमनया स्तुत्या स्तुत्वा देवं दिने दिने ।
किङ्करोऽस्मीति चात्मानं देवायैवं निवेदयेत् ॥१५॥
यच्चापराधं कृतवानज्ञानात्पुरुषोत्तम ।
मद्भक्त इति देवेश तत्सर्वं क्षन्तुमर्हसि ॥१६॥
अहङ्कारार्थकामेषु प्रीतिरद्यैव नश्यतु ।
त्वां प्रपन्नस्य मे देव वर्धतां श्रीमति त्वयि ॥१७॥
क्वाहमत्यन्तदुर्बुद्धिः क्व चात्महितवीक्षणम् ।
यद्धितं मम देवेश तदाज्ञापय माधव ॥१८॥
सोऽहं ते देवदेवेश नार्चनादौ स्तुतौ न च ।
सामर्थ्यवान्कृपामात्रमनोवृत्तिः प्रसीद मे ॥१९॥
उपचारापदेशेन कृता नहरहर्मया ।
अपचारानिमान्सर्वान्क्षमस्वपुरुषोत्तम ॥२०॥

द्वितीयभागः.

जितं ते पुण्डरीकाक्ष पूर्वषाड्गुण्यविग्रह ।
परानन्द परं ब्रह्मन्नमस्ते परमात्मने ॥१॥
नमस्ते पीतवसन नमः कटकधारिणे
नमो नीलालकाबद्धवेणीसुन्दरविग्रह ॥२॥
स्फुरद्वलयकेयूर नूपुराङ्गदभूषणैः ।
शोभनैर्भूषिताकार कल्याणगुणवारिधे ॥३॥

करुणापूर्णहृदय शङ्खचक्रगदाधर ।
अमृतानन्दपूर्णाभ्यां लोचनाभ्यां विलोकय ॥४॥

कृशं कृतघ्नं दुष्कर्मकारिणं पापभाजनम् ।
अपराधसहस्राणामाकरं करुणाकर ॥५॥

कृपया मां केवलया गृहाण मधुराधिप ।
विषयार्णवमग्नं मामुद्धर्तुं त्वमिहार्हसि ॥६॥

पिता माता सुहृद्बन्धुर्भ्राता पुत्रस्त्वमेव हि ।
विद्या धनं च काम्यं च नान्यत्किञ्चित्त्वया विना ॥७॥

यत्र कुत्र कुले वासो येषु केषु भवोऽस्तु मे ।
तव दास्यैकभोगे स्यात्सदा सर्वत्र मे रतिः ॥८॥

मनसा कर्मणा वाचा शिरसा वा कथञ्चन ।
त्वां विना नान्यमुद्दिश्य करिष्ये किञ्चिदप्यहम् ॥९॥

पाहि पाहि जगन्नाथ कृपया भक्तवत्सल ।
अनाथोऽहमधन्योऽहमकृतार्थः कथंचन ॥१०॥

नृशंसः पापकृत्क्रूरो वञ्चको निष्ठुरस्सदा ।
भवार्णवनिमग्नं मामनन्यं करुणोदधे ॥११॥

करुणापूर्णदृष्टिभ्यां दीनं मामवलोकय ।
त्वदग्रे पतितं त्यक्तुं तावकं नार्हसि प्रभो ॥१२॥

मया कृतानि पापानि त्रिविधानि पुनः पुनः ।
त्वत्पादपङ्कजं प्राप्तुं नान्यत्त्वत्करुणां विना ॥१३॥

साधनानि प्रसिद्धानि यागादीन्यब्जलोचन ।
त्वदाज्ञया प्रयुक्तानि त्वामुद्दिश्य कृतानि वै ॥ ॥१४॥

भक्त्यैकलभ्यः पुरुषोत्तमोऽसौ जगत्प्रसूतिस्थितिनाशहेतुः ।
अकिञ्चनोऽनन्यगतिश्शरण्य गृहाण मां क्लेशिनमम्बुजाक्ष ॥१५॥

धर्मार्थकाममोक्षेषु नेच्छा मम कदाचन ।
त्वत्पादपङ्कजास्वादजीवितं दीयतां मम ॥१६॥

कामये तावकत्वेन परिचर्यानुवर्तनम् ।
नित्यकिङ्करभावेन परिगृह्णीष्व मां विभो ॥१७॥

लोकं वैकुण्ठनामानं दिव्यं षाड्गुण्यसंयुतम् ।
अवैष्णवानामप्राप्यं गुणत्रयविवर्जितम् ॥१८॥

नित्यसिद्धैस्समाकीर्णं तन्मयैः पाञ्चकालिकैः ।
सभाप्रासादसंयुक्तं वनैश्चोपवनैर्युतम् ॥१९॥

वापीकूपतटाकैश्च वृक्षषण्डैस्सुमण्डितम् ।
अप्राकृतं सुरैर्वन्द्यमयुतार्कसमप्रभम् ॥२०॥

प्रकृष्टसत्व (राशिन्तं) सम्पन्नं कदा द्रक्ष्यामि चक्षुषा ।
क्रीडन्तं रमया सार्धं लीलाभूमिषु केशवम् ॥२१॥

मेघश्यामं विशालाक्षं कदा द्रक्ष्यामि चक्षुषा ।
उन्नसं चारुवदनं बिम्बोष्ठं शोभिताननम् ॥२२॥

विशालवक्षसं श्रीशं कम्बुग्रीवं जगद्गुरुम् ।
आजानुबाहुपरिघमुन्नतांसं मधुद्विषम् ॥२३॥

विशालनिम्ननाभिं तमापीनजघनं हरिम् ।
करभोरुं श्रियः कान्तं कदा द्रक्ष्यामि चक्षुषा ॥२४॥

शङ्खचक्रगदापद्मैरङ्कितं पादपङ्कजम् ।
शरच्चन्द्रशताक्रान्तनखराजिविराजितम् ॥२५॥

सुरासुरैर्वन्द्यमानमृषिभिर्वन्दितं सदा ।
कदा वा देव मूर्धानं मामकं मण्डयिष्यति ॥२६॥

कदा गम्भीरया वाचा श्रिया युक्तो जगत्पतिः ।
चामरव्यग्रहस्तं मामेवं कुर्विति वक्ष्यति ॥२७॥

कदाहं राजराजेन गणनाथेन चोदितः ।
चरेयं भगवत्पादपरिचर्यानुवृत्तिषु ॥२८॥

शान्ताय च विशुद्धाय तेजसे परमात्मने ।
नमो भगवते विष्णो वासुदेवामितद्युते ॥२९॥

नमस्सर्वगुणातीत षड्गुणायादिवेधसे ।
सत्यज्ञानानन्तगुण ब्रह्मणे परमात्मने ॥३०॥

चतुःपञ्चनवव्यूहदशद्वादशमूर्तये ।
नमस्ते वासुदेवाय ब्रह्मणे चतुरात्मने ॥३१॥

मनोऽनन्ताय विश्वाय विश्वातीताय चक्रिणे ।
नमस्ते पञ्चकालज्ञ पञ्चकालपरायण ॥३२॥

पञ्चकालैकमनसां त्वमेव गतिरव्ययः ।
परे व्योम्नि स्थितं देवं निरवद्यं निरञ्जनम् ॥३३॥

अप्रमेयमजं विष्णुमब्जनाभं सुरेश्वरम् ।
वागतीतं परं शान्तं शरणं त्वां गतोऽस्म्यहम् ॥३४॥
धुर्यं द्वन्द्वातिरिक्तं त्वां कौस्तुभोद्भासिवक्षसम् ।
विश्वरूपं विशालाक्षं कदा द्रक्ष्यामि चक्षुषा ॥३५॥
मोक्षं सालोक्यसारूप्यं प्रार्थये न कदाचन ।
इच्छाम्यहं महाबाहो सायुज्यं तव सुव्रत ॥३६॥
सकलावरणातीत किङ्करोऽस्मि तवानघ ।
पुनः पुनः किङ्करोऽस्मि तवाहं पुरुषोत्तम ॥३७॥
आसनाद्यनुयागान्तमर्चनं यन्मया कृतम् ।
भोगहीनं क्रियाहीनं मन्त्रहीनमभक्तिकम् ॥३८॥
तत्सर्वं क्षम्यतां देव दीनं मामात्मसात्कुरु ।
इति स्तोत्रेण देवेशं स्तुत्वा मधुनिघातिनम् ॥३९॥
यागावसानसमये देवदेवस्य चक्रिणः ।
नित्यकिङ्करभावेन स्वात्मानं विनिवेदयन् ॥४०॥

तृतीयभागः.

जितं ते पुण्डरीकाक्ष नमस्ते विश्वभावन ।
नमस्तेऽस्तु हृषीकेश महापुरुष पूर्वज ॥१॥
विज्ञापनमिदं देव शृणु त्वं पुरुषोत्तम ।
नरनारायणाभ्यां च श्वेतद्वीपनिवासिभिः ॥२॥
नारदाद्यैर्मुनिगणैस्सनकाद्यैश्च योगिभिः ।
ब्रह्मेशाद्यैस्सुरगणैः पञ्चकालपरायणैः ॥३॥

पूज्यसे पुण्डरीकाक्ष दिव्यमन्त्रैर्महर्षिभिः ।
पाषण्डधर्मसङ्कीर्णे भगवद्भक्तिवर्जिते ॥४॥

कलौ जातोऽस्मि देवेश सर्वधर्मबहिष्कृते ।
कथं त्वामसमाचारः पापप्रसवभूरहम् ॥५॥

अर्चयामि दयासिन्धो पाहि मां शरणागतम् ।
तापत्रयदवाग्नौ मां दह्यमानं सदा विभो ॥६॥

त्राहि मां पुण्डरीकाक्ष केवलं कृपया तव ।
जन्ममृत्युजराव्याधि दुःखसन्तप्तदेहिनम् ॥७॥

पालयाशु दृशा देव तव कारुण्यगर्भया ।
इन्द्रियाणि मया जेतुमशक्यं पुरुषोत्तम ॥८॥

शरीरं मम देवेश व्याधिभिः परिपीडितम् ।
मनो मे पुण्डरीकाक्ष विषयानेव धावति ॥९॥

वाणी मम हृषीकेश मिथ्यापारुष्यदूषिता ।
एवं साधनहीनोऽहं किं करिष्यामि केशव ॥१०॥

रक्ष मां कृपया कृष्ण भवाब्धौ पतितं सदा ।
अपराधशतं चैव सहस्रमयुतं तथा ॥११॥

अर्बुदं चाप्यसङ्ख्येयं करुणाब्धे क्षमस्व मे ।
यच्चापराधं कृतवानज्ञानात्पुरुषोत्तम ॥१२॥

मद्भक्त इति देवेश तत्सर्वं क्षन्तुमर्हसि ।
अज्ञत्वादप्यशक्तत्वादालस्याद्दुष्टभावनात् ॥१३॥

कृतापराधं कृपणं क्षन्तुमर्हसि मां विभो ।
अपराधसहस्राणि क्रियन्तेऽहर्निशं मया ॥१४॥
तानि सर्वाणि मे देव क्षमस्व मधुसूदन ।
यज्जन्मनःप्रभृति मोहवशं गतेन नानापराधशतमाचरितं मयाते ।
अन्तर्बहिश्च सकलं तव पश्यतो मे क्षन्तुं त्वमर्हसि हरे करुणावशेन ॥
कर्मणा मनसा वाचा या चेष्टा मम नित्यशः ।
केशवाराधने सा स्याज्जन्मजन्मान्तरेष्वपि ॥१६॥

तुरीयभागः.

जितं ते पुण्डरीकाक्ष नमस्ते विश्वभावन ।
नमस्ते वासुदेवाय शन्तानन्तचिदात्मने ॥१॥
अध्यक्षाय स्वतन्त्राय निरपेक्षाय शासते ।
अच्युतायाविकाराय तेजसां निधये नमः ॥२॥
प्रधानपुरुषेशाय नमस्ते पुरुषोत्तम ।
क्लेशकर्माद्यसंस्पृष्ट पूर्णषाड्गुण्यमूर्तये ॥३॥
त्रिभिर्ज्ञानबलैश्वर्यवीर्यशक्त्यन्तरात्मने ।
त्रियुगाय नमस्तेऽस्तु नमस्ते चतुरात्मने ॥४॥
चतुःपञ्चनवव्यूह दशद्वादशमूर्तये ।
अनेकमूर्तये तुभ्यममूर्तायैकमूर्तये ॥५॥
नारायण नमस्तेऽस्तु पुण्डरीकायतेक्षण ।
सुभ्रुललाट सुनस सुस्मिताधरपल्लव ॥६॥

पीनवृत्तायतभुज श्रीवत्सकृतलक्षण ।
तनुमध्य विशालाक्ष पद्मनाभ नमोऽस्तु ते ॥७॥

विलासविक्रमाक्रान्तत्रैलोक्यचरणाम्बुज ।
नमस्ते पीतवसन स्फुरन्मकरकुण्डल ॥८॥

स्फुरत्किरीटकेयूर हारकौस्तुभभूषण ।
पञ्चायुध नमस्तेऽस्तु नमस्ते पाञ्चकालिक ॥९॥

पञ्चकालपरैकान्तियोगक्षेममहाप्रभो ।
नित्यज्ञानबलैश्वर्यभोगोपकरणाच्युत ॥१०॥

नमस्ते ब्रह्मरुद्रादि लोकयात्रापरिच्छद ।
जन्मप्रभृति दासोऽस्मि शिष्योऽस्मि तनयोऽस्मि ते ॥११॥

त्वं च स्वामी गुरुरात्मा पिता च मम माधव ।
अपि त्वां भगवन् ब्रह्मा शर्वश्शक्रो महर्षयः ॥१२॥

द्रष्टुं यष्टुमपि स्तोतुं न हि समर्तुमपीशते ।
तापत्रय महाग्राहभीषणे भवसागरे ॥१३॥

मज्जतां नाथ नौरेषा प्रणतिस्त्वत्पदार्पिता ।
अनाथाय जगन्नाथ शरण्यशरणार्थिने ॥१४॥

प्रसीद सीदते मह्यं नमस्ते भक्तवत्सल ।
मन्त्रहीनं क्रियाहीनं भक्तिहीनं यदर्चनम् ॥१५॥

तत्क्षन्तव्यं प्रपन्नानामपराधसहो ह्यसि ।
अज्ञानाद्यदिवा ज्ञानादशुभं यत्कृतं मया ॥१६॥

क्षन्तव्यं तदशेषेण दास्येन च गृहाणमाम् ।
सर्वेषु देशकालेषु सर्वावस्थासुचाच्युत ।
किङ्करोऽस्मि हृषीकेश भूयो भूयोऽस्मि किङ्करः ॥१७॥

पञ्चमभागः.

जितं ते पुण्डरीकाक्ष नमस्ते विश्वभावन ।
नमस्तेऽस्तु हृषीकेश महापुरुष पूर्वज ॥१॥

नमस्ते वासुदेवाय शान्तानन्ताजितात्मने ।
अजिताय नमस्तुभ्यं षाड्गुण्यनिधये नमः ॥२॥

महाविभूतिसंस्थाय नमस्ते पुरुषोत्तम ।
सहस्रशिरसे तुभ्यं सहस्रचरणाय ते ॥३॥

सहस्रबाहवे तुभ्यं सहस्रनयनाय ते ।
अमूर्ताय नमस्तुभ्यमेकमूर्ताय ते नमः ॥४॥

अनेकमूर्तये तुभ्यमक्षराय च ते नमः ।
व्यापिने वेदवेद्याय नमस्ते परमात्मने ॥५॥

चिन्मात्ररूपिणे तुभ्यं नमस्त्रय्यन्तमूर्तये ।
अणिष्ठाय स्थविष्ठाय महिष्ठाय च ते नमः ॥६॥

नेदिष्ठाय यविष्ठाय सर्वान्तर्यामिने नमः ।
वर्षिष्ठाय जविष्ठाय कनिष्ठाय च ते नमः ॥७॥

पञ्चात्मने नमस्तुभ्यं सर्वान्तर्यामिने नमः ।
कल्पनाक्रोडरूपाय सृष्टिस्थित्यन्तहेतवे ॥८॥

नमस्ते गुणरूपाय गुणरूपादिवर्तिने ।
व्यस्ताय च समस्ताय समस्तव्यस्तरूपिणे ॥९॥
आदिमध्यान्तशून्याय सत्वस्थाय नमो नमः ।
प्रणवप्रतिपाद्याय नमः प्रणवरूपिणे ॥१०॥
लोकयात्राप्रसिद्ध्यर्थं स्रष्टृब्रह्मादिरूपिणे ।
नमस्तुभ्यं नृसिंहादिमूर्तिभेदाय विष्णवे ॥११॥
विपाकैः कर्मभिः क्षोभैरस्पृष्टवपुषे नमः ।
नित्यसाधारणानेकलोकरक्षापरिच्छिदे ॥१२॥
सच्चिदानन्दरूपाय वरेण्याय नमो नमः ।
यजमानाय यज्ञाय यष्टव्याय नमो नमः ॥१३॥
इज्याफल नमस्तुभ्यं नम इज्यादिशीलिने ।
नमः परमहंसाय नमस्सत्वगुणाय च ॥१४॥
स्थिताय परमव्योम्नि भूयो भूयो नमो नमः ।
संसारविषयावर्तसङ्कुले च महाभये ॥१५॥
अपारे दुस्तरे गाधे पतितं कर्मभिस्स्वकैः ।
अनाथमतिगम्भीरं दयया परया हरे ॥१६॥
मामुद्धर दयासिन्धो सिन्धोरस्मात्सुदुस्तरात् ।
मन्त्रहीनं क्रियाहीनं भक्तिहीनं यदर्चितम् ॥१७॥
तत्सर्वं क्षम्यतां देव दीनं मामात्मसात्कुरु ।
नाहं हितं न जानामित्वां व्रजाम्येव केवलम् ॥१८॥

बुद्ध्यैवं नय गोविन्द मुक्त्युपायेन वर्त्मना ।
त्वमेव वेत्सि श्रेयो मे नेदमेतदितीति च ।
बुद्धियोगं च मे देहि येन त्वामुपयाम्यहम् ॥२०॥

षष्ठभागः.

जितं ते पुण्डरीकाक्ष नमस्ते विश्वभावन ।
नमस्तेऽस्तु हृषीकेश महापुरुष पूर्वज ॥१॥
श्रीमद्द्वारवतीनाथ वर्धतां विजयी भवान् ।
दिव्यं त्वदीयमैश्वर्यं निर्मर्यादविजृम्भितम् ॥२॥
देवीभूषायुधैर्नित्यैर्मुक्तैर्मोक्षैकलक्षणैः ।
सत्योत्तरैस्त्वदीयैश्च सङ्ख्याभिरसस्तव ॥३॥
प्राकारगोपुरवरप्रासादमणिमण्टपाः ।
शालिमुद्गतिलादीनां शाला शैलकुलोज्ज्वला ॥४॥
रत्नकाञ्चनकौशेयक्षौमक्रमुकशालिकाः ।
शय्यागृहाणि पर्यङ्कवर्यास्स्थूलासनानि च ॥५॥
कनत्कनकभृङ्गारपतद्ग्रहकळाचिकाः ।
छत्रचामरमुख्याश्च सन्तुनित्याः परिच्छदाः ॥६॥
अस्तु निस्तुलमव्यग्रं नित्यमभ्यर्चनं तव ।
पक्षे पक्षे विजृम्भन्तां मासि मासि महोत्सवाः ॥७॥
मणिकाञ्चनचित्राणि भूषणान्यम्बराणि च ।
काश्मीरसारकस्तूरि कर्पूराद्यनुलेपनम् ॥८॥

कोमळानिच दामानि कौसुमैस्सौरभोद्गमैः ।
धूपाः कर्पूरदीपाश्च सन्तु नित्याः परिच्छदाः ॥९॥
नृत्तगीतयुतं वाद्यं नित्यमत्र विवर्धताम् ।
श्रोत्रेषु नस्सुधाधाराः कल्पन्तां काहळस्वनाः ॥१०॥
कन्दमूलफलोदग्रं काले काले चतुर्विधम् ।
सूपापूपघृतक्षीरशर्करासहितं हविः ॥११॥
घनसारशिरोदग्रं क्रमुकाष्टदळान्वितम् ।
विमलानि च ताम्बूलदळानि स्वीकुरु प्रभो ॥१२॥
प्रीतिभीतियुतोभूयान्नित्यं परिजनस्तव ।
भक्तिमन्तोपभुंजन्तु पौरा जानपदैस्सह ॥१३॥
धरणीधनरत्नानि वितरन्तु चिरं तव ।
कैङ्कर्यमखिलं सर्वे कुर्वन्तु क्षोणिपालकाः ॥१४॥
प्रेमदिग्धदृशस्मेरं प्रेक्षमाणास्त्वदाननम् ।
महान्तस्सन्ततं सन्तो मङ्गळानि प्रयुंजताम् ॥१५॥
साममेवमवन्नित्यं पालयन् कुशलीभवान् ॥

॥ इति श्रीमति पाञ्चरात्रे जितंतस्तोत्रं संपूर्णम् ॥

## ॥ मुकुन्दमाला ॥

घुष्यते यस्य नगरे रंगयात्रा दिनेदिने ।
त महं शिरसा वंदे राजानं कुलशेखरम् ॥

**श्रीवल्लभेति वरदेति दयापरेति भक्तप्रियेति भवलुंठनकोविदेति ।**
**नाथेति नागशयनेति जगन्निवासेत्यालापनं प्रतिपदं कुरु मे मुकुन्द ॥**

जयतु जयतु देवो देवकीनन्दनोऽयं
जयतु जयतु कृष्णो वृष्णिवंशप्रदीपः ।
जयतु जयतु मेघश्यामलः कोमलाङ्गो
जयतु जयतु पृथ्वीभारनाशो मुकुन्दः ॥२॥

मुकुन्द मूर्ध्ना प्रणिपत्य याचे भवन्तमेकान्तमियन्तमर्थम् ।
अविस्मृतिस्त्वच्चरणारविन्दे भवेभवे मेऽस्तु भवत्प्रसादात् ॥३॥

नाहं वन्दे तव चरणयोर्द्वन्द्वमद्वन्द्वहेतोः
कुम्भीपाकं गुरुमपि हरे नारकं नापनेतुम ।
रम्या रामा मृदुतनुलता नन्दने नापि रन्तुं
भावेभावे हृदयभवने भावयेयं भवन्तम ॥४॥

नास्था धर्मे न वसुनिचये नैव कामोपभोगे
यद्यद्भव्यं भवतु भगवन्पूर्वकर्मानुरूपम ।
एतत्प्रार्थ्यं मम बहुमतं जन्मजन्मांतरेऽपि
त्वत्पादाम्भोरुहयुगगता निश्चला भक्तिरस्तु ॥५॥

दिवि वा भुवि वा ममाऽस्तु वासो नरके वा नरकान्तक प्रकामम् ।
अवधीरितशारदारविंदौ चरणौ ते मरणेऽपि चिन्तयामि ॥६॥

कृष्ण त्वदीयपदपङ्कजपञ्जरान्तमद्यैव मे विशतु मानसराजहंसः ।
प्राणप्रयाणसमये कफवातपित्तैः कण्ठावरोधनविधौ स्मरणं कुतस्ते?॥

चिन्तयामि हरिमेव सन्ततं मन्दमन्दहसिताननाम्बुजम् ।
नन्दगोपतनयं परात्परं नारदादिमुनिबृन्दवन्दितम् ॥८॥

करचरणसरोजे कान्तिमन्नेत्रमीने
श्रममुषि भुजवीचिव्याकुलेऽगाधमार्गे ।
हरिसरसि विगाह्यापीय तेजोजलौघं
भवमरुपरिखिन्नः खेदमद्य त्यजामि ॥९॥

सरसिजनयने सशङ्खचक्रे मुरभिदि मा विरमस्व चित्त रन्तुम् ।
सुखतरमपरं न जातु जाने हरिचरणस्मरणामृतेन तुल्यम् ॥१०॥

माभीर्मन्द मनो विचिन्त्य बहुधा यामीश्चिरं यातना
नामी न प्रभवन्ति पापरिपवस्स्वामी ननु श्रीधरः ।
आलस्यं व्यपनीय भक्तिसुलभं ध्यायस्व नारायणं
लोकस्य व्यसनापनोदनकरो दासस्य किं न क्षमः ॥११॥

भवजलधिगतानां द्वन्द्ववाताहतानां
सुतदुहितृकलत्रत्राणभारार्दितानाम् ।
विषमविषयतोये मज्जतामप्लवानां
भवतु शरणमेको विष्णुपोतो नराणाम् ॥१२॥

भवजलधिमगाधं दुस्तरं निस्तरेयं
कथमहमिति चेतो मास्मगाः कातरत्वम् ।
सरसिजदृशि देवे तावकी भक्तिरेका
नरकभिदि निषण्णा तारयिष्यत्यवश्यम् ॥१३॥

तृष्णातोये मदनपवनोद्धूतमोहोर्मिमाले
दारावर्ते तनयसहजग्राहसंघाकुले च

संसाराख्ये महति जलधौ मज्जतां नस्त्रिधामन्
पादाम्भोजे वरद भवतो भक्तिनावं प्रयच्छ ॥१४॥

माद्राक्षं क्षीणपुण्यान्क्षणमपि भवतो भक्तिहीनान्पदाब्जे
माश्रौषं श्राव्यबद्धं तवचरितमपास्यान्यदाख्यानजातम् ।
मास्मार्षं माधव त्वामपि भुवनपते चेतसापह्नुवा-
नान्नाभूवं त्वत्सपर्याव्यतिकररहितो जन्मजन्मान्तरेऽपि ॥१५॥

जिह्वे कीर्तय केशवं मुररिपुं चेतो भज श्रीधरं
पाणिद्वन्द्व समर्चयाच्युतकथांश्रोत्रद्वय त्वं श्रुणु ।
कृष्णं लोकय लोचनद्वय हरेर्गच्छाङ्घ्रियुग्मालयं
जिघ्र घ्राण मुकुन्दपादतुलसीं मूर्धन्नमाधोक्षजम ॥१६॥

हे लोकाश्शृणुत प्रसूतिमरणव्याधेश्चिकित्सामिमां
योगज्ञास्समुदाहरन्ति मुनयो यां याज्ञवल्क्यादयः ।
अन्तर्ज्योतिरमेयमेकममृतं कृष्णाख्यमापीयतां
तत्पीतं परमौषधं वितनुते निर्वाणमात्यन्तिकम ॥१७॥

हे मर्त्याः परमं हितं शृणुत वो वक्ष्यामि संक्षेपतः-
स्संसारार्णवमापदूर्मिबहुळं सम्यक्प्रविश्य स्थिताः ।
नानाज्ञानमपास्य चेतसि नमो नारायणायेत्यमुं
मन्त्रं सप्रणवं प्रणामसहितं प्रावर्तयध्वं मुहुः ॥१८॥

पृथ्वीरेणुरणुः पयांसि कणिकाः फल्गुस्फुलिङ्गो लघु-
स्तेजो निश्वसनं मरुत्तनुतरं रन्ध्रं सुसूक्ष्मं नभः ।

क्षुद्रा रुद्रपितामहप्रभृतयः कीटास्समस्तास्सुराः
दृष्टे यत्र स तावको विजयते भूमावधूतावधिः ॥१९॥

बद्धेनाञ्जलिना नतेन शिरसा गात्रैस्सरोमोद्गमैः
कण्ठेन स्वरगद्गदेन नयनेनोदीर्णबाष्पाम्बुना ।
नित्यं त्वच्चरणारविंदयुगळध्यानामृतास्वादिना-
मस्माकं सरसीरुहाक्ष सततं संपद्यतां जीवितम् ॥२०॥

हे गोपालक हे कृपाजलनिधे हे सिंधुकन्यापते
हे कंसांतक हे गजेन्द्रकरुणापारीण हे माधव ।
हे रामानुज हे जगत्त्रयगुरो हे पुण्डरीकाक्ष मां
हे गोपीजननाथ पालय परं जानामि नत्वां विना ॥२१॥

भक्तापायभुजंगगारुडमणिस्त्रैलोक्यरक्षामणि-
र्गोपीलोचनचातकांबुदमणिस्सौंदर्यमुद्रामणिः
यः कांतामणिरुक्मिणीघनकुचद्वंद्वैकभूषामणिः
श्रेयो देवशिखामणिर्दिशतु नो गोपालचूडामणिः ॥२२॥

शत्रुच्छेदैकमन्त्रं सकलमुपनिषद्वाक्यसम्पूज्यमन्त्रं
संसारोत्तारमन्त्रं समुपचिततमसस्सङ्घनिर्याणमन्त्रम् ।
सत्वस्थैर्यैकमन्त्रं व्यसनभुजगसंदष्टसन्त्राणमन्त्रं
जिह्वे श्रीकृष्णमन्त्रं जप जप सततं जन्मसाफल्यमन्त्रम् ॥२३॥

व्यामोहप्रशमौषधं मुनिमनोवृत्तिप्रवृत्त्यौषधं
दैत्येन्द्रार्तिकरौषधं त्रिभुवने सञ्जीवनैकौषधम् ।

भक्तात्यन्तहितौषधं भवभयप्रध्वंसनैकौषधं
श्रेयःप्राप्तिकरौषधं पिब मनश्श्रीकृष्णदिव्यौषधम् ॥२४॥

आम्नायाभ्यसनान्यरण्यरुदितं वेदव्रतान्यन्वहं
मेदश्छेदफलानि पूर्तविधयस्सर्वे हुतं भस्मनि ।
तीर्थानामवगाहनानि च गजस्नानं विना यत्पद-
द्वन्द्वांभोरुहसंस्मृतिं विजयते देवस्स नारायणः ॥२५॥

श्रीमन्नाम प्रोच्य नारायणाख्यं के न प्रापुर्वाञ्छितं पापिनोऽपि ।
हा नः पूर्वं वाक्प्रवृत्ता न तस्मिंस्तेन प्राप्तं गर्भवासादिदुःखम् ॥

मज्जन्मनः फलमिदं मधुकैटभारे मत्प्रार्थनीयमदनुग्रह एष एव ।
त्वद्भृत्यभृत्यपरिचारकभृत्यभृत्यभृत्यस्य भृत्य इति मां स्मर लोकनाथ ॥

नाथे नः पुरुषोत्तमे त्रिजगतामेकाधिपे चेतसा
सेव्ये स्वस्य पदस्य दातरि सुरे नारायणेतिष्ठति ।
यं कञ्चित्पुरुषाधमं कतिपयग्रामेशमल्पार्थदं
सेवायै मृगयामहे नरमहो मूका वराका वयम ॥२८॥

मदन परिहर स्थितिं मदीये मनसि मुकुन्दपदारविन्दधाम्नि ।
हरनयनकृशानुना कृशोऽसि स्मरसि न चक्रपराक्रमं मुरारेः ॥

तत्वं ब्रुवाणानि परं परस्मात् मधु क्षरन्तीव सतां फलानि ।
प्रावर्तय प्राञ्जलिरस्मि जिह्वे नामानि नारायणगोचराणि ॥३०॥

इदं शरीरं परिणामपेशलं पतत्यवश्यं श्लथसंधि जर्झरम् ।
किमौषधैः क्लिश्यसि मूढ दुर्मते निरामयं कृष्णरसायनं पिब ॥३१॥

दारा वाराकरवरसुता ते तनूजो विरिञ्चः
स्तोता वेदस्तव सुरगणो भृत्यवर्गः प्रसादः ।
मुक्तिर्माया जगदविकलं तावकी देवकी ते
माता मित्रं बलरिपुसुतस्त्वय्यतोऽन्यन्नजाने ॥३२॥

कृष्णो रक्षतु नो जगत्त्रयगुरुः कृष्णं नमस्याम्यहं
कृष्णेनामरशत्रवो विनिहताः कृष्णाय तस्मै नमः ।
कृष्णादेव समुत्थितं जगदिदं कृष्णस्य दासोऽस्म्यहं
कृष्णे तिष्ठति सर्वमेतदखिलं हेकृष्ण रक्षस्व माम् ॥३३॥

तत्वं प्रसीद भगवन्कुरु मय्यनाथे
विष्णो कृपां परमकारुणिकः किल त्वम् ।
संसारसागरनिमग्नमनंतदीन-
मुद्धर्तुमर्हसि हरे पुरुषोत्तमोऽसि ॥३४॥

नमामि नारायणपादपङ्कजं करोमि नारायणपूजनं सदा ।
वदामि नारायाणनाम निर्मलं स्मरामि नारायणतत्वमव्ययम् ॥३५॥

श्रीनाथ नारायण वासुदेव श्रीकृष्ण भक्तप्रिय चक्रपाणे ।
श्रीपद्मनाभाच्युत कैटभारे श्रीराम पद्माक्ष हरे मुरारे ॥३६॥

अनन्त वैकुण्ठ मुकुन्द कृष्ण गोविन्द दामोदर माधवेति ।
वक्तुं समर्थोऽपि न वक्ति कश्चि दहो जनानां व्यसनाभिमुख्यम् ॥

ध्यायन्ति ये विष्णुमनन्तमव्ययं हृत्पद्ममध्ये सततं व्यवस्थितम् ।
समाहितानां सतताभयप्रदं ते यान्ति सिद्धिं परमां च वैष्णवीम् ॥

क्षीरसागरतरङ्गशीकरासारतारकितचारुमूर्तये ।
भोगिभोगशयनीयशायिने माधवाय मधुविद्विषे नमः ॥३९॥

यस्य प्रियौ श्रुतिधरौ कविलोकवीरौ मित्रे द्विजन्मवरपद्मशरावभूताम् ।
तेनाम्बुजाक्षचरणाम्बुजषट्पदेन राज्ञा कृता कृतिरियं कुलशेखरेण ॥

॥ इति श्रीकुलशेखर विरचिता मुकुन्दमाला सम्पूर्णा ॥

---

## ॥ श्रीहरिमीडेस्तोत्रम् ॥

स्तोष्ये भक्त्या विष्णुमनादिं जगदादिं
यस्मिन्नेतत्संसृतिचक्रं भ्रमतीत्थम् ।
यस्मिन्दृष्टे नश्यति तत्संसृतिचक्रं
तं संसार ध्वान्तविनाशं हरिमीडे ॥१॥

यस्यैकांशादित्थमशेषं जगदेतत्प्रादुर्भूतं येन पिनद्धं पुनरित्थम् ।
येन व्याप्तं येन विबुद्धं सुखदुःखै स्तं संसार० ॥२॥

सर्वज्ञो यो यश्च हि सर्वस्सकलो यो
यश्चानन्दोऽनन्तगुणो यो गुणधामा ।
यश्चाव्यक्तो व्यस्तसमस्तस्सदसद्य स्तं संसार० ॥३॥

यस्मादन्यन्नास्त्यपि नैवं परमार्थं दृश्यादन्यो निर्विषयज्ञानमयत्वात् ।
ज्ञातृज्ञानज्ञेयविहीनोऽपि सदा ज्ञस्तं संसार० ॥४॥

आचार्येभ्यो लब्धसुसूक्ष्माऽच्युततत्त्वाः
वैराग्येणाऽभ्यासबलाच्चैव द्रढिम्ना ।
भक्त्यैकाग्र्यध्यानपरा यं विदुरीशं तं संसार० ॥५॥

प्राणानायम्यो मिति चित्तं हृदि रुध्वा
नान्यत्स्मृत्वा तत्पुनरत्रैव विलाप्य ।
क्षीणे चित्ते भादृशिरस्मीति विदुर्यं तं संसार० ॥६॥

यं ब्रह्माख्यं देवमनन्यं परिपूर्णं हृत्स्थं भक्तैर्लभ्यमजं सूक्ष्ममतर्क्यम् ।
ध्यात्वात्मस्थं ब्रह्मविदो यं विदुरीशं तं संसार० ॥७॥

मात्रातीतं स्वात्मविकासात्मविबोधं ज्ञेयातीतं ज्ञानमयं हृद्युपलभ्यम् ।
भावग्राह्यानन्दमनन्यं च विदुर्यं तं संसार० ॥८॥

यद्यद्वेद्यं वस्तु न तत्त्वं विषयाख्यं तत्तद्ब्रह्मैवेति विदित्वा तदहं च ।
ध्यायन्त्येवं यं सनकाद्या मुनयोऽजं तं संसार० ॥९॥

यद्यद्वेद्यं तत्तदहन्नेति विहाय स्वात्मज्योतिर्ज्ञानमयानन्द मवाप्य ।
तस्मिन्नस्मीत्यात्मविदो यं विदुरीशं तं संसार० ॥१०॥

हित्वा हित्वा दृश्यमशेषं सविकल्पं
मत्वा शिष्टं भादृशिमात्रं गगनाभम् ।
त्यक्त्वा देहं यं प्रविशन्त्यच्युतभक्तास्तं संसार० ॥११॥

सर्वत्रास्ते सर्वशरीरी न च सर्वः सर्वं वेत्त्येवेह न यं वेत्ति च सर्वः ।
सर्वत्रान्तर्यामितयेत्थं यममन्यस्तं संसार० ॥१२॥

सर्वं दृष्ट्वा स्वात्मनियुक्त्या जगदेत दृष्ट्वात्मानं चैव मजं सर्वजनेषु ।
सर्वात्मैकोऽस्मीति विदुर्यं जनहृत्स्थं तं संसार० ॥१३॥

सर्वत्रैकः पश्यति जिघ्रत्यथभुङ्क्ते
स्प्रष्टा श्रोता बुद्ध्यति चेत्याहुरिमं यम् ।
साक्षी चास्ते कर्तृषु पश्यन्निति चान्ये तं संसार० ॥१४॥

पश्यन्शृण्वन्नत्र विजानन्रसयन्सन्जिघ्रन्बिभ्रद्देहमिमं जीवतयेत्थम्।
इत्यात्मानं यं विदुरीशं विषयज्ञं तं संसार० ॥१५॥

जाग्रद्दृष्ट्वा स्थूलपदार्थानथ मायां
दृष्ट्वा स्वप्नेऽथापि सुषुप्तौ सुखनिद्राम्।
इत्यात्मानं वीक्ष्य मुदास्तेच तुरीये तं संसार० ॥१६॥

पश्यन्शुद्धोऽप्यक्षर एको गुणभेदा-
न्नानाकारान्स्फाटिकवद्भाति विचित्रः।
भिन्नश्छिन्नश्चायमजः कर्मफलैर्य स्तं संसार० ॥१७॥

ब्रह्मा विष्णूरुद्रहुताशौ रविचंद्रौ इंद्रो वायुर्यज्ञ इतीत्थं परिकल्प्य।
एकं संतं यं बहुधाहुर्मतिभेदात्तं संसार० ॥१८॥

सत्यं ज्ञानं शुद्धमनंतं व्यतिरिक्तं शांतं गूढं निष्कळमानंदमनन्यम्।
इत्याहादौ यं वरुणोऽसौ भृगवेऽजं तं संसार० ॥१९॥

कोशानतान्पचरसादीनतिहाय ब्रह्मास्मीति स्वात्मनि निश्चित्य दृशेस्थः।
पित्रादिष्टो वेदभृगुर्यं यजुरंते तं संसार० ॥२०॥

येनाविष्टो यस्य च शक्त्या यदधीनः
क्षेत्रज्ञोऽयं कारयिता जंतुषु कर्तुः।
कर्ता भोक्तात्मात्र हि चिच्छक्त्यधिरूढः तं संसार० ॥२१॥

सृष्ट्वा सर्वं स्वात्मतयैवेत्थमतर्क्यं
व्याप्याथांतः कृत्स्नमिदं सृष्टमशेषम्।
सच्च त्यच्चाभूत्परमात्मा स य एकः तं संसार० ॥२२॥

वेदांतैश्चाध्यात्मिकशास्त्रैश्च पुराणैः
शास्त्रैश्चान्यैस्सात्वततंत्रैश्च यमीशम् ।
दृष्ट्वाथांतश्चेतसि बुध्वा विविशुर्यं तं संसार० ॥२३॥

श्रद्धाभक्तिध्यानशमाद्यैर्यतमानै र्ज्ञातुं शक्यो देव इहैवाशु य ईशः ।
दुर्विज्ञेयो जन्मशतैश्चापि विना तैः तं संसार० ॥२४॥

यस्यातर्क्यं स्वात्मविभूतेः परमार्थं
सर्वं खल्वित्यत्र निरुक्तश्रुतिविद्भिः ।
तज्जातित्वादब्धितरंगाभ्रमभिन्नं तं संसार० ॥२५॥

दृष्ट्वा गीतास्वक्षरतत्त्वं विधिनाजं
भक्त्या गुर्व्यालब्धहृदिस्थं दृशिमात्रम् ।
ध्यत्वा तस्मिन्नस्म्यहमित्यत्र विदुर्यं तं संसार० ॥२६॥

क्षेत्रज्ञत्वं प्राप्य विभुः पञ्चमुखैर्यो
भुङ्क्तेऽजस्रं भोग्यपदार्थान् प्रकृतिस्थः ।
क्षेत्रे क्षेत्रेऽप्स्विंदुवदेको बहुधाऽस्ति तं संसार० ॥२७॥

युक्त्यालोड्य व्यासवचांस्यत्र हि लभ्यः
क्षेत्रक्षेत्रज्ञांतरविद्भिः पुरुषाख्यः ।
योऽसौ हंसस्सोऽस्म्यहमेवेतिविदुर्यं तं संसार० ॥२८॥

एकीकृत्यानेकशरीरस्तमिमं ज्ञं यं विज्ञायेहैव स एवाशु भवंति ।
यस्मिन्लीना नेह पुनर्जन्म लभंते तं संसार० ॥२९॥

द्वंद्वैकत्वं यच्च मधुब्राह्मणवाक्यैः कृत्वाशक्रोपासनमासाद्य विभूत्या ।

योऽसौ सोऽहं सोऽस्म्यहमेवेति विदुर्यं तं संसार० ॥३०॥

योऽयं देहे चेष्टयितान्तः करणथः सूर्ये चासौ तापयितासोऽस्म्यहमेव।
इत्यात्मैक्योपासनया यं विदुरीशं तं संसार० ॥३१॥

विज्ञानांशो यस्य सतश्शक्त्यधिरूढो
बुद्धिर्बुध्यत्यत्र बहिर्बोध्यपदार्थान्।
नैवान्तस्थं बुध्यति यं बोधयितारं तं संसार० ॥३२॥

कोऽयं देहे देव इतीत्थं सुविचार्य ज्ञाता श्रोतानन्दयिता चैष हि देवः।
इत्यालोच्य ज्ञतांश इहास्मीति विदुर्यं तं संसार० ॥३३॥

को ह्येवान्यादात्मनि न स्यादयिमेष-
ह्येवानन्दः प्राणिति चापानितिचेति।
इत्यस्तित्वं वक्त्युपपत्त्या श्रुतिरेषा तं संसार० ॥३४॥

प्राणोवाहं वाक् श्रवणादीनि मनो वा
बुद्धिर्वाहं व्यस्त उताहोपि समस्तः।
इत्यालोच्य ज्ञप्तिरिहास्मीति विदुर्यं तं संसार० ॥३५॥

नाहं प्राणो नैव शरीरं न मनोऽहं नाहं बुद्धिर्नाहमहङ्कारधियौ च।
यः प्रज्ञांशस्सोऽस्म्यहमेवेति विदुर्यं तं संसार० ॥३६॥

सत्तामात्रं केवलविज्ञानमजंसत् सूक्ष्मं नित्यं तत्त्वमसीत्यात्मसुताय।
साम्नामन्ते प्राह पिता यं विभुमाद्यं तं संसार० ॥३७॥

मूर्तामूर्ते पूर्वमपोह्याथ समाधौ दृश्यं सर्वं नेति च नेतीति विहाय।
चैतन्यांशे स्वात्मनि सन्तं च विदुर्यं तं संसार० ॥३८॥

ओतं प्रोतं यत्र च सर्वं गगनान्तं योऽस्थूलानण्वादिषु सिद्धोऽक्षरसंज्ञः ।
ज्ञातातोन्यो नेत्युपलभ्यो न च वेद्य स्तं संसार० ॥३९॥

तावत्सर्वं सत्यमिवाभाति यदेत-
द्यावत्सोऽस्मीत्यात्मनि यो ज्ञो न हि दृष्टः ।
दृष्टे तस्मिन् सर्वमसत्यं भवतीदं तं संसार० ॥४०॥

रागामुक्तं लोहयुतं हेम यथाग्नौ योगाष्टाङ्गैरुज्ज्वलितज्ञानमयाग्नौ ।
दग्ध्वात्मानं ज्ञं परिशिष्टं च विदुर्यं तं संसार० ॥४१॥

यं विज्ञानज्योतिषमाद्यंसुविभान्तं हृद्यर्केन्द्वग्न्योकसमीड्यं तटिदाभम् ।
भक्त्याराध्येहैवविशंत्यात्मनि सन्तं तं संसार० ॥४२॥

पायाद्भक्तं स्वात्मनिसन्तं पुरुषं या
भक्त्या स्तौतीत्याङ्गिरसं विष्णुरिमं माम् ।
इत्यात्मानं स्वात्मनि संहृत्य सदैकः तं संसार० ॥४३॥

इत्थं स्तोत्रं भक्तजनेड्यं भवभीति-
ध्वान्तार्काभं भगवत्पादीयमिदं यः ।
विष्णोर्लोकं पठति श्रुणोति व्रजति ज्ञो
ज्ञानं गेयं स्वात्मनि चाप्नोति मनुष्यः ॥४४॥

इति श्रीमत्परमहंस परिव्राजकाचार्य श्रीमच्छङ्कराचार्य सद्गुरुविरचितं

॥ हरिमीडेस्तोत्रं संपूर्णम् ॥

## ॥ आचार्यकृतषट्पदी ॥

अविनयमपनय विष्णो दमय मनः शमय विषयमृगतृष्णाम् ।
भूतदयां विस्तारय तारय संसारसागरतः ॥१॥

दिव्यधुनीमकरन्दे परिमलपरिभोगसच्चिदानन्दे ।
श्रीपतिपदारविन्दे भवभयखेदच्छिदे वन्दे ॥२॥

सत्यपि भेदापगमे नाथ तवाहं न मामकीनस्त्वम् ।
सामुद्रो हि तरङ्गः क्वचन समुद्रो न तारङ्गः ॥३॥

उद्धृतनग नगभिदनुज दनुजकुलामित्र मित्रशशिदृष्टे ।
दृष्टे भवति प्रभवति न भवति किं भवतिरस्कारः ॥४॥

मत्स्यादिभिरवतारैरवतारवताऽवता सदा वसुधाम् ।
परमेश्वर परिपाल्यो भवता भवतापभीतोऽहम् ॥५॥

दामोदर गुणमन्दिर सुन्दरवदनारविन्द गोविन्द ।
भवजलधिमथनमन्दर परमं दरमपनय त्वं मे ॥६॥

नारायण करुणामय शरणं करवाणि तावकौ चरणौ ।
इतिषट्पदी मदीये वदनसरोजे सदा वसतु ॥७॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीमच्छङ्करभगवतः कृतौ
॥ षट्पदीस्तोत्रं संपूर्णम् ॥

## ॥ विष्णुपादादिकेशान्तवर्णनस्तोत्रम् ॥

लक्ष्मीभर्तुर्भुजाग्रे कृतवसति सितं यस्य रूपं विशालं
नीलाद्रेस्तुङ्गशृङ्गस्थितमिव रजनीनाथबिम्बं विभाति ।
पायान्नः पाञ्चजन्यः स सकलदितिजत्रासनैः
पूरयन्स्वैर्निध्वानैर्नीरदौघध्वनिपरिभवदैरम्बरं कंबुराजः ॥१॥

आहुर्यस्य स्वरूपं क्षणमुखमखिलं सूरयः कालमेतं
ध्वान्तस्यैकान्तमन्तं यदपि च परमं सर्वधाम्नां च धाम ।
चक्रं तच्चक्रपाणेर्दितिजतनुगलद्रक्तधाराक्तधारं
शश्वन्नो विश्ववन्द्यं वितरतु विपुलं शर्म घर्मांशुशोभम् ॥२॥

अव्यान्निर्घातघोरो हरिभुजपवनामर्शनाध्मातमूर्ते-
रस्मान्विस्मेरनेत्रत्रिदशनुतिवचःसाधुकारैः सुतारः ।
सर्वं संहर्तुमिच्छोररिकुलभुवनं स्फारविस्फारनादः
संयत्कल्पान्तसिन्धौ शरसलिलघटावामुचः कार्मुकस्य ॥३॥

जीमूतश्यामभासा मुहुरपि भगवद्बाहुना मोहयन्ती
युद्धेषूद्धूयमाना झटिति तडिदिवालक्ष्यते यस्य मूर्तिः ।
सोऽसिस्त्रासाकुलाक्षत्रिदशरिपुवपुः शोणितास्वाददृप्तो
नित्यानन्दाय भूयान्मधुमथनमनोनन्दको नन्दको नः ॥४॥

कम्राकारा मुरारेः करकमलतलेनानुरागाद्गृहीता
सम्यग्वृत्ता स्थिताग्रे सपदि न सहिते दर्शनं या परेषाम् ।
राजन्ती दैत्यजीवासवमदमुदिता लोहितालेपनार्द्रा
कामं दीप्तांशुकान्ता प्रदिशतु दयितेवास्य कौमोदकी नः ॥५॥

यो विश्वप्राणभूतस्तनुरपि च हरेर्यान केतुस्वरूपो
यं संचिन्त्यैव सद्यः स्वयमुरगवधूवर्गगर्भाः पतंति।
चंचच्चण्डोरुतुण्डत्रुटितफणिवसारक्तपङ्काङ्कितास्यं
वंदे छंदोमयं तं खगपतिममलस्वर्णवर्णं सुपर्णम् ॥६॥

विष्णोर्विश्वेश्वरस्य प्रवरशयनकृत्सर्वलोकैकधर्ता
सोऽनन्तः सर्वभूतः पृथुविमलयशाः सर्ववेदैश्च वेद्यः।
पाता विश्वस्य शश्वत्सकलसुररिपुध्वंसनः पापहन्ता सर्वज्ञः
सर्वसाक्षी सकलविषभयात्पातु भोगीश्वरो नः ॥७॥

वाग्भूगौर्यादिभेदैर्विदुरिह मुनयो यां यदीयैश्च पुंसां
कारुण्यार्द्रैः कटाक्षैः सकृदपि पतितैः संपदस्स्युः समग्राः।
कुन्देन्दुस्वच्छमंदस्मितमधुरमुखांभोरुहां सुंदराङ्गीं
वन्दे वंद्यामशेषैरपि मुरभिदुरोमंदिरामिन्दिरां ताम् ॥८॥

या सूते सत्त्वजालं सकलमपि सदा संनिधानेन पुंसो
धत्ते या सत्त्वयोगाच्चरमचरमिदं भूतये भूतजातम्।
धात्रीं स्थात्रीं जनित्रीं प्रकृतिमविकृतिं विश्वशक्तिं विधात्रीं
विष्णोर्विश्वात्मनस्तां विपुलगुणमयीं प्राणनाथां प्रणौमि ॥९॥

येभ्योऽसूयद्भिरुच्चैः सपदि पदमुरु त्यज्यते दैत्यवर्गै-
र्येभ्यो धर्तुं च मूर्ध्ना स्पृहयति सततं सर्वगीर्वाणवर्गः।
नित्यं निर्मूलयेयुर्निचिततरममी भक्तिनिघ्नात्मनां नः
पद्माक्षस्यांघ्रिपद्मद्वयतलनिलयाः पांसवः पापपङ्कम् ॥१०॥

रेखा लेखाभिवन्द्याश्चरणतलगताश्चक्रमत्स्यादिरूपाः
स्निग्धाः सूक्ष्माः सुजाता मृदुललिततरक्षामसूत्रायमाणाः ।
दद्युर्नो मङ्गलानि भ्रमरभरजुषा कोमलेनाब्जजायाः
कम्रेणाम्रेड्यमानाः किसलयमृदुना पाणिना चक्रपाणेः ॥११॥

यस्मादाक्रामतो द्यां गरुडमणिशिलाकेतुदंडायमाना-
दाश्च्योतन्ती बभासे सुरसरिदमला वैजयन्तीव कान्ता ।
भूमिष्ठो यस्तथान्यो भुवनगृहबृहत्स्तंभशोभां दधानः
पातामेतौ पयोजोदरललिततलौ पङ्कजाक्षस्य पादौ ॥१२॥

आक्रामद्भ्यां त्रिलोकीमसुरसुरपती तत्क्षणादेव नीतौ
याभ्यां वैरोचनीन्द्रौ युगपदपि विपत्संपदोरेकधाम ।
ताभ्यां ताम्रोदराभ्यां मुहुरहमजितस्याञ्चिताभ्यामुभाभ्यां
प्राज्यैश्वर्यप्रदाभ्यां प्रणतिमुपगतः पादपङ्केरुहाभ्याम् ॥१३॥

येभ्यो वर्णश्चतुर्थश्चरमत उदभूदादिसर्गे प्रजानां
साहस्री चापि संख्या प्रकटमभिहिता सर्ववेदेषु येषाम् ।
व्याप्ता विश्वंभरा यैरतिविततनोर्विश्वमूर्तेर्विराजो
विष्णोस्तेभ्यो महद्भ्यः सततमपि नमोऽस्त्वंघ्रिपङ्केरुहेभ्यः ॥१४॥

विष्णोः पादद्वयाग्रे विमलनखमणिभ्राजिता राजते या
राजीवस्येव रम्या हिमजलकणिकालङ्कृताग्रा दलाली ।
अस्माकं विस्मयार्हाण्यखिलमुनिजनप्रार्थनीयानि सेयं
दद्यादाद्यानवद्या ततिरतिरुचिरा मङ्गलान्यङ्गुलीनाम् ॥१५॥

यस्यां दृष्ट्वामलायां प्रतिकृतिममराः स्वां भवन्त्यानमन्तः
सेंद्राः सांद्रीकृतेर्ष्याः स्वपरसुरकुलाशङ्कया कङ्कवन्तः ।
सा सद्यः सातिरेकां सकलसुखकरीं संपदं साधयेन्न-
श्चंचच्चावँशुचक्राचरणनलिनयोश्चक्रपाणेर्नखाली ॥१६॥

पादाम्भोजन्मसेवासमवनतसुरव्रातभास्वत्किरीट-
प्रत्युप्तोच्चावचाश्मप्रवरकरगणौश्चित्रितं यद्विभाति ।
नम्राङ्गाणां हरेर्नो हरिदुपलमहाकूर्मसौन्दर्यहारि-
च्छायं श्रेयःप्रदायि प्रपदयुगमिदं प्रापयेत्पापमन्तम् ॥१७॥

श्रीमत्यौ चारुवृत्ते करपरिमलनानन्दहृष्टे रमायाः
सौंदर्याढ्येंद्रनीलोपलरचितमहादण्डयोः कान्तिचौरे ।
सूरींद्रैः स्तूयमाने सुरकुलसुखदे सूदितारातिसङ्घे
जङ्घे नारायणीये मुहुरपि जयतामस्मदंहो हरन्त्यौ ॥१८॥

सम्यक् साह्यं विधातुं सममपि सततं जङ्घयोः खिन्नयोर्ये
भारीभूतोरुदण्डद्वयभरणकृतोत्तंभभावं भजेते ।
चित्तादर्शं निधातुं महितमिव सतां ते समुद्गायमाने
वृत्ताकारे विधत्तां हृदि मुदमजितस्यानिशं जानुनी नः ॥१९॥

देवो भीतिं विधातुः सपदि विदधतौ कैटभाख्यं मधुं या-
वारोप्यारूढगर्वावधिजलधि ययोरेव दैत्यो जघान ।
वृत्तावन्योन्यतुल्यौ चतुरमुपचयं बिभ्रतावभ्रनीला-
वूरूचारू हरेस्तौ मुदमतिशयनीं मानसे नो विधत्ताम् ॥२०॥

पीतेन द्योतते यच्चतुरपरिहितेनांबरेणात्युदारं
जातालङ्कारयोगं जलमिव जलधेर्वाडवाग्निप्रभाभिः ।
एतत्पातित्युदाम्नो जघनमतिघनादेनसो माननीयं
सातत्येनैव चेतो विषयमवतरत्पातु पीतांबरस्य ॥२१॥

यस्या दाम्न्या त्रिधाम्नो जघनकलितया भ्राजतेऽगं यथाब्धे-
र्मध्यस्थो मन्दराद्रिर्भुजगपतिमहाभोगसन्नद्धमध्यः ।
काञ्ची सा काञ्चनाभा मणिवरकिरणैरुल्लसद्भिः प्रदीप्ता
कल्यां कल्याणदात्रीं मम मतिमनिशं कम्ररूपां करोतु ॥२२॥

उन्नम्रं कम्रमुच्चैरुपाचितमुदभूद्यत्र पत्रैर्विचित्रैः
पूर्वं गीर्वाणपूज्यं कमलजमधुपस्यास्पदं तत्पयोजम् ।
तस्मिन्नीलाश्मनीलैस्तरलरुचिजलैः पूरिते केलिबुद्ध्या
नालीकाक्षस्य नाभीसरसि वसतु नश्चित्तहंसाश्चिराय ॥२३॥

पातालं यस्य नालं वलयमपि दिशां पत्रपंक्तिं नगेंद्रा-
न्विद्वांसः केसरालीर्विदुरिह विपुलां कर्णिकां स्वर्णशैलम् ।
भूयाद्गायस्त्वयंभूर्मधुकरभवनं भूमयं कामदं नो
नालीकं नाभिपद्माकरभवमुरु तन्नागशय्यस्य शौरेः ॥२४॥

कान्त्यंभःपूरपूर्णे लसदसितवलीभङ्गभास्वत्तरङ्गे
गंभीराकारनाभीचतुरतरमहावर्तशोभिन्युदारे ।
क्रीडत्वानद्धहेमोदरनहनमहाबाडवाग्निप्रभाढ्ये
कामं दामोदरीयोदरसलिलनिधौ चित्तमत्स्यश्चिरं नः ॥२५॥

नाभीनालीकमूलादधिकपरिमलोन्मोहितानामलीनां
माला नीलेव यान्ती स्फुरति रुचिमती वक्षपद्मोन्मुखी या ।
रम्या सा रोमराजिर्महितरुचिमती मध्यभागस्य विष्णो-
श्चित्तस्था माविरंसीश्चिरतरमुचितां साधयन्ती श्रियं नः ॥२६॥

आदौ कल्पस्य यस्मात्प्रभवति नियतं विश्वमेतद्विकल्पैः
कल्पान्ते यस्य चान्तः प्रविशति सकलं स्थावरं जङ्गमं च ।
अत्यन्ताचिन्त्यमूर्तेश्चिरतरमजितस्यान्तरिक्षस्वरूपे
तस्मिन्नस्माकमन्तःकरणमतिमुदा क्रीडतात्क्रोडभागे ॥२७॥

संस्तीर्णं कौस्तुभांशुप्रसरकिसलयैर्मुग्धमुक्ताफलाढ्यं
श्रीवत्सोल्लासि फुल्लप्रतिनववनमालांशुराजद्भुजान्तम् ।
वक्षः श्रीवृक्षकान्तं मधुकरनिकरश्यामलं शार्ङ्गपाणेः
संसाराध्वश्रमार्तैरुपवनमिव यत्सेवितं तत्प्रपद्ये ॥२८॥

कान्तं वक्षो नितान्तं विदधदिव गलं कालिमा कालशत्रो-
रिंदोर्बिंबं यथाङ्को मधुप इव तरोर्मञ्जरीं राजते यः ।
श्रीमान्नित्यं विधेयादविरलमिलितः कौस्तुभश्रीप्रतानैः
श्रीवत्सः श्रीपतेः स श्रिय इव दयितो वत्स उच्चैः श्रियं नः ॥२९॥

संभूयांभोधिमध्यात्सपदि सहजया यः श्रिया सन्निधत्ते
नीले नारायणोरःस्थलगगनतले हारतारोपसेव्ये ।
आशाः सर्वाः प्रकाशा विदधदपिदधच्चात्मभासान्यतेजां-
स्याश्चर्यस्याकरो नो द्युमणिरिव मणिः कौस्तुभः सोऽस्तु भूत्यै ॥

या वायावानुकूल्यात्सरति मणिरुचा भासमाना समाना
साकं सा कंपमंसे वसति विदधती वासुभद्रं सुभद्रम् ।
सारं सारङ्गसङ्घैर्मुखरितकुसुमा मेचकान्ता च कान्ता
माला मालालितास्मान्न विरमतु सुखैर्योजयन्ती जयन्ती ॥३१॥

हारस्योरुप्रभाभिः प्रतिनववनमालांशुभिः प्रांशुरूपैः
श्रीभिश्चाप्यङ्गदानां शबलितरुचिभिर्निष्कभाभिश्च भाति ।
बाहुल्येनैव बद्धाञ्जलिपुटमजितस्याभियाचामहे त-
द्दुन्धार्तिं बाधतां नो बहुविहितकरीं बन्धुरं बाहुमूलम् ॥३२॥

विश्वत्राणैकदीक्षास्तदनुगुणगणक्षत्रनिर्माणदक्षाः
कर्तारो दुर्निरूपाः स्फुटगुरुयशसां कर्मणामद्भुतानाम् ।
शार्ङ्गं बाणं कृपाणं फलकमरिगदे पद्मशङ्खौ सहस्रं
बिभ्राणाः वस्रजालं मम ददतु हरेर्बाहवो मोहहानिम् ॥३३॥

कण्ठाकल्पोद्गतैर्यैः कनकमयलसत्कुण्डलोत्थैरुदारै-
रुद्द्योतैः कौस्तुभस्याप्युरुभिरुपचितश्चित्रवर्णो विभाति ।
कण्ठाश्लेषे रमायाः करवलयपदैर्मुद्रिते भद्ररूपे
वैकुण्ठीयेऽत्र कण्ठे वसतु मम मतिः कुण्ठभावं विहाय ॥३४॥

पद्मानन्दप्रदाता परिलसदरुणश्रीपरीताग्रभागः
काले काले च कम्बुप्रवरशशधरापूरणे यः प्रवीणः ।
वक्त्राकाशान्तरस्थस्तिरयति नितरां दन्ततारौघशोभां
श्रीभर्तुर्दन्तवासोद्युमणिरघतमोनाशनायास्त्वसौ नः ॥३५॥

नित्यं स्नेहातिरेकान्निजकमितुरलं विप्रयोगाक्षमा या
वक्षेंदोरन्तराले कृतवसतिरिवाभाति नक्षत्रराजिः ।
लक्ष्मीकान्तस्य कान्ताकृतिरतिविलसन्मुग्धमुक्ताफलश्री-
र्दन्ताली संततं सा नतिनुतिनिरतान्रक्षतादक्षता नः ॥३६॥

ब्रह्मन्ब्रह्मण्यजिह्मां मतिमपि कुरुषे देव संभावये त्वां
शंभो शक्रत्रिलोकीमवसि किममरैर्नारदाद्याः सुखं वः ।
इत्थं सेवावनम्रं सुरमुनिनिकरं वीक्ष्य विष्णोः प्रसन्न
स्यास्येंदोरास्रवन्ती वरवचनसुधा ह्लादयेन्मानसं नः ॥३७॥

कर्णस्थस्वर्णकम्रोज्ज्वलमकरमहाकुण्डलप्रोतदीप्य-
न्माणिक्यश्रीप्रतानैः परिमिलितमलिश्यामलं कोमलं यत् ।
प्रोद्यत्सूर्यांशुराजन्मरकतमुकुराकारचोरं मुरारे-
र्गाढामागामिनीं नो गमयतु विपदं गण्डयोर्मण्डलं तत् ॥३८॥

वक्त्रांभोजे लसंतं मुहुरधरमणिं पक्वबिंबाभिरामं
दृष्ट्वा दष्टुं शुकस्य स्फुटमवतरतस्तुण्डदण्डायते यः ।
घोणः शोणीकृतात्मा श्रवणयुगलसत्कुण्डलोऽस्तैर्मुरारेः
प्राणाख्यस्यानिलस्य प्रसरणसरणिः प्राणदानाय नः स्तात् ॥३९॥

दिक्कालौ वेदयन्तौ जगति मुहुरिमौ संचरन्तौ रवीन्दू
त्रैलोक्यालोकदीपावभिदधति ययोरेव रूपं मुनींद्राः ।
अस्मानब्जप्रभे ते प्रचुरतरकृपानिर्भरं प्रेक्षमाणे
पातामाताम्रशुक्लासितरुचिरुचिरे पद्मनेत्रस्य नेत्रे ॥४०॥

लक्ष्माकारालकालिस्फुरदलिकशशाङ्कार्धसंदर्शमील-
न्नेत्रांभोजप्रबोधोत्सुकनिभृततरालीनभृङ्गच्छटाभे ।
लक्ष्मीनाथस्य लक्षीकृतविबुधगणापाङ्गबाणासनार्ध-
च्छाये नो भूरिभूतप्रसवकुशलते भ्रूलते पालयेताम् ॥४१॥

पातात्पातालपातत्पतगपतिगतेर्भ्रूयुगं भुग्नमध्यं
येनेषच्चालितेन स्वपदनियमिताः सासुरा देवसङ्घाः ।
नृत्यल्लालाटरङ्गे रजनिकरतनोरर्धखण्डावदाते
कालव्यालद्वयं वा विलसति समया बालिकामातरं नः ॥४२॥

रूक्षस्मारेक्षुचापच्युतशरनिकरक्षीणलक्ष्मीकटाक्ष-
प्रोत्फुल्लत्पद्ममालाविलसितमहितस्फाटिकेशानलिङ्गम् ।
भूयाद्भूयो विभूत्यै मम भुवनपतेर्भ्रूलताद्वन्द्वमध्या-
दुत्थं तत्पुण्ड्रमूर्ध्वं जनिमरणतमःखण्डनं मण्डनं च ॥४३॥

पीठीभूतालकान्तेकृतमुकुटमहादेवलिङ्गप्रतिष्ठे
लालाटे नाट्यरङ्गे विकटतरतटे कैटभारेश्चिराय ।
प्रोद्घाट्यैवात्मतन्द्रीप्रकटपटकुटीं प्रस्फुरन्तीं स्फुटाङ्गं-
पट्वीयं भावनाख्यां चटुलमतिनटीनाटिकां नाटयेन्नः ॥४४॥

मालालीवालिधाम्नः कुवलयकलिता श्रीपतेः कुन्तलाली
कालिन्द्यारुह्य मूर्ध्नो गलति हरशिरःस्वर्धुनीस्पर्धया नु ।
राहुर्वा याति वक्त्रं सकलशशिकलाभ्रान्तिलोलान्तरात्मा
लोकैरालोच्यते या प्रदिशतु सकलैः साखिलं मङ्गलं नः ॥४५॥

सुप्ताकाराः प्रसुप्ते भगवति विबुधैरप्यदृष्टस्वरूपा
व्याप्तव्योमान्तरालास्तरलमणिरुचारञ्जिताः स्पष्टभासः ।
देहच्छायोद्गमाभारिपुवपुरगुरुप्लोषरोषाग्निधूम्याः
केशाः केशिद्विषो नो विदधतु विपुलक्लेशपाशप्रणाशम् ॥४६॥

यत्र प्रत्युप्तरत्नप्रवरपरिलसद्भूरिरोचिःप्रतान-
स्फूर्त्या मूर्तिर्मुरारेर्द्युमणिशतचितव्योमवद्दुर्निरीक्ष्या ।
कुर्वत्पारेपयोधि ज्वलदकृश महाभास्वदौर्वाग्निशङ्कां
शश्वन्नः शर्म दिश्यात्कलिकलुषतमःपाटनं तत्किरीटम् ॥४७॥

भ्रांत्वा भ्रांत्वा यदन्तस्त्रिभुवनगुरुरप्यब्दकोटीरनेका
गन्तुं नांतं समर्थो भ्रमर इव पुनर्नाभिनालीकनालात् ।
उन्मज्जन्नूर्जितश्रीस्त्रिभुवनमपरं निर्ममे तत्सदृक्षं
देहांभोभिः स देयान्निरवधिरमृतं दैत्यविद्वेषिणो नः ॥४८॥

मत्स्यः कूर्मो वराहो नरहरिणपतिर्वामनो जामदग्न्यः
काकुत्स्थः कंसघाती मनसिजविजयो यश्च कल्की भविष्यन् ।
विष्णोरंशावतारा भुवनहितकरा धर्मसंस्थापनार्थाः
पायासुर्मां त एते गुरुतरकरुणाभारखिन्नाशया ये ॥४९॥

यस्माद्वाचो निवृत्ताः सममपि मनसा लक्षणामीक्षमाणाः
स्वार्थालाभात्परार्थव्यपगमकथनश्लाघिनो वेदवादाः ।
नित्यानन्दं स्वसंविन्निरवधिममृतं स्वांतसंक्रांतबिम्ब-
च्छायापत्यापि नित्यं सुखयति यमिनो यत्तदव्यान्महो नः ॥५०॥

आपादाद्वा च शीर्ष्णो वपुरिदमनघं वैष्णवं यः स चित्ते
धत्ते नित्यं निरस्ताखिलकलिकलुषे संततांतःप्रमोदः ।
जुह्वज्जिह्वाकृशानौ हरिचरितहविःस्तोत्रमन्त्रानुपाठै-
स्तत्पादांभोरुहाभ्यां सततमपि नमस्कुर्महे निर्मलाभ्याम् ॥५१॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्द भगवत्पूज्यपादशिष्यस्य श्रीमच्छङ्करभगवतः कृतौ
॥ विष्णुपादादिकेशान्तवर्णनस्तोत्रं सम्पूर्णम् ॥

---

## ॥ श्रीविष्णुभुजङ्गप्रयातस्तोत्रम् ॥

चिदंशं निर्मलं निर्विकल्पं निरीहं निराकारमोङ्कारगम्यम् ।
गुणातीतमव्यक्तमेकं तुरीयं परं ब्रह्म यं वेद तस्मै नमस्ते ॥१॥

विशुद्धं शिवं शान्तमाद्यन्तशून्यं जगज्जीवनं ज्योतिरानन्दरूपम् ।
अदिग्देशकालव्यवच्छेदनीयं त्रयी वक्ति यं वेद तस्मै नमस्ते ॥२॥

महायोगपीठे परि भ्राजमाने धरण्यादितत्त्वात्मके शक्तियुक्ते ।
गुणाहस्करे वह्नि बिम्बार्धमध्ये समासीनमोङ्कर्णिकेऽष्टाक्षराब्जे ॥३॥

समानोदितानेकसूर्येन्दुकोटिप्रभापूरतुल्यद्युतिं दुर्निरीक्षम् ।
नशीतं नचोष्णं सुवर्णावदातप्रसन्नं सदानंदसंवित्स्वरूपम् ॥४॥

सुनासापुटं सुन्दरभ्रूललाटं किरीटोचिताकुञ्चितस्निग्धकेशम् ।
स्फुरत्पुण्डरीकाभिरामायताक्षं समुत्फुल्लरत्नप्रसूनावतंसम् ॥५॥

लसत्कुण्डलामृष्टगण्डस्थलांतं जपारागचोराधरं चारुहासम् ।
अलिव्याकुलामोदि मन्दारमालं महोरस्फुरत्कौस्तुभोदारहारम् ॥६॥

सुरत्नाङ्गदैरन्वितं बाहुदण्डैश्चतुर्भिश्चलत्कङ्कणालङ्कृताग्रैः ।
उदारोदरालङ्कृतं पीतवस्त्रं पदद्वन्द्वनिर्धूतपद्माभिरामम् ॥७॥

स्वभक्तेषु सन्दर्शिताकारमेवं सदा भावयन् सन्निरुद्धेन्द्रियाश्वः ।
दुरापं नरो याति संसारपारं परस्मै परेभ्योऽपि तस्मै नमस्ते ॥८॥

श्रिया शातकुम्भद्युतिस्निग्धकान्त्या धरण्याच दूर्वादलश्यामलाङ्ग्या ।
कलत्रद्वयेनामुनातोषिताय त्रिलोकीगृहस्थाय विष्णो नमस्ते ॥९॥

शरीरं कलत्रं सुतं बन्धुवर्गं वयस्यं धनं सद्मभृत्यं भुवंच ।
समस्तं परित्यज्य ह्याकष्टमेको गमिष्यामिदुःखेनदूरं किलाहम् ॥१०॥

जरेयं पिशाचीव ह्याजीवतो मे वसामत्ति रक्तं च मांसं बलं च ।
अहो देवसीदामि दीनानुकम्पिन् किमद्यापिहन्तत्वयोदासितव्यम् ॥

कफव्याहतोष्णोल्बणश्वासवेगव्यथाविष्फुरत्सर्वमर्मास्थिबन्धाम् ।
विचिन्त्याहमन्त्यामसंख्यामवस्थां बिभेमि प्रभो किंकरोमि प्रसीद ॥

लपन्नच्युतानन्तगोविन्दविष्णो मुरारेहरे नाथ नारायणेति ।
यथानुस्मरिष्यामि भक्त्या भवंतं तथामेदयाशील देवप्रसीद ॥१३॥

भुजङ्गप्रयातं पठेद्यस्तुभक्त्या समाधायचित्ते भवंतं मुरारे ।
समोहं विहायाशुयुष्मत्प्रसादात्समाश्रित्य योगं व्रजत्यच्युतं त्वाम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीमच्छङ्करभगवतः कृतौ
॥ श्रीविष्णुभुजङ्गप्रयातस्तोत्रं संपूर्णम् ॥

---

श्रीयामुनाचार्यविरचितं

# ॥ स्तोत्ररत्नम् ॥

स्वादयन्निह सर्वेषां त्रय्यन्तार्थं सुदुर्ग्रहम् ।
स्तोत्रयामास योगीन्द्रस्तं वन्दे यामुनाह्वयम् ॥

नमोऽचिन्त्याद्भुताक्लिष्ट ज्ञानवैराग्यराशये
नाथाय मुनयेऽगाध भगवद्भक्तिसिन्धवे ॥१॥

तस्मै नमो मधुजिदङ्घ्रिसरोजतत्वज्ञानानुरागमहिमातिशयान्तसीम्ने ।
नाथाय नाथमुनयेऽत्र परत्र चापि नित्यं यदीयचरणौ शरणं मदीयम् ॥

भूयो नमोऽपरिमिताच्युतभक्तितत्व-
ज्ञानामृताब्धिपरिवाहशुभैर्वचोभिः ।
लोकेऽवतीर्णपरमार्थसमग्रभक्ति-
योगाय नाथमुनये यमिनां वराय ॥३॥

तत्वेन यश्चिदचिदीश्वरतत्स्वभाव भोगापवर्गतदुपायगतीरुदारः ।
संदर्शयन्निरममीत पुराणरत्नं तस्मै नमो मुनिवराय पराशराय ॥४॥

माता पिता युवतयस्तनया विभूतिस्सर्वं यदेव नियमेन मदन्वयानाम् ।
आद्यस्य नः कुलपतेर्वकुळाभिरामं श्रीमत्तदङ्घ्रियुगळं प्रणमामि मूर्ध्ना ॥

यन्मूर्ध्नि मे श्रुतिशिरस्सु च भाति यस्मि-
न्नस्मन्मनोरथपथस्सकलस्समेति ।
स्तोष्यामि नः कुलधनं कुलदैवतं त-
त्पादारविन्दमरविन्दविलोचनस्य ॥६॥

तत्वेन यस्य महिमार्णवशीकराणु-
श्शक्यो न मातुमपि शर्वपितामहाद्यैः ।
कर्तुं तदीयमहिमस्तुतिमुद्यताय
मह्यं नमोऽस्तु कवये निरपत्रपाय ॥७॥

यद्वा श्रमावधि यथामति वाप्यशक्त-
स्स्तौम्येवमेव खलु तेऽपि सदा स्तुवन्तः ।
वेदाश्चतुर्मुखमुखाश्च महार्णवान्तः
को मज्जतोरणुकुलाचलयोर्विशेषः ? ॥८॥

किञ्चैष शक्त्यतिशयेन न तेऽनुकम्प्य-
स्स्तोतापि तु स्तुतिकृतेन परिश्रमेण ।
तत्र श्रमस्तु सुलभो मम मन्दबुद्धे-
रित्युद्यमोऽयमुचितो मम चाब्जनेत्र ॥९॥

नावेक्षसे यदि ततो भुवनान्यमूनि
नालं प्रभो भवितुमेव कुतः प्रवृत्तिः ? ।
एवं निसर्गसुहृदि त्वयि सर्वजन्तो-
स्स्वामिन्विचित्रमिदमाश्रितवत्सलत्वम् ॥१०॥

स्वाभाविकानवधिकातिशयेशितृत्वं
नारायण त्वयि नमृष्यति वैदिकः कः ? ।
ब्रह्मा शिवश्शतमखः परमस्वराडि-
त्येतेऽपि यस्य महिमार्णवविप्रुषस्ते ॥११॥

कश्श्रीश्श्रियः परमसत्त्वसमाश्रयः कः
कः पुण्डरीकनयनः पुरुषोत्तमः कः? ।
कस्यायुतायुतशतैककलांशकांशे
विश्वं विचित्रचिदचित्प्रविभागवृत्तम्? ॥१२॥

वेदापहारगुरुपातकदैत्यपीडा-
द्यापद्विमोचनमहिष्ठफलप्रदानैः ।
कोऽन्यः प्रजापशुपती परिपाति कस्य
पादोदकेन स शिवस्स्वशिरोधृतेन? ॥ ॥१३॥

कस्योदरे हरविरिञ्चिमुखः प्रपञ्चः
को रक्षतीममजनिष्ट च कस्य नाभेः? ।
क्रान्त्वा निगीर्य पुनरुद्गिरति त्वदन्यः
कः केन वैष परवानिति शक्यशङ्कः? ॥१४॥

त्वां शीलरूपचरितैः परमप्रकृष्ट-
सत्त्वेन सात्त्विकतया प्रबलैश्च शास्त्रैः ।
प्रख्यातदैवपरमार्थविदां मतैश्च
नैवासुरप्रकृतयः प्रभवन्ति बोद्धुम् ॥१५॥

उल्लङ्घितत्रिविधसीमसमातिशायि-
सम्भावनं तव परिव्रढिमस्वभावम् ।
मायाबलेन भवताऽपि निगूह्यमानं
पश्यन्ति केचिदनिशं त्वदनन्यभावाः ॥१६॥

यदण्डमण्डान्तरगोचरं च यद्दशोत्तराण्यावरणानि यानि च ।
गुणाः प्रधानं पुरुषः परम्पदं परात्परं ब्रह्म च ते विभूतयः ॥१७॥

वशी वदान्यो गुणवानृजुश्शुचिर्मृदुर्दयालुर्मधुरस्स्थिरस्समः ।
कृतीकृतज्ञस्त्वमसि स्वभावतस्समस्तकल्याणगुणामृतोदधिः ॥१८॥

उपर्युपर्यब्जभुवोऽपि पूरुषान्प्रकल्प्य ते ये शत मित्यनुक्रमात् ।
गिरस्त्वदेकैकगुणावधीप्सया सदास्थिता नोद्यमतोऽतिशेरते ॥१९॥

त्वदाश्रितानां जगदुद्भवस्थितिप्रणाशसंसारविमोचनादयः ।
भवन्ति लीलाविधयश्च वैदिकास्त्वदीयगम्भीरमनोऽनुसारिणः॥२०॥

नमो नमो वाङ्मनसातिभूमये नमो नमो वाङ्मनसैकभूमये ।
नमो नमोऽनन्तमहाविभूतये नमो नमोऽनन्तदयैकसिन्धवे ॥२१॥

न धर्मनिष्ठोऽस्मि न चात्मवेदी न भक्तिमांस्त्वच्चरणारविन्दे ।
अकिञ्चनोऽनन्यगतिश्शरण्य त्वत्पादमूलं शरणं प्रपद्ये ॥२२॥

ननिन्दितं कर्म तदस्ति लोके सहस्रशो यन्न मया व्यधायि ।
सोऽहं विपाकावसरे मुकुन्द क्रन्दामि सम्प्रत्यगतिस्तवाग्रे ॥२३॥

निमज्जतोऽनन्तभवार्णवान्तश्चिराय मे कूलमिवासि लब्धः ।
त्वयापि लब्धं भगवन्निदानीमनुत्तमं पात्रमिदं दयायाः ॥२४॥

अभूतपूर्वं मम भावि किं वा सर्वंसहे मे सहजं हि दुःखम् ।
किन्तु त्वदग्रे शरणागतानां पराभवो नाथ न तेऽनुरूपः ॥२५॥

निरासकस्यापि न तावदुत्सहे महेशहातुं तव पादपङ्कजम् ।
रुषा निरस्तोऽपि शिशुस्स्तनंधयो न जातु मातुश्चरणौ जिहासति

तवामृतस्यन्दिनि पादपङ्कजे निवेशितात्मा कथमन्यदिच्छति ।
स्थितेऽरविन्दे मकरन्दनिर्भरे मधुव्रतो नेक्षुरकं हि वीक्षते ॥२७॥

त्वदङ्घ्रिमुद्दिश्य कदापि केनचिद्यथा तथावाऽपि सकृत्कृतोऽञ्जलिः ।
तदैव मुष्णात्यशुभान्यशेषतश्शुभानि पुष्णाति न जातु हीयते॥२८॥

उदीर्ण संसारदवाशुशुक्षणिं क्षणेन निर्व्याप्य परां च निर्वृतिम् ।
प्रयच्छति त्वच्चरणारुणाम्बुजद्वयानुरागामृतसिन्धुशीकरः ॥२९॥

विलासविक्रान्तपरावरालयं नमस्यदार्तिक्षपणे कृतक्षणम् ।
धनं मदीयं तवपादपङ्कजं कदा नुसाक्षात्करवाणि चक्षुषा ? ॥३०॥

कदा पुनश्शङ्खरथाङ्गकल्पकध्वजारविन्दांकुशवज्रलाञ्छनम् ।
त्रिविक्रमत्वच्चरणाम्बुजद्वयं मदीयमूर्धानमलङ्करिष्यति ? ॥३१॥

विराजमानोज्वलपीतवाससं स्मितातसीसूनसमामलच्छविम् ।
निमग्ननाभिं तनुमध्यमुन्नतं विशालवक्षस्स्थलशोभिलक्षणम् ॥३२॥

चकासतं ज्याकिणकर्कशैश्शुभैश्चतुर्भिराजानुविलम्बिभिर्भुजैः ।
प्रियावतंसोत्पलकर्णभूषणश्लथालकाबन्धविमर्दशंसिभिः ॥३३॥

उदग्रपीनांसविलम्बिकुण्डलालकावलीबन्धुरकम्बुकन्धरम् ।
मुखश्रियान्यक्कृतपूर्णनिर्मलामृतांशु बिम्बाम्बुरुहोज्वलश्रियम् ॥३४॥

प्रबुद्धमुग्धाम्बुजचारुलोचनं सविभ्रमभ्रूलतमुज्वलाधरम् ।
शुचिस्मितं कोमलगण्डमुन्नसं ललाटपर्यन्तविलम्बितालकम् ॥३५॥

स्फुरत्किरीटाङ्गदहारकण्ठिकामणीन्द्रकाञ्चीगुणनूपुरादिभिः ।
रथाङ्गशङ्खासिगदाधनुर्वरैर्लसत्तुलस्यावनमालयोज्वलम् ॥३६॥

चकर्थ यस्या भवनं भुजांतरं तव प्रियं धाम यदीयजन्मभूः ।
जगत्समस्तं यदपाङ्गसंश्रयं यदर्थमम्भोधिरमन्थ्यबन्धि च ॥३७॥

स्ववैश्वरूप्येण सदाऽनुभूतयाप्यपूर्ववद्विस्मयमादधानया ।
गुणेन रूपेण विलासचेष्टितैस्सदा तवैवोचितया तव श्रिया ॥३८॥

तया सहासीनमनन्तभोगिनि प्रकृष्टविज्ञानबलैकधामनि ।
फणामणिव्रातमयूखमण्डलप्रकाशमानोदरदिव्यधामनि ॥३९॥

निवासशय्यासनपादुकांशुकोपधानवर्षातपवारणादिभिः ।
शरीरभेदैस्तव शेषतां गतै यथोचितं शेष इतीर्यते जनैः ॥४०॥

दासस्सखा वाहनमासनं ध्वजो यस्ते वितानं व्यजनं त्रयीमयः ।
उपस्थितं तेन पुरो गरुत्मता त्वदङ्घ्रिसम्मर्दकिणाङ्कशोभिना ॥४१॥

त्वदीयभुक्तोज्झितशेषभोजिना त्वयानिसृष्टात्मभरेण यद्यथा ।
प्रियेण सेनापतिना न्यवेदि तन्नथाऽनुजानन्तमुदारवीक्षणैः ॥४२॥

हताखिलक्लेशमलैस्स्वभावतस्सदानुकूल्यैकरसैस्तवोचितैः ।
गृहीततत्तत्परिचारसाधनैर्निषेव्यमाणं सचिवैर्यथोचितम् ॥४३॥

अपूर्वनानारसभावनिर्भरप्रबद्धयामुग्धविदग्धलीलया ।
क्षणाणुवत्क्षिप्तपरादिकालयाप्रहर्षयन्तं महिषीं महाभुजम् ॥४४॥

अचिन्त्यदिव्याद्भुतनित्ययौवनस्वभावलावण्यमयामृतोदधिम् ।
श्रियश्श्रियं भक्तजनैकजीवितं समर्थमापत्सखमर्थिकल्पकम् ॥४५॥

भवन्तमेवानुचरन्निरन्तरप्रशान्तनिश्शेषमनोरथान्तरः ।
कदाहमैकान्तिकनित्यकिङ्करः प्रहर्षयिष्यामि सनाथजीवितः ? ॥४६॥

धिगशुचिमविनीतं निर्दयं मामलज्जं
परमपुरुष योऽहं योगिवर्याग्रगण्यैः ।
विधिशिवसनकाद्यैर्ध्यातु मत्यन्तदूरं
तव परिजनभावं कामये कामवृत्तः ॥　　॥४७॥

अपराधसहस्रभाजनं पतितं भीमभवार्णवोदरे ।
अगतिं शरणागतं हरे कृपया केवलमात्मसात्कुरु　　॥४८॥

अविवेकघनान्धदिङ्मुखे बहुधा सन्ततदुःखवर्षिणि ।
भगवन्भवदुर्दिनेपथस्खलितं मामवलोकयाच्युत　　॥४९॥

न मृषा परमार्थमेव मे शृणु विज्ञापनमेकमग्रतः ।
यदि मे न दयिष्यसे ततो दयनीयस्तव नाथ दुर्लभः　　॥५०॥

तदहं त्वदृते न नाथवा न्मदृते त्वं दयनीयवान्न च ।
विधिनिर्मितमेतदन्यं भगवन्पालय मास्मजीहपः　　॥५१॥

वपुरादिषु योऽपि कोऽपि वा गुणतोऽसानि यथा तथाविधः ।
तदयं तव पादपद्मयोरहमद्यैव मया समर्पितः ॥　　॥५२॥

मम नाथ यदस्ति योऽस्म्यहं सकलं तद्धि तवैव माधव ।
नियतस्वमिति प्रबुद्धधीरथवा किन्नु समर्पयामि ते ?　　॥५३॥

अवबोधितवानिमां यथा मयि नित्यां भवदीयतां स्वयम् ।
कृपयैवमनन्यभोग्यतां भगवन्भक्तिमपि प्रयच्छमे　　॥५४॥

तवदास्यसुखैकसङ्गिनां भवनेष्वस्त्वपि कीटजन्म मे ।
इतरावसथेषु मास्मभूदपिमे जन्म चतुर्मुखात्मना　　॥५५॥

सकृत्त्वदाकारविलोकनाशया तृणीकृतानुत्तमभुक्तिमुक्तिभिः ।
महात्मभिर्मामवलोक्यतां नय क्षणेऽपि ते यद्विरहोऽतिदुस्सहः ॥

न देहं न प्राणान्न च सुखमशेषाभिलषितं
न चात्मानं नान्यत्किमपि तव शेषत्वविभवात् ।
बहिर्भूतं नाथ क्षणमपि सहे यातु शतधा
विनाशं तत्सत्यं मधुमथन विज्ञापनमिदम् ॥५७॥

दुरन्तस्यानादेरपरिहरणीयस्य महतो
निहीनाचारोऽहं नृपशुरशुभस्यास्पदमपि ।
दयासिन्धो बन्धो निरवधिकवात्सल्यजलधे
तव स्मारं स्मारं गुणगणमितीच्छामि गतभीः ॥५८॥

अनिच्छन्नप्येवं यदि पुनरितीच्छन्निव रज-
स्तमश्छन्नच्छद्मस्तुतिवचनभङ्गीमरचयम् ।
तथापीत्थं रूपं वचनमवलम्ब्यापि कृपया
त्वमेवैवं भूतं धरणिधर मे शिक्षय मनः ॥५९॥

पिता त्वं माता त्वं दयित तनयस्त्वं प्रियसुहृ-
त्त्वमेव त्वं मित्रं गुरुरसि गतिश्चासि जगताम् ।
त्वदीयस्त्वद्भृत्यस्तव परिजनस्त्वद्गतिरहं
प्रपन्नश्चैवं सत्यहमपि तवैवास्मि हि भरः ॥६०॥

जनित्वाऽहं वंशे महति जगति ख्यातयशसां
शुचीनां युक्तानां गुणपुरुषतत्वस्थितिविदाम् ।

निसर्गादेव त्वच्चरणकमलैकान्तमनसा-
मधोधः पापात्मा शरणद निमज्जामि तमसि ॥६१॥

अमर्यादः क्षुद्रश्चलमतिरसूयाप्रसवभूः
कृतघ्नो दुर्मानी स्मरपरवशो वञ्चनपरः ।
नृशंसः पापिष्ठः कथमहमितो दुःखजलधे-
रपारादुत्तीर्णस्तव परिचरेयं चरणयोः ॥६२॥

रघुवर यदभूस्त्वं तादृशो वायसस्य
प्रणत इति दयालुर्यश्च चैद्यस्य कृष्ण(ः) ।
प्रतिभवमपराद्धुर्मुग्धसायुज्यदोऽभू-
र्वद किमपदमागस्तस्य तेऽस्ति क्षमायाः ॥६३॥

ननु प्रपन्नस्सकृदेव नाथतवाहमस्मीति च याचमानः ।
तवानुकंप्यस्स्मरतः प्रतिज्ञां मदेकवर्जं किमिदं व्रतं ते ॥६४॥
अकृत्रिमत्वच्चरणारविन्द प्रेमप्रकर्षावधिमात्मवन्तम् ।
पितामहं नाथमुनिं विलोक्य प्रसीद मद्वृत्तमचिन्तयित्वा ॥६५॥

॥ इति श्रीमद्यामुनमुनिविरचितं स्तोत्ररत्नं संपूर्णम् ॥

---

श्रीभगवद्रामानुजविरचिते गद्यत्रये

## ॥ शरणागतिगद्यम् ॥

योनित्यमच्युतपदाम्बुजयुग्मरुक्म व्यामोहतस्तदितराणि तृणायमेने ।
अस्मद्गुरोर्भगवतोऽस्यदयैकसिन्धोः रामानुजस्य चरणौ शरणं प्रपद्ये ॥

वन्दे वेदान्तकर्पूरचामीकरकरण्डकम् ।
रामानुजार्यसूर्याणां चूडामणि महर्निशम् ॥

भगवन्नारायणाभिमतानुरूपस्वरूपरूपगुणगणविभवैश्वर्यशीला-द्यनवधिकातिशयासंख्येय कल्याणगुणगणां पद्मवनालयां भगवतीं श्रियं देवीं नित्यानपायिनीं निरवद्यां देवदेवदिव्यमहिषीमखिल जग-न्मातरमस्मन्मातरमशरण्यशरण्यामनन्यशरणश्शरणमहं प्रपद्ये ॥ पारमार्थिकभगवच्चरणारविन्दयुगलैकान्तिकात्यन्तिकपरभक्तिपरज्ञान-परमभक्तिकृतपरिपूर्णानवरतनित्यविशदतमानन्यप्रयोजनानवधिकाति-शयातिप्रियभगवदनुभवजनितानवधिकातिशयप्रीतिकारिताशेषावस्थो-चिताशेषशेषतैकरतिरूपनित्यकैङ्कर्यप्राप्त्यपेक्षया पारमार्थिकी भगवच्चर-णारविन्दशरणागतिर्यथावस्थिताऽविरताऽस्तु मे ॥ अस्तु ते । तयैव सर्वं सम्पत्स्यते ॥ अखिलहेयप्रत्यनीककल्याणैकतानस्वेतरसमस्त-वस्तुविलक्षणानन्दज्ञानानन्दैकस्वरूप, स्वाभिमतानुरूपैकरूपाचिन्त्य-दिव्याद्भुतनित्यनिरवद्य निरतिशयौज्ज्वल्यसौन्दर्यसौगन्ध्यसौकुमार्य-लावण्ययौवनाद्यनन्तगुणनिधिदिव्यस्वरूप, स्वाभाविकानवधिकाति-शयज्ञानबलैश्वर्यवीर्यशक्तितेजस्सौशील्यवात्सल्यमार्दवार्जवसौहार्दसा-म्यकारुण्यमाधुर्यगाम्भीर्यौदार्यचातुर्यस्थैर्यधैर्यशौर्यपराक्रमसत्यकामस-त्यसङ्कल्पकृतित्वकृतज्ञताद्यसंख्येयकल्याणगुणगणौघमहार्णव, स्वोचितवि-विधविचित्रानन्ताश्चर्यनित्यनिरवद्यनिरतिशयसुगन्धनिरतिशयसुखस्प-र्शनिरतिशयौज्ज्वल्यकिरीटमकुटचूडावतंसमकरकुण्डलग्रैवेयकहारकेयू-रकटकश्रीवत्सकौस्तुभमुक्तादामोदरबन्धनपीताम्बरकाञ्चीगुणनूपुरा-

अपरिमितदिव्यभूषण, स्वानुरूपाचिन्त्यशक्तिशङ्खचक्रगदाशार्ङ्गाद्यसंख्येयनित्यनिरवद्यनिरतिशयकल्याणदिव्यायुध, स्वाभिमतनित्यनिरवद्यानुरूपस्वरूपरूपगुणविभवैश्वर्यशीलाद्यनवधिकातिशयासंख्येयकल्याणगुणगणश्रीवल्लभ, एवंभूतभूमिनीळानायक, स्वच्छन्दानुवृत्तिस्वरूपस्थितिप्रवृत्तिभेदाशेषशेषतैकरतिरूपनित्यनिरवद्यनिरतिशयज्ञानक्रियैश्वर्याद्यनन्तकल्याणगुणगणशेषशेषाशनगरुडप्रमुखनानाविधानन्तपरिचारिकापरिचरितचरणयुगळ, परमयोगिवाङ्मनसाऽपरिच्छेद्यस्वरूपस्वभाव, स्वाभिमतविविधविचित्रानन्तभोग्यभोगोपकरणभोगस्थानसमृद्धानन्ताश्चर्यानन्तमहाविभवानन्तपरिमाणनित्यनिरवद्यनिरतिशयवैकुण्ठनाथ, स्वसङ्कल्पानुविधायिस्वरूपस्थितिप्रवृत्तिस्वशेषतैकस्वभावप्रकृतिपुरुषकालात्मकविविधचित्रानन्तभोग्यभोक्तृवर्गभोगोपकरणभोगस्थानरूपनिखिलजगदुदयविभवलयलील, सत्यकाम, सत्यसङ्कल्प, परब्रह्मभूत, पुरुषोत्तम, महाविभूते, श्रीमन्नारायण, श्रीवैकुण्ठनाथ, अपारकारुण्यसौशील्यवात्सल्यौदार्यैश्वर्यसौन्दर्यमहोदधे, अनालोचितविशेषाशेषलोकशरण्य, प्रणतार्तिहर, आश्रितवात्सल्यैकजलधे, अनवरतविदितनिखिलभूतजातयाथात्म्य, अशेषचराचरभूतनिखिलनियमननिरत, अशेषचिदचिद्वस्तुशेषीभूत, निखिलजगदाधार, अखिलजगत्स्वामिन्, अस्मत्स्वामिन्, सत्यकाम, सत्यसङ्कल्प, सकलेतरविलक्षण, अर्थिकल्पक, आपत्सख, श्रीमन्नारायण, अशरण्यशरण्य, अनन्यशरणस्त्वत्पादारविन्दयुगळं शरणमहं प्रपद्ये ॥

अत्रद्वयं ॥

पितरं मातरं दारान्पुत्रान्बन्धून्सखीन्गुरून् ।
रत्नानि धनधान्यानि क्षेत्राणि च गृहाणि च ॥
सर्वधर्मांश्च सन्त्यज्य सर्वकामांश्च साक्षरान् ।
लोकविक्रान्तचरणौ शरणं तेव्रजं विभो ॥
त्वमेव माता च पिता त्वमेव त्वमेव बन्धुश्च गुरुस्त्वमेव ॥
त्वमेव विद्या द्रविणं त्वमेव त्वमेव सर्वं मम देवदेव ॥
पिताऽसि लोकस्य चराचरस्य त्वमस्य पूज्यश्च गुरुर्गरीयान्
नत्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो लोकत्रयेऽप्यप्रतिमप्रभावः ॥
तस्मात्प्रणम्य प्रणिधाय कायं प्रसादये त्वामहमीशमीड्यम् ।
पितेव पुत्रस्य सखेव सख्युः प्रियः प्रियायार्हसि देव सोढुम् ॥

मनोवाक्कायैरनादिकालप्रवृत्तानन्ताकृत्यकरणकृत्याकरणभगवदपचारभागवतापचारासह्यापचाररूपनानाविधानन्तापचारानारब्धकार्याननारब्धकार्यान्कृतान्क्रियमाणान्करिष्यमाणांश्च सर्वानशेषतः क्षमस्व अनादिकालप्रवृत्तविपरीतज्ञानमात्मविषयं कृत्स्नजगद्विषयं च विपरीतवृत्तं चाशेषविषयमद्यापि वर्तमानं वर्तिष्यमाणं च सर्वं क्षमस्व ॥ मदीयानादिकर्मप्रवाहप्रवृत्तां भगवत्स्वरूपतिरोधानकरीं विपरीतज्ञानजननीं स्वविषयायाश्च भोग्यबुद्धेर्जननीं देहेन्द्रियत्वेन भोग्यत्वेन सूक्ष्मरूपेण चावस्थितां दैवीं गुणमयीं मायां दासभूतश्शरणागतोऽस्मि तवास्मि दास इति वक्तारं मां तारय ॥

"तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते ।
प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ॥

उदारास्सर्वे एवैते ज्ञानीत्वात्मैव मे मतम् ।
आस्थितस्स हि युक्तात्मा मामेवानुत्तमां गतिम् ॥
बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते ।
वासुदेवस्सर्वमिति स महात्मा सुदुर्लभः" ॥

इत्यादि श्लोकत्रयोदितज्ञानिनं मां कुरुष्व ॥

"पुरुषस्सपरः पार्थभक्त्यालभ्यस्त्वनन्यया ।
भक्त्यात्वनन्यया शक्यो मद्भक्तिं लभते पराम्" ॥

इति स्थानत्रयोदितपरभक्तियुक्तं मां कुरुष्व ॥

परभक्तिपरज्ञानपरमभक्त्यैकस्वभावं मां कुरुष्व ॥

परभक्तिपरज्ञानपरमभक्तिकृतपरिपूर्णानवरतनित्यविशदतमानन्यप्रयोजनानवधिकातिशयप्रियभगवदनुभवजनितानवधिकातिशयप्रीतिकारिताशेषावस्थोचिताशेषशेषतैकरतिरूपनित्यकिङ्करो भवानि ॥ एवंभूतमत्कैङ्कर्यप्राप्त्युपायतयावकॢप्तसमस्तवस्तुविहीनोऽप्यनन्ततद्विरोधिपापाक्रान्तोऽप्यनन्तमदीयापचारयुक्तोऽप्यनन्तासह्यापचारयुक्तोऽप्येतत्कार्यकारणभूतानादि विपरीताहङ्कारविमूढात्मस्वभावोऽप्येतदुभयकार्यकारणभूतानादिविपरीतवासनासम्बद्धोऽप्येतदनुगुणप्रकृतिविशेषसम्बद्धोऽप्येतन्मूलाध्यात्मिकादिभौतिकाधिदैविकसुखदुःखतद्धेतुतदितरोपेक्षणीयविषयानुभवज्ञानसङ्कोचरूपमच्चरणारविन्दयुगळैकान्तिकात्यन्तिकपरभक्तिपरज्ञानपरमभक्तिविघ्नप्रतिहतोऽपि येन केनापि प्रकारेण द्वयवक्ता त्वं केवलं मदीययैव दयया निश्शेषविनष्टसहेतुकमच्चरणारविन्दयुगळैकान्तिकात्यन्तिकपरभक्तिपरज्ञानपरमभक्तिं विघ्नो

मत्प्रसादलब्धमच्चरणारविन्दयुगळैकान्तिकात्यन्तिकपरभक्तिपरज्ञान ·
परमभक्तिर्मत्प्रसादादेव साक्षात्कृतयथाऽवस्थितमत्स्वरूपरूपगुणवि·
भूतिलीलोपकरणविस्तारोऽपरोक्षसिद्धमन्नियाम्यतामदनुभवो मद्दा·
स्यैकरसात्मस्वभावात्मस्वरूपो मदेकानुभवो मद्दास्यैकप्रियः परिपूर्णा·
नवरतनित्यविशदतमानन्यप्रयोजनानवधिकातिशय प्रियमदनुभवस्त्वं
तथाविधमदनुभवजनितानवधिकातिशयप्रीतिकारिताशेषावस्थोचित·
शेषशेषतैकरतिरूपनित्यकिङ्करोभव ॥ एवम्भूतोऽसि । आध्यात्मिका·
धिभौतिकाधिदैविकदुःखविघ्नगन्धरहितस्त्वं द्वयमर्थानुसन्धानेन सह
सदैवं वक्ता यावच्छरीरपातमत्रैव श्रीरङ्गे सुखमास्व । शरीरपातस-
मये तु केवलं मदीययैव दययाऽतिप्रबुद्धो मामेवावलोकयन्नप्रच्युत·
पूर्वसंस्कारमनोरथः जीर्णमिववस्त्रं सुखेनेमां प्रकृतिं स्थूलसूक्ष्मरूपां
विसृज्य तदानीमेवमत्प्रसादलब्धमच्चरणारविन्दयुगळैकान्तिकात्यन्ति·
कपरभक्तिपरज्ञानपरमभक्तिकृतपरिपूर्णानवरत नित्यविशदतमानन्य·
प्रयोजनानवधिकातिशयप्रीतिकारिताशेषावस्थोचिताशेषशेषतैकरति ·
रूपनित्यकिङ्करो भविष्यसि ॥ मातेभूदत्रसंशयः ॥

"अनृतं नोक्तपूर्वं मे न च वक्ष्ये कदाचन"

"रामोद्विर्नाभिभाषते" ॥

"सकृदेव प्रपन्नाय तवास्मीतिच याचते,
अभयं सर्वभूतेभ्योददाम्येतद्व्रतंमम" ॥

"सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज ।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः" ॥

इति मयैव ह्युक्तम् ॥ अतस्त्वं तत्वतो मद्ज्ञानदर्शनप्राप्तिषु निस्संशयस्सुखमास्व ॥

अन्त्यकाले स्मृतिर्या तु तव कैङ्कर्यकारिता ।
तामेनां भगवन्नद्य क्रियमाणां कुरुष्व मे ॥

॥ इति श्रीभगवद्रामानुजविरचितं शरणागतिगद्यं संपूर्णम् ॥

---

## ॥ श्रीरङ्गगद्यम् ॥

स्वाधीनत्रिविधचेतनाचेतनस्वरूपस्थितिप्रवृत्तिभेदं, क्लेशकर्माद्यशेषदोषासंस्पृष्टं, स्वाभाविकानवधिकातिशयज्ञानबलैश्वर्यवीर्यशक्तितेजस्सौशील्यवात्सल्यमार्दवार्जवसौहार्दसाम्यकारुण्यमाधुर्यगाम्भीर्यौदार्यचातुर्यस्थैर्यधैर्यशौर्यपराक्रमसत्यकामसत्यसङ्कल्पकृतित्वकृतज्ञताद्यसंख्येय कल्याणगुणगणौघमहार्णवं, परब्रह्मभूतं, पुरुषोत्तमं, श्रीरङ्गशायिनमस्मत्स्वामिनं, प्रबुद्धनित्यनियाम्यनित्यदास्यैकरसात्मस्वभावोहं तदेकानुभवस्तदेकप्रियः; परिपूर्णं, भगवन्तं, विशदतमानुभवेन निरन्तरमनुभूय, तदनुभवजनितानवधिकातिशयप्रीतिकारिताशेषावस्थोचिताशेषशेषतैकरतिरूपनित्यकिङ्करो भवानि । स्वात्मनित्यनियाम्यनित्यदास्यैकरसात्मस्वभावानुसन्धानपूर्वकभगवदनवधिकातिशयस्वाम्याद्यखिलगुणानुभवजनितानवधिकातिशयप्रीतिकारिताशेषावस्थोचिताशेषशेषतैकनित्यकैङ्कर्यप्राप्त्युपायभक्तितदुपायसम्यक्ज्ञानतदुपायसमीचीनक्रियातदनुगुणसात्विकतास्तिक्यादिसमस्तात्मगुणविहीनः दुरुत्तरानन्ततद्विपर्ययज्ञानक्रियानुगुणानादिपापवासनामहार्णवान्तर्निम-

ग्नः, तिलतैलवद्दारुवह्निवद्दुर्विवेचत्रिगुणक्षणक्षरणस्वभावाचेतनप्रकृतिव्याप्तिरूपदुरत्ययभगवन्मायातिरोहितस्वप्रकाशः, अनाद्यविद्यासञ्चितानन्ताशक्यविस्रंसनकर्मपाशप्रग्रथितः, अनागतानन्तकालसमीक्षयाप्यदृष्टसन्तारोपायः, निखिलजन्तुजातशरण्य! श्रीमन्नारायण! तव चरणारविन्दयुगळं शरणमहं प्रपद्ये ॥ एवमवस्थितस्याप्यर्थित्वमात्रेण परमकारुणिको भगवान्, स्वानुभवप्रीत्योपनीतैकान्तिकात्यन्तिकनित्यकैङ्कर्यैकरतिरूपनित्यदास्यं दास्यतीति विश्वासपूर्वकं भगवन्तं नित्यकिङ्करतां प्रार्थये ॥

तवानुभूतिसंभूत प्रीतिकारितदासताम् ।
देहि मे कृपया नाथ न जाने गतिमन्यथा ॥
सर्वावस्थोचिताशेषशेषतैकरतिस्तव ।
भवेयं पुण्डरीकाक्ष त्वमेवैवं कुरुष्व माम् ॥

एवंभूततत्वयाथात्म्यावबोधितदिच्छारहितस्याप्येतदुच्चारणमात्रावलम्बनेनोच्यमानार्थपरमार्थनिष्ठं मे मनस्त्वमेवाद्यैव कारय ॥ अपारकरुणांबुधे! अनालोचितविशेषाशेषलोकशरण्य! प्रणतार्तिहर! आश्रितवात्सल्यैकमहोदधे! अनवरतविदितनिखिलभूतजातयाथात्म्य! अशेषचराचरभूत! निखिलनियमनिरत! अशेषचिदचिद्वस्तुशेषीभूत! निखिलजगदाधार! अखिलजगत्स्वामिन्! अस्मत्स्वामिन्! सत्यकाम! सत्यसङ्कल्प! सकलेतरविलक्षण! अर्थिकल्पक! आपत्सख! काकुत्स्थ! श्रीमन्नारायण! पुरुषोत्तम! श्रीरङ्गनाथ! ममनाथ! नमोऽस्तुते॥

॥ इति श्रीभगवद्रामानुजविरचितं श्रीरङ्गगद्यं संपूर्णम् ॥

## ॥ श्रीवैकुण्ठगद्यम् ॥

यामुनार्यसुधाम्भोधिमवगाह्य यथामति ।
आदाय भक्तियोगाख्यं रत्नं सन्दर्शयाम्यहम् ॥

स्वाधीनत्रिविधचेतनाचेतनस्वरूपस्थितिप्रवृत्तिभेदं, क्लेशकर्माद्यशेषदोषासंस्पृष्टं, स्वाभाविकानवधिकातिशयज्ञानबलैश्वर्यवीर्यशक्तितेजः प्रभृत्यसंख्येयकल्याणगुणगणौघमहार्णवं, परमपुरुषं, भगवन्तं, नारायणं, स्वामित्वेन सुहृत्त्वेन गुरुत्वेन च परिगृह्य ऐकान्तिकात्यन्तिकतत्पादाम्बुजद्वयपरिचर्यैकमनोरथः, तत्प्राप्तये च तत्पादाम्बुजद्वयप्रपत्तेरन्यन्न मे कल्पकोटिसहस्रेणापि साधनमस्तीति मन्वानः, तस्यैव भगवतो नारायणस्याखिलसत्वदयैकसागरस्यानालोचितगुणगुणाखण्डजनानुकूलमर्यादाशीलवतः स्वाभाविकानवधिकातिशयगुणवत्तया देवतिर्यङ्मनुष्याद्यखिलजनहृदयानन्दनस्य आश्रितवात्सल्यैकजलधेर्भक्तजनसंश्लेषैकभोगस्य नित्यज्ञानक्रियैश्वर्यभोगसामग्रीसमृद्धस्य महाविभूतेः श्रीमच्चरणारविन्दयुगळमनन्यात्मसञ्जीवनेन तद्गतसर्वभावेन शरणमनुव्रजेत् ।

ततश्च प्रत्यहमात्मोज्जीवनायैवमनुस्मरेत् । चतुर्दशभुवनात्मकमण्डं दशगुणितोत्तरंचावरणसप्तकं समस्तं कार्यकारणजातमतीत्य परमव्योमशब्दाभिधेये ब्रह्मादीनां वाङ्मनसाऽगोचरे श्रीमति वैकुण्ठ दिव्यलोके सनकविधिशिवादिभिरप्यचिन्त्यस्वभावैश्वर्यैर्नित्यसिद्धैरनन्तैर्भगवदानुकूल्यैकभोगैर्दिव्यपुरुषैर्महात्मभिरापूरिते, तेषामपि इयत्परिमाणमियदैश्वर्यमीदृशस्वभावमिति परिच्छेत्तुमयोग्ये दिव्याव-

रणशतसहस्रावृते दिव्यकल्पकतरूपशोभिते दिव्योद्यानशतसहस्रको-टिभिरावृते अतिप्रमाणे दिव्यायतने कस्मिंश्चिद्विचित्रदिव्यरत्न-दिव्यास्थानमण्डपे दिव्यरत्नस्तम्भशतसहस्रकोटिभिरुपशोभिते दिव्य-नानारत्नकृतस्थलविचित्रिते दिव्यालङ्कारालङ्कृते परितः पतितैः पतमानैः पादपस्थैश्च नानागन्धवर्णैर्दिव्यपुष्पैश्शोभमानैर्दिव्यपुष्पोपव-नैरुपशोभिते, सङ्कीर्णपारिजातादिकल्पद्रुमोपशोभितैरसङ्कीर्णैश्च कैश्चि-दन्तस्थपुष्परत्नादिनिर्मितदिव्यलीलामण्टपशतसहस्रोपशोभितैस्सर्व-दानुभूयमानैरप्यपूर्ववदाश्चर्यमावहद्भिः क्रीडाशैलशतसहस्रैरलङ्कृतैः, कैश्चिन्नारायणदिव्यलीलाऽसाधारणैः कैश्चित्पद्मवनालयादिव्यलीला-साधारणैः कैश्चिच्छुकशारिकामयूरकोकिलादिभिः कोमलकूजितै-राकुलैर्दिव्योद्यानशतसहस्रकोटिभिरावृते, मणिमुक्ताप्रवालकृतसो-पानैर्दिव्यामलामृतरसोदकैर्दिव्याण्डजवरैरातिरमणीयदर्शनैरातिमनो-हरमधुरस्वरैराकुलैरन्तस्थमुक्तामयदिव्यक्रीडास्थानोपशोभितैः दिव्य-सौगन्धिकवापीशतसहस्रैर्दिव्यराजहंसावलीविराजितैरावृते, निरस्ता-तिशयानन्दैकरसतया चानन्त्याच्च प्रविष्टानुन्मादयद्भिः क्रीडो-द्देशैर्विराजिते, तत्र तत्र कृतदिव्यपुष्पपर्यङ्कोपशोभिते, नाना-पुष्पासवास्वादमत्तभृङ्गावलीभिरुद्गीयमानदिव्यगान्धर्वेणापूरिते चन्द-नागरुकर्पूरदिव्यपुष्पावगाहिमन्दानिलासेव्यमाने, मध्ये पुष्पसञ्चय-विचित्रिते, महतिदिव्ययोगपर्यङ्के अनन्तभोगिनि, श्रीमद्वैकुण्ठैश्वर्या-दिदिव्यलोकमात्मकान्त्या विश्वमाप्याययन्त्या शेषशेषाशनादिसर्वं परिजनं भगवतस्तत्तदवस्थोचितपरिचर्यायामाज्ञापयन्त्या, शीलरूप-

गुणविलासादिभिरात्मानुरूपया श्रिया सहासीनं, प्रत्यग्रोन्मीलितसरसिजसदृशनयनयुगळं, स्वच्छनीलजीमूतसङ्काशं अत्युज्वलपीतवाससं स्वया प्रभयाऽतिनिर्मलयाऽतिशीतलयाऽति कोमलया स्वच्छमाणिक्याभया कृत्स्नं जगद्भावयन्तं अचिन्त्यदिव्याद्भुतनित्ययौवनस्वभावलावण्यमयामृतसागरं, अतिसौकुमार्यादीषत्प्रस्विन्नवदालक्ष्यमाणललाटफलकदिव्यालकावलीविराजितं, प्रबुद्धमुग्धाम्बुजचारुलोचनं, सविभ्रमभ्रूलतमुज्वलाधरं, शुचिस्मितं, कोमलगण्डमुन्नसं, उदग्रपीनांसविलम्बिकुण्डलालकावलीबन्धुरकम्बुकन्धरं, प्रियावतंसोत्पलकर्णभूषणश्लथालकाबन्धविमर्दशंसिभिश्चतुर्भिराजानुविलम्बिभिर्भुजैर्विराजितं, अतिकोमलदिव्यरेखालङ्कृतातामकरतलं, दिव्याङ्गुलीयकविराजितमतिकोमलदिव्यनखावलीविराजितातिरक्ताङ्गुलीभिरलङ्कृतं, तत्क्षणोन्मीलितपुण्डरीकसदृशचरणयुगळं, अतिमनोहरकिरीटमकुटचूडावतंसमकरकुण्डलग्रैवेयकहारकेयूरकटकश्रीवत्सकौस्तुभमुक्तादामोदरबन्धनपीताम्बरकाञ्चीगुणनूपुरादिभिरत्यन्तसुखस्पर्शैर्दिव्यगन्धैर्भूषणैर्भूषितं, श्रीमत्या वैजयन्त्या वनमालया विराजतं, शङ्खचक्रगदासिशार्ङ्गादिदिव्यायुधैस्सेव्यमानं, स्वसङ्कल्पमात्रावक्लृप्तजगज्जन्मस्थितिध्वंसादिके श्रीमति विष्वक्सेने न्यस्तसमस्तात्मैश्वर्यं, वैनतेयादिभिस्स्वभावतो निरस्तसमस्तसांसारिकस्वभावैर्भगवत्परिचर्याकरणयोग्यैर्भगवत्परिचर्यैकभोगैर्नित्यसिद्धैरनन्तैर्यथायोगं सेव्यमानं, आत्मभोगेनानुसंहितपरादिकालं, दिव्यामलकोमलावलोकनेन विश्वमाह्लादयंतं, ईषदुन्मीलितमुखाम्बुजोदरविनिर्गतेन दिव्याननारविंद-

शोभाजननेन दिव्यगांभीर्यौदार्यसौन्दर्यमाधुर्याद्यनवधिकगुणगणवि-भूषितेन अतिमनोहरदिव्यभावगर्भेण दिव्यलीलालापामृतेन अखिल-जनहृदयान्तराण्यापूरयंतं, भगवंतं, नारायणं, ध्यानयोगेन दृष्ट्वा ततो भगवतो नित्यस्वाम्यमात्मनो नित्यदास्यं च यथावस्थितमनुस-न्धाय कदाहं भगवंतं नारायणं मम कुलनाथं मम कुलदैवतं मम कुलधनं मम भोग्यं मम मातरं मम पितरं मम सर्वं साक्षात्करवाणि चक्षुषा? । कदाहं भगवत्पादाम्बुजद्वयं शिरसा सङ्ग्रहीष्यामि ? । कदाहं भगवत्पादाम्बुजद्वयपरिचर्याशया निरस्तसमस्तेतरभोगाशोऽपगतसम-स्तसांसारिकस्वभावस्तत्पादांबुजद्वयं प्रवेक्ष्यामि ? । कदाहं भगवत्पा-दाम्बुजद्वयपरिचर्याकरणयोग्यस्तत्पादौ परिचरिष्यामि ? । कदा मां भगवान् स्वकीययाऽतिशीतलया दृशाऽवलोक्य स्निग्धगम्भीरमधुरया गिरा परिचर्यायामाज्ञापयिष्यतीति भगवत्परिचर्यायामाशां वर्धयित्वा तयैवाशया तत्प्रसादोपबृंहितया भगवन्तमुपेत्य दूरादेव भगवंतं शेषभोगे श्रिया सहासीनं वैनतेयादिभिस्सेव्यमानं "समस्तपरिवा-राय श्रीमते नारायणाय नम" इति प्रणम्योत्थायोत्थाय पुनः पुनः प्रणम्यात्यन्तसाध्वसविनयावनतो भूत्वा भगवत्पारिषद्गणनायकै-र्द्वारपालैः कृपया स्नेहगर्भया दृशाऽवलोकितस्सम्यगभिवंदितैस्तैस्तै-रेवानुमतो भगवन्तमुपेत्य श्रीमता मूलमंत्रेण मामैकांतिकात्यंतिक-परिचर्याकरणाय परिगृह्णीष्वेति याचमानः प्रणम्यात्मानं भगवते निवेदयेत् ।

ततो भगवता स्वयमेवात्मसञ्जीवनेन मर्यादाशीलवतातिप्रे-मान्वितेनावलोकनेनावलोक्य सर्वदेशसर्वकालसर्वावस्थोचितात्यन्त-

शेषभावाय स्वीकृतोऽनुज्ञातश्चात्यन्तसाध्वसविनयावनतः किं कुर्वाणः कृताञ्जलिपुटो भगवन्तमुपासीत ।

ततश्चानुभूयमानभावविशेषः निरतिशयप्रीत्याऽन्यत्किञ्चित्कर्तुं द्रष्टुं स्मर्तुमशक्तः पुनरपि शेषभावमेव याचमानो भगवन्तमेवाविच्छिन्नस्रोतोरूपेणावलोकयन्नासीत ।

ततो भगवता स्वयमेवात्मसञ्जीवनेनावलोकनेनावलोक्य सस्मितमाहूय समस्तक्लेशापहं निरतिशयसुखावहमात्मीयं श्रीमत्पादारविन्दयुगळं शिरसि कृतं ध्यात्वाऽमृतसागरान्तर्निमग्नसर्वावयवस्सुखमासीत ॥

॥ इति श्रीभगवद्रामानुजाविरचितं श्रीवैकुण्ठगद्यं संपूर्णम्

॥ गद्यत्रयं संपूर्णम् ॥

---

## ॥ श्रीहयग्रीवाष्टोत्तरशतनामस्तोत्रम् ॥

शृण्वन्तु ऋषयस्सर्वे हयास्याष्टोत्तरं शतम् ॥

हयग्रीवो महाविष्णुः केशवो मधुसूदनः ।
गोविन्दः पुण्डरीकाक्षो विष्णुर्विश्वम्भरो हरिः ॥१॥

आदित्यस्सर्ववागीशस्सर्वाधारस्सनातनः ।
निराधारो निराकारो निरीशो निरुपद्रवः ॥२॥

निरञ्जनो निष्कळङ्को नित्यतृप्तो निरामयः ।
चिदानन्दमयस्साक्षी शरण्यस्सर्वदायकः ॥३॥

श्रीमान्लोकत्रयाधीश श्शिवस्सारस्वतप्रदः ।
वेदोद्धर्ता वेदनिधिर्वेदवेद्यः प्रभूतनः ॥४॥

पूर्णः पूरयिता पुण्यः पुण्यकीर्तिः परात्परः ।
परमात्मा परंज्योतिः परेशः पारगः परः ॥५॥

सर्ववेदात्मको विद्वान्वेदवेदान्तपारगः ।
सकलोपनिषद्वेद्यो निष्कलस्सर्वशास्त्रकृत् ॥६॥

अक्षमालाज्ञानमुद्रायुक्तहस्तो वरप्रदः ।
पुराणः पुरुषश्रेष्ठश्शरण्यः परमेश्वरः ॥७॥

शान्तो दान्तो जितक्रोधो जितामित्रो जगन्मयः ।
जन्ममृत्युहरो जीवो जयदो जाड्यनाशनः ॥८॥

जपप्रियो जपस्तुत्यो जापकप्रियकृत्प्रभुः ।
विमलो विश्वरूपश्च विश्वगोप्ता विधिस्तुतः ॥९॥

विधीन्द्रशिवसंस्तुत्यश्शांतिदः क्षांतिपारगः ।
श्रेयःप्रदश्श्रुतिमयश्श्रेयसां पतिरीश्वरः ॥१०॥

अच्युतोऽनन्तरूपश्च प्राणदः पृथिवीपतिः ।
अव्यक्तो व्यक्तरूपश्च सर्वसाक्षी तमोहरः ॥११॥

अज्ञाननाशको ज्ञानी पूर्णचंद्रसमप्रभः ।
ज्ञानदो वाक्पतिर्योगी योगीशस्सर्वकामदः ॥१२॥

महायोगी महामौनी मौनीशश्श्रेयसां पतिः ।
हंसः परमहंसश्च विश्वगोप्ता विराट्स्वराट् ॥१३॥

शुद्धस्फटिकसङ्काशो जटामण्डलसंयुतः ।
आदिमध्यांतरहितस्सर्ववागीश्वरेश्वरः ॥१४॥

नाम्नामष्टोत्तरशतं हयग्रीवस्य यः पठेत् ।
वेदवेदाङ्गवेदांतशास्त्राणां पारगः कविः ॥१५॥

वाचस्पतिसमो बुद्ध्या सर्वविद्याविशारदः ।
महदैश्वर्यमासाद्य कळत्राणि च पुत्रकान् ॥१६॥

अवाप्य सकलान्भोगानन्ते हरिपदं व्रजेत् ॥

इति पराशरपुराणे अगस्त्यनारदसंवादे
॥ हयग्रीवाष्टोत्तरशतनामस्तोत्रं संपूर्णम् ॥

## ॥ श्रीहयग्रीवसहस्रनामस्तोत्रम् ॥

शुक्लांबरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥

यस्य द्विरदवक्त्राद्याः पारिषद्याः परश्शतम् ।
विघ्नं निघ्नन्ति सततं विष्वक्सेनं तमाश्रये ॥

श्रीकाश्यपः—

तात मे श्रीहयग्रीवनाम्नां साहस्रमुत्तमम् ।
अध्येतुं जायते काङ्क्षा तत्प्रसीद मयि प्रभो ॥१॥

इतिपृष्टस्ततोवाच ब्रह्मा लोक पितामहः ।
श्रेयसामपि च श्रेयः काश्यपेह विशांपते ॥२॥

अमत्या विहितं पापं मूलतो हि विनश्यति ।
रहस्यानां रहस्यं च पावनानां च पावनम् ॥३॥
प्रायश्चित्ते कृते तस्य कर्ता न निरयी भवेत् ।
कामतस्तु कृते पापे प्रायश्चित्तशतेन च ॥४॥
तन्न नश्यति तत्कर्ता व्यवहार्यस्तु जायते ।
एवं दुरपनोदानां बुद्धिपूर्वमहांहसाम् ॥५॥
आवर्जनकराणामप्यन्ते निष्कृतिरीरिता ।
प्रणम्य मानवतया मन्त्ररत्नानुकीर्तनम् ॥६॥
हंसनामसहस्रस्यपठनं शिरसान्वहम् ।
प्रणम्य भगवद्भक्तपादोदक निषेवणम् ॥७॥
तदेतत्त्रितयं सर्वपापसङ्घातनाशनम् ।
इतीदं परमं गुह्यं हंसो हयशिराहरिः ॥८॥
वेदोपदेशसमये मां निबोध्योपदिष्टवान् ।
अनेन मन्त्ररत्नेन महाश्वशिरसो हरेः ॥९॥
सहस्रनामभिस्तुल्या निष्कृतिर्नेतरांहसाम् ।
अनन्यभगवद्भक्तपादोदकनिषेवणम् ॥१०॥
एतद्वयोपदेशाङ्क्रमादौ स्वीकार्यमिष्यते ।
इत्युक्त्वाऽनन्तगरुडविष्वक्सेनपदोदकम् ॥११॥
आदौ मां प्राशयन्नन्ते परिशोध्यैकृतांहसि ।
आत्मनो नामसाहस्रं सर्षिच्छन्दोऽधिदैवतम् ॥१२॥

न्यासमुद्रिकाभेदं मह्यं साङ्गमुपादिशत् ।
यथावत्तदिदं वत्स दद्यां ते शृणु तत्त्वतः ॥१३॥

यत्प्राप्यात्यन्तिकी वृत्त्या निवृत्त्या मोक्षमेष्यति ।
हयास्यनामसाहस्रस्तोत्रराजस्य वैभवम् ॥१४॥

ऋषिश्श्रीमान् हयग्रीवो विद्यामूर्तिस्स्वयं हरिः ।
देवता च स एवास्य छन्दोनुष्टुबिति श्रुतम् ॥१५॥

हंसो हंसोऽहमित्येते बीजं शक्तिस्तुकीलकम् ।
हंसौं हंसोऽहमित्येते प्रागजप्या मनवस्त्रयः ॥१६॥

एकैकस्य दशावृत्तिरितिसंख्याविधीयते ।
प्रणवत्रयमंत्रं स्यात्कवचं श्रीश्श्रियो भवेत् ॥१७॥

श्रीविभूषण इत्येतद्धृदयं परिकीर्तितम् ।
परोरजाः परं ब्रह्मेत्यपि योनिरुदाहृता ॥१८॥

विद्यामूर्तिरिति ध्यानं विश्वात्मेति च गद्यते ।
विश्वमङ्गळनाम्नोऽस्य विनियोगो यथारुचि ॥१९॥

भ्रूनेत्राश्रोत्रनासाहन्वोष्ठताल्वरदे क्रमात् ।
षोडशस्वरविन्यासो दक्षिणारम्भमिष्यते ॥२०॥

जिह्वातलेऽपि तन्मूले स्वरावन्त्यौ च विन्यसेत् ।
तदा तालुद्वयन्यासस्वायोस्तु परित्यजेत् ॥२१॥

अयं हि विद्याकामानामाद्यस्त्वन्य फलैषिणाम् ।
दोःपत्सक्थ्यङ्गुळीशीर्षे वर्गान्कचटतान्न्यसेत् ॥२२॥

पार्श्वयोस्तु वफौ पृष्ठोदरयोस्तु बभौ न्यसेत ।
मकारं हृदये न्यस्य जीवे वा पञ्चविंशके ॥२३॥
नाभिपायूदरे गुह्ये यरलवा न्विनिक्षिपेत् ।
शषौ कुण्डलयोश्शीर्षे हारे च कटिसूत्रके ॥२४॥
सहौ हृदब्जे हर्दे च ळमापादशिखे न्यसेत ।
क्षञ्च शीर्षादि पादान्तं मातृकान्यास एष तु ॥२५॥

ध्यानम्—

विद्यामूर्तिमखण्डचन्द्रवलयश्वेतारविन्दस्थितं
हृद्याभं स्फटिकाद्रिनिर्मलतनुं विद्योतमानंश्रिया ।
वामाङ्कस्थितवल्लभां प्रति सदाऽयाख्यान्तमाम्नायवा-
गर्थानादिमपूरुषं हयमुखं ध्यायामि हंसात्मकम् ॥१॥

विश्वात्मा विशदप्रभाप्रतिलसद्वाग्देवतामण्डलो
देवो दक्षिणपाणियुग्मविलसद्बोधाङ्कचक्रायुधः ।
वामोदग्रकरे दरं तदितरेणाश्लिष्य दोष्णा रमां
हस्ताग्रे धृतपुस्तकस्स दयतां हंसो हिरण्यच्छदः ॥२॥

ओं-श्रीं हंसो हमै मों क्लीं श्रीश्श्रियश्श्रीविभूषणः ।
परोरजाः परं ब्रह्म भूर्भुवस्सुवरादिमः ॥१॥
भास्वानभगश्च भगवान्स्वस्तिस्वाहा नमस्स्वधा ।
औषड्वौषढलं हुं फट् हुं ह्रीं क्रों ह्रौं यथा तथा ॥२॥
कर्कप्रविः कलानाथः कामदः करुणाकरः ।
कमलाभ्युषितोत्सङ्गः क्षये काळीवशानुगः ॥३

निषच्छोपनिषच्चाथ नीचैरुच्चैस्समं सह ।
शश्वद्युगपदह्राय शनैरेको बहुध्रुवः ॥४॥

भूतभृद्भूरिदस्साक्षी भूतादिः पुण्यकीर्तनः ।
भूमा भूमिरधोऽनद्धः पुरुहूतः पुरुष्टुतः ॥५॥

प्रफुल्लपुण्डरीकाक्षः परमेष्ठी प्रभावनः ।
प्रभुर्भगःसतां बन्धुर्भयध्वंसी भवापनः ॥६॥

उद्यन्नुरुशयाहुं कृदुरुगाय उरुक्रमः ।
उदारास्त्रियुगस्त्र्यात्मा निदानं निलयो हरिः ॥७॥

हिरण्यगर्भो हेमाङ्गो हिरण्यश्मश्रुरीशिता ।
हिरण्यकेशो हिमहा हेमवासा हितैषणः ॥८॥

आदित्यमण्डलान्तस्थो मोदमानस्समूहनः ।
सर्वात्मा जगदाधारस्सन्निधिस्सारवान्स्वभूः ॥९॥

गोपतिर्गोहितो गोमी केशवः किन्नरेश्वरः ।
मायी मायाविकृतिकृन्महेशानो महामहाः ॥१०॥

ममा मिमी मुमू मृमॄं म्लुम्लॄं मेमैं तथैव च ।
मोमौं बिन्दुर्विसर्गश्च ह्रस्वोदीर्घः प्लुतस्स्वरः ॥११॥

उदात्तश्चानुदात्तश्च स्वरितः प्रचयस्तथा ।
कं खं गं घं ङंच चं छं जं झं ञं टं ठमेव च ॥१२॥

डं ढं णं तं थं च दं च धं नं पं फं बमेव च ।
भं मं यं रं लं च वं च शं षं सं हं ळमेवच ॥१३॥

क्षं यमौ व्यञ्जनो जिह्वामूलीयोऽर्धविसर्गवान् ।
उपध्मानीय इति च संयुक्ताक्षर एव च ॥१४॥
पदं क्रिया कारकश्च निपातो गतिरव्ययः ।
सन्निधिर्योग्यताऽऽकाङ्क्षा परस्परसमन्वयः ॥१५॥
वाक्यं पद्यं संप्रदायो भावश्शब्दार्थलालितः ।
व्यञ्जना लक्षणा शक्तिः पाको रीतिरलंकृतिः ॥१६॥
शय्या प्रौढध्वनिस्तद्वत्काव्यं सर्गः क्रिया रुचिः ।
नानारूपप्रबन्धश्च यशः पुण्यं महद्धनम् ॥१७॥
व्यवहारपरिज्ञानं शिवेतरपरिक्षयः ।
सदः परमनिर्वाणं प्रियपथ्योपदेशकः ॥१८॥
संस्कारः प्रतिभा शिक्षा ग्रहणं धारणं श्रमः ।
आसुतास्वादिमा चित्रं विस्तारश्चित्रसंविधिः ॥१९॥
पुराणमितिहासश्च स्मृतिसूत्रं च संहिता ।
आचार आत्मना तुष्टिराचार्याज्ञानतिक्रमः ॥२०॥
श्रीमान्श्रीगीःश्रियः कान्तश्श्रीनिधिश्श्रीनिकेतनः ।
श्रेयान्हयाननश्श्रीदश्श्रीमयश्श्रितवत्सलः ॥२१॥
हंसश्शुचिषदादित्यो वसुश्चन्द्रोऽन्तरिक्षसत् ।
होता च वेदिषद्योनिरतिथिर्द्रोणसद्धविः ॥२२॥
नृषन्मृत्युश्च वरसदमृतं चर्तसद्वृषः ।
व्योमसद्द्विविधस्फोटशब्दार्थव्यङ्ग्यवैभवः ॥२३॥

अब्जा रसस्वादुतमो गोजा गेयो मनोहरः ।
ऋतजास्सकलं भद्रमद्रिजास्थैर्यमुत्तमम् ॥२४॥

ऋतं समज्ञात्वनृतं बृहत्सूक्ष्मवशानुगः ।
सत्यं ज्ञानमनन्तं यत्तत्सद्ब्रह्ममयोऽच्युतः ॥२५॥

अग्रेभवन्नगो नित्यः परमः पुरुषोत्तमः ।
योगनिद्रापरस्स्वामी निध्यानवरन्निर्वृतः ॥२६॥

रसो रस्यो रसयिता रसवान् रसिकप्रियः ।
आनन्दो नन्दयन्सर्वानानन्दी हयकन्धरः ॥२७॥

कालः काल्यश्च कालात्मा कालाभ्युत्थितजागरः ।
कलासाचिव्यकृत्कान्ताकथितव्याधिकार्यकः ॥२८॥

दृङ्न्यञ्चनोदञ्चनोद्यल्लयसर्गो लघुक्रियः ।
विद्यासहायो वागीशो मातृकामण्डलीकृतः ॥२९॥

हिरण्यं हंसमिथुनमीशानश्शक्तिमान् जयी ।
ग्रहमेधी गुणी श्रीभूनीलालीलैकलालसः ॥३०॥

अङ्केनोदूह्य वाग्देवीमाचार्यकमुपाश्रयः ।
वेदवेदान्तशास्त्रार्थतत्त्वव्याख्यानतत्परः ॥३१॥

ह्रौं ह्लं हं हं हयो हं सूं हंसां हंसीं हसूं हस्मौम् ।
हसूं हं हरिणो हारी हरिकेशो हरेडितः ॥३२॥

सनातनो निर्बीजस्सन्नव्यक्तो हृदयेशयः ।
अक्षरः क्षरजीवेशः क्षमी क्षयकरोऽच्युतः ॥३३॥

कर्ताकारयिताऽकार्यं कारणं प्रकृतिः कृतिः ।
क्षयक्षयमनामार्थो विष्णुर्जिष्णुर्जगन्मयः ॥३४॥

सङ्कुचन्विकचन्स्थाणुर्निर्विकारो निरामयः ।
शुद्धो बुद्धः प्रबुद्धश्च स्निग्धो मुग्धस्समुद्धतः ॥३५॥

सङ्कल्पदो बहुभवत्सर्वात्मा सर्वनामभृत् ।
सहस्रशीर्षस्सर्वज्ञस्सहस्राक्षस्सहस्रपात् ॥३६॥

व्यक्ताविराट्स्वराट्सम्राड्ढ्वग्रूपवपुर्विधुः ।
मायावी परमानन्दो मान्यो मायातिगो महान् ॥३७॥

वटपत्रशयो बालो ललन्नाम्नायसूचकः ।
मुखन्यस्तकरप्रस्तपादाग्रपटलः प्रभुः ॥३८॥

नैद्रीहासाश्रसंभूतज्ञाज्ञसात्त्विकतामसः ।
महार्णवाम्बुपर्यङ्कः पद्मनाभः परात्परः ॥३९॥

ब्रह्मभूर्ब्रह्मभयहृद्धारिरोमुपदेशकृत् ।
मधुकैटभनिर्माता मत्तब्रह्ममदापहः ॥४०॥

वेधोविलासवागानिर्दयासारो मृषार्थदः ।
नारायणाख्यनिर्माता मधुकैटभमर्दनः ॥४१॥

वेदकर्ता वेदभर्ता वेदहर्ता विदांवरः ।
पुङ्खानुपुङ्खहेषाढ्यः पूर्णषाड्गुण्यविग्रहः ॥४२॥

लालामृतकणव्याजवान्तनिर्दोषवर्णकः ।
कल्लोलध्वानधीरोद्यदुर्बर्हलहलध्वानिः ॥४३॥

कर्णादारभ्य कल्क्यात्मा कविः क्षीरार्णवोपमः ।
शङ्ख चक्रगदी खड्गी शार्ङ्गी निर्भयमुद्रकः ॥४४॥
चिन्मुद्राचिह्नितो हस्ततलविन्यस्तपुस्तकः ।
विद्यानाम्नीं श्रियं शिष्यां वेदयन्निजवैभवम् ॥४५॥
अष्टार्ण्यम्योऽष्टभुजोऽयष्टिमृष्टिकरः पिता ।
अष्टैश्वर्यप्रदोऽह्यष्यदष्टमूर्तिपितृस्तुतः ॥४६॥
अनीतवेदपुरुषो विधिवेदोपदेशकृत् ।
वेदवेदाङ्गवेदान्तपुराणस्मृतिमूर्तिमान् ॥४७॥
सर्वकर्मसमाराध्यस्सर्ववेदमयो विभुः ।
सर्वार्थतत्त्वव्याख्याता चतुष्षष्टिकलाधिपः ॥४८॥
शुभयुक्सुमुखश्शुद्धस्सुरूपस्सुगतस्सुधीः ।
सुव्रतिस्संहृतिश्शूरस्सुतपाः सुश्रुति स्सुहृत् ॥४९॥
सुन्दरस्सुभगस्सौम्यस्सुखदस्सुहृदां प्रियः ।
सुचरित्रस्सुखतरश्शुद्धसत्वप्रदायकः ॥५०॥
रजस्तमोहरो वीरोविश्वरक्षाधुरन्धरः ।
नरनारायणाकृत्या गुरुशिष्यत्वमास्थितः ॥५१॥
परावरात्मा प्रबलः पावनः पापनाशनः ।
दयाघनः क्षमासारो वात्सल्यैकविभूषणः ॥५२॥
आदिकूर्मो जगद्धर्ता महापोत्री महीधरः ।
स्ताद्भित्स्वामी हरिर्यक्षो हिरण्यरिपुरैच्छिकः ॥५३॥

प्रह्लादपालकस्सर्वभयहर्ता प्रियंवदः ।
श्रीमुखालोकनस्रंसत्कौंचकः कुहकाध्वनः ॥५४॥

छत्री कमण्डलुधरो वामनो वदतां वरः ।
पिशुनात्मा शनोद्दष्टिलोपनो बलिमर्दनः ॥५५॥

उरुक्रमो बलिशिरोन्यस्ताङ्घ्रिर्बलिमर्दनः ।
जामदग्न्यः परशुभृत्कृत्तक्षत्रकुलोरामः ॥५६॥

रामोऽभिरामश्शान्तात्मा हरकोदण्डखण्डनः ।
शरणागतसन्त्राता सर्वायोध्यकमुक्तिदः ॥५७॥

सङ्कर्षणोमदोदग्रो बलवान्मुसलायुधः ।
कृष्णाक्लेशहरः कृष्णो महाव्यसनशान्तिदः ॥५८॥

अङ्गारितोत्तरागर्भप्राणदः पार्थसारथिः ।
गीताचार्यो धराभारहारी षट्पुरमर्दनः ॥५९॥

कल्की विष्णुयशस्सूनुः कलिकालुष्यनाशनः ।
साधुदुष्कृत्परित्राणविनाशविहितोदयः ॥६०॥

वैकुण्ठे परमे तिष्ठन् सुकुमारयुवाकृतिः ।
विश्वोदयस्थितिध्वंससङ्कल्पेन स्वयं प्रभुः ॥६१॥

मदनानां च मदनो मणिकोटीरमानितः ।
मन्दारमालिकापीडो मणिकुण्डलमण्डितः ॥६२॥

सुस्निग्धनीलकुटिलकुन्तलः कोमलाकृतिः ।
सुललाटस्सुतिलकस्सुभ्रूकस्सुकपोलकः ॥६३॥

सिद्धासदसदालोकसुधास्यन्दी रदच्छदः ।
तारकाकोरकाकारविनिर्मितरदच्छदः ॥६४॥

सुधावर्तिपरिस्फूर्तिशोभमानरदच्छदः ।
विष्टब्धोविपुलग्रीवोनिभृतोच्चैश्श्रवास्थितिः ॥६५॥

समावृत्तावदातोरुमुक्ताप्रालम्बभूषणः ।
रत्नाङ्गदी वज्रनिष्की नीलरत्नाङ्ककङ्कणः ॥६६॥

हरिन्मणिगणाबद्धशृङ्खलाकङ्कणोर्मिकः ।
सितोपवीतसंश्लिष्यत्पद्माक्षमणिमालिकः ॥६७॥

श्रीचूर्णवद्द्वादशोर्ध्वपुण्ड्ररेखापरिष्कृतः ।
पट्टतन्तुग्रथनवत्पवित्रनरशोभितः ॥६८॥

पीनवक्षामहास्कन्धो विपुलोरुकटीतटः ।
कौस्तुभी वनमाली च कान्त्याचन्द्रायुतोपमः ॥६९॥

मन्दारमालिकामोदी मञ्जुवागमलच्छविः ।
दिव्यगन्धो दिव्यरसो दिव्यतेजा दिवस्पतिः ॥७०॥

वाचालो वाक्पतिर्वक्ता व्याख्याता वादिनां प्रियः
भक्तहृन्मधुरो वादिजिह्वाभद्राननस्थितिः ॥७१॥

स्मृतिसन्निहितस्निग्धस्सिद्धिदासिद्धिसन्नुतः ।
मूलकन्दोमुकुन्दोग्लौस्स्वयम्भूश्शम्भुरैन्दवः ॥७२॥

इष्टो मनुर्यमः कालकाल्यः कम्बुकलानिधिः ।
कल्यः कामयिता भीमः कातर्यहरणः कृतिः ॥७३॥

सम्प्रियः पक्षणस्तर्कचर्चानिर्धारणादयः ।
व्यतिरेको विवेकश्च प्रवेकः प्रक्रमः क्रमः ॥७४॥

प्रमाणं प्रतिभूः प्राज्ञः प्रज्ञापत्थ्याचधारणः ।
विधिर्विधाता व्यवधिरुद्भवः प्रभवस्थितिः ॥७५॥

विषयस्संशयः पूर्वः पक्षः कक्ष्योपपादकः ।
राद्धान्तो विहितो न्यायफलनिष्पत्तिरुद्भवः ॥७६॥

नानारूपाणि तन्त्राणि व्यवहार्यो व्यवस्थितिः ।
सर्वसाधारणो देवस्साध्वसाधुहिते रतः ॥७७॥

सन्धा सनातनो धर्मो धर्मैरच्यो महात्मभिः ।
छन्दोमयस्त्रिधामात्मा स्वच्छन्दश्छान्दसेडितः ॥७८॥

यज्ञो यज्ञात्मको यष्टा यज्ञाङ्गोऽपघनोहविः ।
समिदाज्यं पुरोडाशश्शाला स्थाली स्रुवस्स्रुचा ॥७९॥

प्राग्वंशो देवयजनः परिधिश्च परिस्तरः ।
वेदिर्विहरणं त्रेता पशुः पाशश्च संस्कृतिः ॥८०॥

विधिर्मन्त्रोऽर्थवादश्च द्रव्यमङ्गं च दैवतम् ।
स्तोत्रं शस्त्रं साम गीतिरुद्गीथस्सर्वसाधनम् ॥८१॥

याज्या पुरोनुवाक्या च सामिधेनी समूहनम् ।
प्रयोक्तारः प्रयोगश्च प्रपञ्चः प्राशुभा श्रमः ॥८२॥

श्रद्धा प्रध्वंसना तुष्टिः पुष्टिः पुण्यं प्रतिभवः ।
सदस्सदस्यसंपातः प्रश्नः प्रतिवचास्थितिः ॥८३॥

प्रायश्चित्तं परिष्कारो धृतिर्निर्वहणं फलम् ।
नियोगो भावना भाव्यं हिरण्यं दक्षिणा नुतिः ॥८४॥
आशीरभ्युपपत्तिश्च तृप्तिस्स्वं शर्म केवलम् ।
पुण्यक्षयः पुनः पातभयं शिक्षाशुगर्दनः ॥८५॥
कार्पण्यं यातनां चिन्ता निर्वेदश्च विहस्तता ।
देहभृत्कर्मसंपातः किञ्चित्कर्मानुकूलकः ॥८६॥
अहेतुकतया प्रेम साम्मुख्यं चाप्यनुग्रहः ।
शुचिश्श्रीमत्कुलजनो नेता सत्त्वाभिमानवान् ॥८७॥
अन्तरायहरः पित्रोरदुष्टाहारदायकः ।
शुद्धाहारानुरूपाङ्गपरिणामविधायकः ॥८८॥
स्रावपातादिविपदां परिहर्ता परायणः ।
शिरःपाण्यादिसन्धाता क्षेमकृत्प्राणदः प्रभुः ॥८९॥
अनिर्घृणश्चाविषमश्शक्तित्रितयदायकः ।
स्वेच्छाप्रसङ्गसंपत्तिव्याजहर्षविशेषवान् ॥९०॥
संवित्सन्धायकस्सर्वजन्मक्लेशस्मृतिप्रदः ।
विवेकशोकवैराग्यभवभीतिविधायकः ॥९१॥
गर्भस्याप्यनुकूलादिनासान्ताध्यवसायदः ।
शुभवैजननोपेतसदनेहोजनिप्रदः ॥९२॥
उत्तमायुःप्रदो ब्रह्मनिष्ठानुग्रहकारकः ।
स्वदासजननिस्तीर्णतद्वंशजपरंपरः ॥९३॥

श्रीवैष्णवोत्पादकृतस्वास्तिकावानिमण्डलः ।
अथर्वणोक्तैकशतमृत्युदूरक्रियापरः ॥९४॥

दयाद्यष्टगुणाधाता तत्तत्संस्कृतिसाधकः ।
मेधाविधाता श्रद्धाकृत् सौस्थ्यदो जामिताहरः ॥९५॥

विघ्नबुद्धिजयी धाता देशकालानुकूल्यकृत् ।
विनेता सत्पथानेता दोषहृच्छुभदस्सखा ॥९६॥

ह्रीदो भीदो रुचिकरो विश्वो विश्वहिते रतः ।
प्रमादहृत्प्राप्तकारी प्रद्युम्नो बलवत्तरः ॥९७॥

साङ्गवेदसमायोक्ता सर्वशास्त्रार्थवित्तिदः ।
ब्रह्मचर्यान्तरायघ्नः प्रियकृद्धितकृत्परः ॥९८॥

चित्तशुद्धिप्रदश्छिन्नाक्षचापल्यः क्षमावहः ।
इन्द्रियार्थारतिच्छेत्ता विद्यैकव्यसनावहः ॥९९॥

आत्मानुकूल्यरुचिकृदखिलार्तिविनाशकः ।
तितीर्षुहृत्त्वरावेदी गुरुसद्भक्तितेजसः ॥१००॥

गुरुसम्बन्धघटको गुरुविश्वासवर्धनः ।
गुरूपासनसन्धाता गुरुप्रेमप्रवर्धनः ॥१०१॥

आचार्याभिमतैर्योक्ता पञ्चसंस्कृतिभावनः ।
गुरूक्तवृत्तिनैश्चल्यसन्धाताऽत्रहितस्थितिः ॥१०२॥

आपन्नाखिलरक्षार्थमाचार्यैकमुपाश्रितः ।
शास्त्रपाणिप्रदानेन भवमग्नान्समुद्धरन् ॥१०३॥

पाञ्चकालिकधर्मेषु नैश्चल्यं प्रतिपादयन् ।
स्वदासाराधनाद्यर्थशुद्धद्रव्यप्रदायकः ॥१०४॥
न्यासविद्याविनिर्वोढा न्यस्तात्मभररक्षकः ।
स्वकैङ्कर्यैकरुचिदस्स्वदास्यप्रेमवर्धनः ॥१०५॥
आचार्यार्थाखिलद्रव्यसम्भृत्यर्पणरोचकः ।
आचार्यस्य स्वसन्निकृष्योज्जीवनैकरुचिप्रदः ॥१०६॥
आगत्ययोजयनासहितैकक्रुनिजागरः ।
ब्रह्मविद्यासमास्वादसुहितः कृतिसंस्कृतिः ॥१०७॥
सत्कारे विषधीदाता तरुण्यां शवबुद्धिदः ।
सभाम्प्रत्यायन्त्यालीं सर्वत्र समबुद्धिदः ॥१०८॥
सम्भाविताशेषदोषहृत्पुनर्न्यासरोचकः ।
महाविश्वाससन्धाता स्थैर्यदाता मदापहः ॥१०९॥
नादव्याख्यास्वसिद्धान्तरक्षाहेतुस्वमन्त्रदः ।
स्वमन्त्रजपसंसिद्धिजङ्घालकवितोदयः ॥११०॥
अदुष्टगुणवत्काव्यबन्धव्यामुग्धचेतनः ।
व्यङ्ग्यप्रधानरसवद्गद्यपद्यादिनिर्मितिः ॥१११॥
स्वभक्तस्तुतिसन्तुष्टो भूयोभक्तिप्रदायकः ।
सात्विकत्यागसम्पन्नसत्कर्मकृद्रतिप्रियः ॥११२॥
निरन्तरानुस्मरणनिजदासैकदास्यकृत् ।
निष्कामवत्सलो नैच्यभावनेषु विनिर्विशन् ॥११३॥

सर्वभूतभवद्भावं सम्पश्यत्सुसदाश्रितः ।
करणत्रयसारूप्यकल्याणपतिसादरः ॥११४॥
कदा कदेति कैङ्कर्यकामिनां शेषिताम्भजन ।
परव्यूहादिनिर्दोषशुभाश्रयपरिग्रहः ॥११५॥
चन्द्रमण्डलमध्यस्थ श्वेताम्भोरुहविष्टरः ।
ज्योत्स्नायमानाङ्गरुचिनिर्धूतान्तर्बहिस्तमाः ॥११६॥
भाव्यो भावयिता भद्रं पारिजातवनालयः ।
क्षीराब्धिमध्यमद्वीपपालकः प्रपितामहः ॥११७॥
निरन्तरनमोवाकशुद्धयाजिहदाश्रयः ।
मुक्तिदश्वेतमृद्रूपश्वेतद्वीपविभावनः ॥११८॥
गरुडाहारितश्वेतमृत्पूतयदुभूधरः ।
भद्राश्ववर्षनिलयो भयहारी शुभाश्रयः ॥११९॥
भद्रश्रीवत्सहाराढ्यः पञ्चरात्रप्रवर्तकः ।
भक्तात्मभावभवनो हार्दोऽङ्गुष्ठप्रमाणवान् ॥१२०॥
स्वदाससत्कृताकृत्ये तन्मित्रारिषु योजयन् ।
प्राणानुत्क्रामयन्नूरीकृतप्रारब्धलोपनः ॥१२१॥
लघ्व्यैव शिक्षयापापमशेषमपि निर्णुदन् ।
त्रिस्थूणक्षोभतो भूतसूक्ष्मैस्सूक्ष्मवपुस्सृजन् ॥१२२॥
निरङ्कुशकृपापूरो नित्यकल्याणकारकः ।
मूर्धन्यनाड्या स्वान्दासान्ब्रह्मरन्ध्रादुदञ्चयन् ॥१२३॥

उपासनपरान्सर्वान् प्रारब्धमनुभावयन् ।
सर्वप्रारब्धदेहान्तेऽप्यन्तिमस्मरणं दिशन् ॥१२४॥
प्रपेयुषां भेजुषां च यमदृष्टिमभावयन् ।
दिव्यदेहप्रदस्सूर्यं द्वारयन्मोक्षमेयुषाम् ॥१२५॥
आतिवाहिकसत्कारानध्वन्यापाद्य मानयन् ।
सार्वान्मुमुजश्शश्वद्राभूमानि प्रदापयन् ॥१२६॥
दुरन्तमायाकान्तारं दूरं योगेन लङ्घयन् ।
स्फायत्सुदर्शविविधवीक्ष्यन्तेनाध्वना नयन् ॥१२७॥
सीमान्तसिन्धुविरजां योगेनोत्तारयन्वशी ।
अमानवस्य देवस्य करं शिरसि धारयन् ॥१२८॥
अनादिवासनां धून्वन् वैकुण्ठात्मा सलोकयन् ।
अहेयमङ्गलोदारतनुदानात्सरूपयन् ॥१२९॥
सूरिजुष्टं सुखैकान्तं परमं पदमापयन् ।
अरारण्यामृताम्भोधी दर्शयन् श्रमनाशनः ॥१३०॥
दिव्योद्यानसरोवापीसरिन्मणिनगाञ्जयन् ।
ऐरम्मदामृतसरोगमयन्सूपबृंहणः ॥१३१॥
अश्वत्थं सोमसवनं प्रापयन्विष्टरश्रवाः ।
दिव्याप्सरस्समानीतब्रह्मालङ्कारदायकः ॥१३२॥
दिव्यवासोऽञ्जनक्षौममाल्यैस्स्वान्बहुमानयन् ।
स्वीयामयोध्यां नगरीं सादरं सम्प्रवेशयन् ॥१३३॥

दासान्दिव्यरसालोकगन्धांसलशरीरयन् ।
स्वदासान्सूरिवर्गेण सस्नेहं बहुमानयन् ॥१३४॥
सूरिसेवोदितानन्दैनैच्यान्स्वानतिशाययन् ।
वाचयन्स्वां नमोवीप्सां कुर्वन्प्रह्वान्कृताञ्जलीन् ॥१३५॥
प्राकारगोपुरारामप्रासादेभ्यः प्रणामयन् ।
इन्द्रप्रजापतिद्वारपालसम्मानमापयन् ॥१३६॥
मालिकाश्चन्महाराजवीथीमध्यं निवासयन् ।
श्रीवैकुण्ठपुरन्ध्रीभिर्नानासत्कारकारकः ॥१३७॥
दिव्यं विमानं गमयन् ब्रह्मकान्त्याभिपूरयन् ।
महानन्दात्मकश्रीमन्मणिमण्डपमापयन् ॥१३८॥
हृष्यत्कुमुदचण्डाद्यैर्विष्वक्सेनान्तिकं नयन् ।
सेनेशचोदितास्थाननायको हेतिनायकः ॥१३९॥
प्रापयन्दिव्यमास्थानं वैनतेयं प्रणामयन् ।
श्रीमत्सुन्दरसूरीन्द्रदिव्यपंक्तिं प्रणामयन् ॥१४०॥
भास्वरासनपर्यङ्कप्रापणेन कृतार्थयन् ।
पर्यङ्कविद्यासंसिद्धसर्ववैभवसङ्गतः ॥१४१॥
स्वात्मानमेव श्रीकान्तं सादरं भूरि दर्शयन् ।
शेषतैकरतिं शेषं शय्यात्मानं प्रणामयन् ॥१४२॥
अनन्ताक्षिद्विसाहस्रसादरालोकपात्रयन् ।
अकुमारयुवाकारं श्रीकान्तं सम्प्रणामयन् ॥१४३॥

अतटानन्दतो हेतो रञ्चयन्किलिकिञ्चितम् ।
दासानत्युत्थितमुहुःकृतिसृष्टिप्रसन्नहृत् ॥१४४॥
श्रियां प्रापस्वयं तातं जीवं पुत्रं प्रहर्षयन् ।
मज्जयन् स्वमुखाम्भोधौ स्वकां कीर्तिरुचिं दिशन् ॥१४५॥
दयार्द्रगङ्गावलनाकृतह्लादैः कृतार्थयन् ।
पर्यङ्कारोहणप्रह्वं समं लक्ष्म्योपपादयन् ॥१४६॥
कस्त्वमित्यनुयुञ्जानो दासोऽस्मीत्युक्तिविस्मितः ।
अपृथक्त्वप्रकारोऽस्मि वाचास्वाश्रितवद्भवन् ॥१४७॥
विदुषां तत्क्रतुनयाद्धयास्यवपुषाभवन् ।
वासुदेवात्मना भूयो भवन्वैकुण्ठनायकः ॥१४८॥
यथा तथैव स्वं रूपं जगन्मोहनमूर्तिमान् ।
द्विमूर्तो बहुमूर्तीश्च आत्मनश्च प्रकाशयन् ॥१४९॥
युगपत्सकलं साक्षात्स्वतः कर्तुं समर्थयन् ।
कवीनामादिशन्नित्यं मुक्तानामादिमः कविः ॥१५०॥
षडर्णमनुनिष्ठानां श्वेतद्वीपस्थितिं दिशन् ।
द्वादशाक्षरनिष्ठानां लोकं सान्तानिकं दिशन् ॥१५१॥
अष्टाक्षरैकनिष्ठानां कार्यं वैकुण्ठमर्पयन् ।
शरणागतिनिष्ठानां साक्षाद्वैकुण्ठमर्पयन् ॥१५२॥
स्वमन्त्रराजनिष्ठानां स्वस्मादतिशयं दिशन् ।
श्रिया गाढोपगूढात्मा भूतधात्रीरुचिं दिशन् ॥१५३॥

नीळाविभूतिर्व्यामुग्धो महाश्वेताश्वमस्तकः ।
त्र्यक्षस्त्रिपुरसंहारी रुद्रस्स्कन्दो विनायकः ॥१५४॥
अजो विरिञ्चो द्रुहिणो व्याप्तमूर्तिरमूर्तिकः ।
असङ्गोऽनन्यधीसङ्गविहङ्गो वैरिभङ्गदः ॥१५५॥
स्वामी स्वं स्वेन सन्तुष्यन् शक्रस्सर्वाधिकस्यदः ।
स्वयंज्योतिस्स्वयंवैद्य श्शूरश्शूरकुलोद्भवः ॥१५६॥
वासवो वसुरण्योग्निर्वासुदेवस्सुहृद्वसुः ।
भूतो भावी भवन्भव्यो विष्णुस्थानस्सनातनः ॥१५७॥
नित्यानुभावो नेदीयान्दवीयान्दुर्विभावनः ।
सनत्कुमारस्सन्धाता सुगन्धिस्सुखदर्शनः ॥१५८॥
तीर्थं तितिक्षुस्तीर्थाङ्घ्रिस्तीर्थस्वादुश्शुभश्शुचिः ।
तीर्थवद्दीधितिस्तिग्मतेजास्तीव्रशनामयः ॥१५९॥
असाहसोऽनपायश्रीस्सहायस्स श्रियै वसन् ।
श्रीमान्नारायणो वासुदेवोऽव्याद्विष्णुरुत्तमः ॥१६०॥
ओम्॥
इतीदं परमं गुह्यं सर्वपापप्रणाशनम ।
वागीशनामसाहस्रं वत्स तेऽभिहितं मया ॥१॥
य इदं शृणुयाद्भक्त्या श्रावयेद्वा स्वयं पठेत् ।
नासौ प्राप्नोति दुरितमिहामुत्र च किञ्चन ॥२॥
तदिदं प्रजपन् स्वामी विद्याधीशो हयाननः ।
क्षत्रियश्चेन्महारुद्रो विक्रमाक्रान्तसर्वभूः ॥३॥

महोदारो महाकीर्तिर्महितो विजयी भवेत् ।
ऊरुजश्चेदुरुयशोधनधान्यसमृद्धिमान् ॥४॥
अशेषभोगसम्भूतो धनाधिपसमो भवेन् ।
शृणुयादेव वृषळस्स्वयं विप्रात्सुपूजितात ॥५॥
महिमानमवाप्नोति महितैश्वर्यभाजनम् ।
श्रीमतो हयशीर्षस्य नाम्नां साहस्रमुत्तमम् ॥६॥
शृण्वन्पठन्नपि नरस्सर्वान्कामानवाप्नुयात् ।
धर्मार्थकामसन्तानभाग्यारोग्योत्तमायुषाम् ॥७॥
प्रापणे परमो हेतुः स्तवराजोऽयमद्भुतः ।
हयग्रीवे परां भक्तिमुद्वहन् य इमं पठेत् ॥८॥
त्रिसन्ध्यं नियतश्शुद्धस्सोऽपवर्गाय कल्पते ।
त्रिः पठन्नामसाहस्रं प्रत्यहं वागधीशितुः ॥९॥
महतीं कीर्तिमाप्नोति निस्सीमां प्रेयसीं प्रियाम् ।
वीर्यं बलं पतित्वं च मेधाश्रद्धाबलोन्नतीः ॥१०॥
सारस्वतसमृद्धिं च भव्यान्भोग्यान्नतान्सुतान् ।
अभिरूपां वधूं साध्वीं सुहृदश्च हितैषिणः ॥११॥
ब्रह्मविद्याप्रवचनैः कालक्षेपं च सन्ततम् ।
हयग्रीवपदाम्भोज सलिलस्यानुकूलतः ॥१२॥
लभेत निर्मलं शान्तो हंसोपासनतत्परः ।
श्रीमत्परमहंसस्य चित्तोल्लासनसद्विधौ ॥१३॥

इदं तु नाम्नां साहस्रमिष्टसाधनमुत्तमम् ।
पापी पापाद्विमुक्तस्स्याद्रोगी रोगाद्विमुच्यते ॥१४॥

बद्धो बन्धाद्विमुच्येत भीते भीतिर्विमुच्यते ।
मुक्तो दरिद्रो दारिद्र्याद्भवेत्पूर्णमनोरथः ॥१५॥

आपन्न आपदा मुक्तो भवत्येव न संशयः ।
हंसार्चनपरो नित्यं हंसार्चनपरायणः ॥१६॥

निर्धूतकल्मषो नित्यं ब्रह्मसायुज्यमाप्नुयात् ।
ये भक्त्या परमे हंसे श्रिया मिथुनिताङ्किते ॥१७॥

जन्मव्याधिजरानाशभयभाजो न ते जनाः ।
आचार्यात्तदिदं स्तोत्रमधिगत्य पठेन्नरः ॥१८॥

तस्येदं कल्पते सिद्ध्यै नान्यथा वत्स काश्यप ।
आचार्यं लक्षणैर्युक्तमन्यं वात्मविदुत्तमम् ॥१९॥

वृत्वाचार्यं सदा भक्त्या सिद्ध्यै तदिदमभ्युयात् ।
स याति परमां विद्यां शकुनिर्ब्रह्महर्षणीम् ॥२०॥

हयास्यनामसाहस्रस्तुतिरंहोविनाशिनी ।
परमो हंस एवादौ प्रणवं ब्रह्मणे दिशत् ॥२१॥

उपादिशत्ततो वेदान् श्रीमान् हयशिरो हरिः ।
तेनासौ स्तवराजो हि हंसाख्यहयगोचरः ॥२२॥

विद्यासाम्राज्यसम्पत्तिमोक्षैकफलसाधनम् ।
सर्ववित्स्वात्मभावेन परमं पदमाप्नुयात् ॥२३॥

न तत्र संशयः कश्चिन्निपुणं परिपश्यति ।
तथापि स्वात्मनि प्रेमसिन्धुसन्धुक्षणक्षमः ॥२४॥
इतीदं नामसाहस्रं सङ्गृहीतं तथोत्तरम् ।
एवं सङ्गृह्य देवेन हयग्रीवेण पालनम् ॥२५॥
स्तोत्ररत्नमिदं दत्तं मह्यं तत् कथितं तव ।
हंसनामसहस्रस्य वैभवं परमाद्भुतम् ॥२६॥
वक्तुं यथावत्कश्शक्तो वर्षकोटिशतैरपि ।
हयास्यः परमो हंसो हरिर्नारायणोऽव्ययः ॥२७॥
कारणं शरणं मृत्युरमृतं चाखिलात्मनाम् ।
सत्यं सत्यं पुनस्सत्यं ध्येयो नारायणो हरिः ॥२८॥
समानमधिकं वेदान्न दैवं केशवात्परम् ।
तत्त्वं विज्ञातुकामानां प्रमाणैस्सर्वतोमुखैः ॥२९॥
तत्त्वं स परमो हंस एक एव जनार्दनः ।
इदं रहस्यं परमं महापातकनाशनम् ॥३०॥
न चाशुश्रूषवे वाच्यं नाभक्ताय कदाचन ।
नाप्यन्यदेवतायापि न वाच्यं नास्तिकाय च ॥३१॥
अधीत्यैतद्गुरुमुखादन्वहं यः पठेन्नरः ।
तद्वंश्या अपि सर्वे स्युस्सम्पत्सारस्वतोन्नताः ॥३२॥
इति हयवदनाननारविन्दान्मधुलहरीव निरर्गळा गळन्ती ।
जगति दशशतीतदीयनाम्नां जयति जडानपि गीर्षु योजयन्ती॥३३॥

॥ इति श्रीहयग्रीवसहस्रनामस्तोत्रं संपूर्णम् ॥

## ॥ श्रीहयग्रीवकवचम् ॥

अस्य श्रीहयग्रीवकवचमहामन्त्रस्य हयग्रीव ऋषिः, अनुष्टुप् छन्दः, श्रीहयग्रीवः परमात्मा देवता, ओं श्रीं वागीश्वराय नम इति बीजं, ओं क्लीं विद्याधराय नम इति शक्तिः, ओं सौं वेदनिधये नमो नम इति कीलकम्, ओं नमो हयग्रीवाय शुक्लवर्णाय विद्यामूर्तये, ओङ्कारायाच्युताय ब्रह्मविद्याप्रदाय स्वाहा । मम हयग्रीवप्रसाद-सिद्ध्यर्थे जपे विनियोगः ॥

ध्यानम्—

कलशाम्बुधिसङ्काशं कमलायतलोचनम् ।
कलानिधिकृतावासं कर्णिकान्तरवासिनम् ॥१॥

ज्ञानमुद्राक्षवलयशङ्खचक्रलसत्करम् ।
भूषाकिरणसन्दोहविराजितदिगन्तरम् ॥२॥

वक्त्राब्जनिर्गतोद्दामवाणीसन्तानशोभितम् ।
देवतासार्वभौमं तं ध्याये दिष्टार्थसिद्धये ॥३॥

ओं॥ हयग्रीवश्शिरः पातु ललाटं चन्द्रमध्यगः ।
शास्त्रदृष्टिर्दृशौ पातु शब्दब्रह्मात्मकश्श्रुती ॥१॥

घ्राणं गन्धात्मकः पातु वदनं यज्ञसम्भवः ।
जिह्वां वागीश्वरः पातु मुकुन्दो दंतसंहतीः ॥२॥

ओष्ठं ब्रह्मात्मकः पातु पातु नारायणोऽधरम् ।
शिवात्मा चिबुकं पातु कपोलौ कमला प्रभुः ॥३॥

विद्यात्मा पीठकं पातु कण्ठं नादात्मको मम ।
भुजौ चतुर्भुजः पातु करौ दैत्येंद्रमर्दनः ॥४॥
ज्ञानात्मा हृदयं पातु विश्वात्मा तु कुचद्वयम् ।
मध्यमं पातु सर्वात्मा पातु पीताम्बरः कटिम् ॥५॥
कुक्षिं कुक्षिस्थविश्वो मे बलिभङ्गो वलित्रयम् ।
नाभिं मे पद्मनाभोऽव्याद्गुह्यं गुह्यार्थबोधकृत् ॥६॥
ऊरू दामोदरः पातु जानुनी मधुसूदनः ।
पातु जङ्घे महाविष्णुर्गुल्फौ पातु जनार्दनः ॥७॥
पादौ त्रिविक्रमः पातु पातु पादाङ्गुळीर्हरिः ।
सर्वाङ्गं सर्वगः पातु पातु रोमाणि केशवः ॥८॥
धातून्नाडीगतः पातु भार्यां लक्ष्मीपतिर्मम ।
पुत्रान्विश्वकुटुम्बी मे पातु बन्धून्सुरेश्वरः ॥९॥
मित्रं मित्रात्मकः पातु वह्न्यात्मा शत्रुसंहतीः ।
प्राणान्वाय्वात्मकः पातु क्षेत्रं विश्वम्भरात्मकः ॥१०॥
वरुणात्मा रसान्पातु व्योमात्मा हृद्गुहान्तरम् ।
दिवारात्रं हृषीकेशः पातु सर्वं जगद्गुरुः ॥११॥
विषमे सङ्कटे चैव पातु क्षेमंकरो मम ।
सच्चिदानन्दरूपो मे ज्ञानं रक्षतु सर्वदा ॥१२॥
प्राच्यां रक्षतु सर्वात्मा आग्नेय्यां ज्ञानदीपकः ।
याम्यां बोधप्रदः पातु नैरृत्यां चिद्घनप्रभः ॥१३॥

विद्यानिधिस्तु वारुण्यां वायव्यां चिन्मयोऽवतु ।
कौबेर्यां वित्तदः पातु ऐशान्यां च जगद्गुरुः ॥१४॥

ऊर्ध्वं पातु जगत्स्वामी पात्वधस्तात्परात्परः ।
रक्षाहीनन्तु यत्स्थानं रक्षत्वखिलनायकः ॥१५॥

एवं न्यस्तशरीरोऽसौ साक्षाद्वागीश्वरो भवेत् ।
आयुरारोग्यमैश्वर्यं सर्वशास्त्रप्रवक्तृताम् ॥१६॥

लभते नात्र सन्देहो हयग्रीवप्रसादतः ।
इतीदं कीर्तितं दिव्यं कवचं देवपूजितम् ॥१७॥

इति हयग्रीवमन्त्रे अथर्वणवेदे मन्त्रखण्डे पूर्वसंहितायां
॥ हयग्रीवकवचं संपूर्णम् ॥

---

## ॥ श्रीहयग्रीवस्तोत्रम् ॥

श्रीमान्वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥

ज्ञानानन्दमयं देवं निर्मलस्फटिकाकृतिम् ।
आधारं सर्वविद्यानां हयग्रीवमुपास्महे ॥१॥

स्वतःसिद्धं शुद्धस्फटिकमणिभूभृत्प्रतिभटं
सुधासध्रीचीभिर्द्युतिभिरवदातत्रिभुवनम् ।
अनन्तैस्त्रय्यन्तैरनुविहितहेषाहलहलं
हताशेषावद्यं हयवदनमीडीमहि महः ॥२॥

समाहारः साम्नां प्रतिपदमृचां धाम यजुषां
लयः प्रत्यूहानां लहरिविततिर्बोधजलधेः ।
कथादर्पक्षुभ्यत्कथककुलकोलाहलभवं
हरत्वन्तर्ध्वान्तं हयवदनहेषाहलहलः ॥३॥

प्राची संध्या काचिदन्तर्निशायाः प्रज्ञादृष्टेरञ्जनश्रीरपूर्वा ।
वक्त्री वेदान्भातु मे वाजिवक्त्रा वागीशाख्या वासुदेवस्य मूर्तिः ॥४॥

विशुद्धविज्ञानघनस्वरूपं विज्ञानविश्राणनबद्धदीक्षम् ।
दयानिधिं देहभृतां शरण्यं देवं हयग्रीवमहं प्रपद्ये ॥५॥

अपौरुषेयैरपि वाक्प्रपञ्चैरद्यापि ते भूतिमदृष्टपाराम् ।
स्तुवन्नहं मुग्ध इति त्वयैव कारुण्यतो नाथ कटाक्षणीयः ॥६॥

दाक्षिण्यरम्या गिरिशस्य मूर्तिर्देवी सरोजासनधर्मपत्नी ।
व्यासादयोऽपि व्यपदेश्यवाचः स्फुरन्ति सर्वे तव शक्तिलेशैः ॥७॥

मन्दोऽभविष्यन्नियतं विरिञ्चो वाचां निधे वञ्चितभागधेयः ।
दैत्यापनीतान्दययैव भूयोऽप्यध्यापयिष्यो निगमान्न चेत्त्वम् ॥८॥

वितर्कडोलां व्यवधूय सत्त्वे बृहस्पतिं वर्तयसे यतस्त्वम् ।
तेनैव देव त्रिदशेश्वराणामस्पृष्टडोलायितमाधिराज्यम् ॥९॥

अग्नौ समिद्धार्चिषि सप्ततन्तोरातस्थिवान्मन्त्रमयं शरीरम् ।
अखण्डसारैर्हविषां प्रदानैराप्यायनं व्योमसदां विधत्से ॥१०॥

यन्मूलमीदृक्प्रतिभाति तत्त्वं या मूलमाम्नायमहाद्रुमाणाम् ।
तत्त्वेन जानन्ति विशुद्धसत्त्वास्तामक्षरामक्षरमातृकां ते ॥११॥

अव्याकृताद्व्याकृतवानसि त्वं नामानि रूपाणि च यानि पूर्वम् ।
शंसन्ति तेषां चरमां प्रतिष्ठां वागीश्वर त्वां त्वदुपज्ञवाचः ॥१२॥

मुग्धेन्दुनिष्यन्दविलोभनीयां मूर्तिं तवानन्दसुधाप्रसूतिम् ।
विपश्चितश्चेतसि भावयन्ते वेलामुदारामिव दुग्धसिन्धोः ॥१३॥

मनोगतं पश्यति यः सदा त्वां मनीषिणां मानसराजहंसम् ।
स्वयं पुरोभावविवादभाजः किंकुर्वते तस्य गिरो यथार्हम् ॥१४॥

अपि क्षणार्धं कलयन्ति ये त्वामाप्लावयन्तं विशदैर्मयूखैः ।
वाचां प्रवाहैरनिवारितैस्ते मन्दाकिनीं मन्दयितुं क्षमन्ते ॥१५॥

स्वामिन्भवद्ध्यानसुधाभिषेकाद्वहन्ति धन्याः पुलकानुबन्धम ।
अलक्षिते क्वापि निरूढमूलमङ्गेष्विवानन्दथुमङ्कुरन्तम् ॥१६॥

स्वामिन्प्रतीचा हृदयेन धन्यास्त्वद्ध्यानचन्द्रोदयवर्धमानम् ।
अमान्तमानन्दपयोधिमन्तः पयोभिरक्ष्णां परिवाहयन्ति ॥१७॥

स्वैरानुभावास्त्वदधीनभावाः समृद्धवीर्यास्त्वदनुग्रहेण ।
विपश्चितो नाथ तरन्ति मायां वैहारिकीं मोहनपिञ्छिकां ते ॥१८॥

प्राङ्निर्मितानां तपसां विपाकाः प्रत्यग्रनिःश्रेयससंपदो मे ।
समेधिषीरंस्तव पादपद्मे संकल्पचिन्तामणयः प्रणामाः ॥१९॥

विलुप्तमूर्धन्यलिपिक्रमाणां सुरेन्द्रचूडापदलालितानाम् ।
त्वदङ्घ्रिराजीवरजःकणानां भूयान्प्रसादो मयि नाथ भूयात् ॥२०॥

परिस्फुरन्नूपुरचित्रभानुप्रकाशनिर्धूततमोऽनुषङ्गाम् ।
पदद्वयीं ते परिचिन्महेऽन्तः प्रबोधराजीवविभातसंध्याम् ॥२१॥

त्वत्किंकरालंकरणोचितानां त्वयैव कल्पान्तरपालितानाम् ।
मञ्जुप्रणादं मणिनूपुरं ते मञ्जूषिकां वेदगिरां प्रतीमः ॥२२॥

संचिन्तयामि प्रतिभादशास्थान्संधुक्षयन्तं समयप्रदीपान् ।
विज्ञानकल्पद्रुमपल्लवाभं व्याख्यानमुद्रामधुरं करं ते ॥२३॥

चित्ते करोमि स्फुरिताक्षमालं सव्येतरं नाथ करं त्वदीयम् ।
ज्ञानामृतोदञ्चनलम्पटानां लीलाघटीयन्त्रमिवाश्रितानाम् ॥२४॥

प्रबोधसिन्धोररुणैः प्रकाशैः प्रवाळसंघातमिवोद्वहन्तम् ।
विभावये देव सपुस्तकं ते वामं करं दक्षिणमाश्रितानाम् ॥२५॥

तमांसि भित्त्वा विशदैर्मयूखैः संप्रीणयन्तं विदुषश्चकोरान् ।
निशामये त्वां नवपुण्डरीके शरद्घने चन्द्रमिव स्फुरन्तम् ॥२६॥

दिशन्तु मे देव सदा त्वदीया दयातरङ्गानुचराः कटाक्षाः ।
श्रोत्रेषु पुंसाममृतं क्षरन्तीं सरस्वतीं संश्रितकामधेनुम् ॥२७॥

विशेषवित्पारिषदेषु नाथ विदग्धगोष्ठीसमराङ्गणेषु ।
जिगीषतो मे कवितार्किकेन्द्रान् जिह्वाग्रसिंहासनमभ्युपेयाः ॥२८॥

त्वां चिन्तयंस्त्वन्मयतां प्रपन्नस्त्वामुद्गृणन् शब्दमयेन धाम्ना ।
स्वामिन्समाजेषु समेधिषीय स्वच्छन्दवादाहवबद्धशूरः ॥२९॥

नानाविधानामगतिः कलानां न चापि तीर्थेषु कृतावतारः ।
ध्रुवं तवानाथपरिग्रहाया नवं नवं पात्रमहं दयायाः ॥३०॥

अकम्पनीयान्यपनीतिभेदैरलंकृषीरन्हृदयं मदीयम् ।
शङ्काकळङ्कापगमोज्ज्वलानि तत्त्वानि सम्यञ्चि तव प्रसादात् ॥३१॥

व्याख्यामुद्रां करसरसिजैः पुस्तकं शङ्खचक्रे
बिभ्रद्भिन्नस्फटिकरुचिरे पुण्डरीके निषण्णः ।
अम्लानश्रीरमृतविशदैरंशुभिः प्लावयन्मा-
माविर्भूयादनघमहिमा मानसे वागधीशः ॥३२॥

वागर्थसिद्धिहेतोः पठत हयग्रीवसंस्तुतिं भक्त्या ।
कवितार्किककेसरिणा वेङ्कटनाथेन विरचितामेताम् ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु श्रीहयग्रीवस्तोत्रं संपूर्णम् ॥

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥

## ॥ अच्चुअसअअम् ॥

## ॥ अच्युतशतकम् ॥

श्रीमान्वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥

णमह तिअसाण णाहं सच्चं दासाण अच्चुअं ठिरजोइम् ।
गलुलणइतडतमालं अहिन्दणअरोसहाअलेक्कगइन्दम् ॥१॥

नमत त्रिदशानां नाथं सत्यं दासानामच्युतं स्थिरज्योतिः ।
गरुडनदीतटतमालमहीन्द्रनगरौषधाचलैकगजेन्द्रम् ॥१॥

किंकरसच्च थुई तुह सअंभुगेहिणिविलासवाहित्तमई ।
फणिआ बालेण मए पञ्जरसुअजम्पिअं व कुणउ पसाअम् ॥२॥

किङ्करसत्य स्तुतिस्तव स्वयंभूगेहिनीविलासव्याहृतमयी ।
फणिता बालेन मया पञ्जरशुकजल्पितमिव करोतु प्रसादम् ॥२॥

मलिणं वि भासिअं मह किंकरसच्च तुह कित्तिजोण्हापसरे ।
लग्गं लहउ विसुद्धिं रच्छासलिलं व तिवहआसोत्तगअम् ॥३॥

मलिनमपि भाषितं मम किङ्करसत्य तव कीर्तिज्योत्स्नाप्रसरे ।
लग्नं लभतां विशुद्धिं रथ्यासलिलमिव त्रिपथगास्रोतोगतम् ॥३॥

तत्थरिणएण ठविआ सोहउ तिअसाण णाह तुज्झ समाए ।
वन्दित्तणमहिआणं मज्झम्मि सुईण बालिसा मज्झ थुई ॥४॥

वस्तरिनयेन स्थापिता शोभतां त्रिदशानां नाथ तव समाजे ।
वन्दित्वमहितानां मध्ये श्रुतीनां बालिशा मम स्तुतिः ॥४॥

अम्हगुरूणं अच्चुअ जीहासीहासणम्मि लद्धपइट्ठो ।
पडिवाइअपरमट्ठो वारेसि अपण्डिअत्तणं अम्हाणम् ॥५॥

अस्मद्गुरूणामच्युत जिह्वासिंहासने लब्धप्रतिष्ठः ।
प्रतिपादितपरमार्थो वारयस्यपण्डितत्वमस्माकम् ॥५॥

हिअएसु देसिआणं जण्हइलहरीसु पुण्णचन्दो व्व फुडो ।
कलुसजलेसु व हंसो कसाअकबुरेसु ठासि अच्चुअ ण खणम् ॥६॥

हृदयेषु देशिकानां जाह्नवीलहरीषु पूर्णचन्द्र इव स्फुटः ।
कलुषजलेष्विव हंसः कषायकर्बुरेषु तिष्ठस्यच्युत न क्षणम् ॥६॥

आअममेत्तपमाणो आगोविअणं पआसणिअमाहप्पो ।
सद्दहिअहिअअसुलहो दूरं मुअसि णअसच्च डोलाअन्ते ॥७॥

आगममात्रप्रमाण आगोपीजनं प्रकाशनिजमाहात्म्यः ।
श्रद्धितहृदयसुलभो दूरं मुञ्चसि नतसत्य दोलायमानान् ॥७॥

सइ खविअसअळहेअं सरणागअसच्च सच्चणाणाणन्दम् ।
उळ्ळङ्घिअतिविहन्तं उवणिसआणं सआइ गाअन्ति तुमम् ॥८॥

सदा क्षपितसकलहेयं शरणागतसत्य सत्यज्ञानानन्दम् ।
उल्लङ्घितत्रिविधान्तमुपनिषदां शतानि गायन्ति त्वाम् ॥८॥

कुणसि ण कीरसि केण वि ठावेसि ण संठविज्जसि अणण्णठिओ ।
हरसि णिहिळं ण हीरसि अहिन्दणअरिन्द अणहजोइफुरन्तो ॥९॥

करोषि न क्रियसे केनापि स्थापयसि न संस्थाप्यसेऽनन्यस्थितः ।
हरसि निखिलं न ह्रियसे अहीन्द्रनगरेन्द्रानघज्योतिस्स्फुरन् ॥९॥

अणुपमिअस्स वि अच्चुअ सत्ती तुह सअलधारणाइपहुत्ता ।
तेण पडिवत्थुपुण्णो सुव्वसि अपडिहअणिअठिई सव्वगओ ॥१०॥

अणुप्रमितस्याप्यच्युत शक्तिस्तव सकलधारणादिप्रभूता ।
तेन प्रतिवस्तुपूर्णः श्रूयसेऽप्रतिहतनियमितिभिः सर्वगतः ॥१०॥

सअळाण धरणणिअमणसामित्तणिअमसंठिओ सव्वतणू ।
सुव्वसि अच्चुअ सव्वो सइ दंसिअकज्जकारणत्तणकवुरो ॥११॥

सकलानां धरणनियमनस्वामित्वनियमसंस्थितः सर्वतनुः ।
श्रूयसेऽच्युत सर्वः सदा दर्शितकार्यकारणत्वकर्बुरः ॥११॥

पुरिसपहाणसरीरी भुवणाणं होसि अच्चुअ उवाआणम् ।
णिअसंकप्पसणाहो वहसि णिमित्तत्तणं वि अब्भुअसत्ती ॥१२॥

पुरुषप्रधानशरीरो भुवनानां भवस्यच्युतोपादानम् ।
निजसंकल्पसनाथो वहसि निमित्तत्वमप्यद्भुतशक्तिः ॥१२॥

विसमगुणङ्करपअरं जळं व सामण्णकारणं तुह केळी ।
णिअकम्मसत्तिणिअआ अच्चुअ बम्हाइठावरन्तविसेसा ॥१३॥

विषमगुणाङ्कुरप्रकरे जलमिव सामान्यकारणं तव केलिः ।
निजकर्मशक्तिनियता अच्युत ब्रह्मादिस्थावरान्तविशेषाः ॥१३॥

**पुरिसा तुज्झ विहूई अनचुअ लच्छीअ इत्थिआसण्णाओ ।**
**णत्थि परं तुज्झाणं सा वि सिरि होइ तुज्झ किं उण इअरम् ॥१४॥**

पुरुषास्तव विभूतिरच्युत लक्ष्म्याः स्त्रिसंज्ञाः ।
नास्ति परं युवतेः सापि श्रीर्भवति तव किं पुनरितरत् ॥१४॥

**ण हु तुह सरिसब्महिअ णाह तुमं एव्व सव्वलोअसरण्णो ।**
**एआव णाणसारं इअे मुणिडं तिअसणाह इअरविइन्ता ॥१५॥**

न खलु तव सदृशाभ्यधिका नाथ त्वमेव सर्वलोकशरण्यः ।
एतावज्ज्ञानसारमिति ज्ञातुं त्रिदशनाथेतरविचिन्ता ॥१५॥

**भाइ फणिन्दउराहिव पडिवालन्तेसु पाअडवहुत्तफला ।**
**अवि दुहिणप्पमुहेहिं आणत्ती तुह अलङ्घणिज्जपहावा ॥१६॥**

भाति फणीन्द्रपुराधिप प्रतिपालयत्सु प्रकटप्रभूतफला ।
अपि द्रुहिणप्रमुखैराज्ञप्तिस्तवालङ्घनीयप्रभावा ॥१६॥

**णिअमविहीणं पउत्ती सव्वाण वि दाससच्च उद्दिसिअ तुमम् ।**
**सद्धणिमन्तिअबम्हणसमाहिसिद्धं लहन्ति तिअसा भुत्तिम् ॥१७॥**

नियमविधीनां प्रवृत्तिः सर्वेषामपि दाससत्योद्दिश्य त्वाम् ।
श्राद्धनिमन्त्रितब्राह्मणसमाधिसिद्धां लभन्ते त्रिदशा भुक्तिम् ॥१७॥

**आरज्झतिअसविलए अच्चुअ णिच्चं ण ठासि जइ णाम तुमम् ।**
**कम्माण कप्पिआणं काहिइ कप्पांतरेसु को णिव्वेसम् ॥१८॥**

आराध्यत्रिदशविलयेऽच्युत नित्यं न तिष्ठसि यदि नाम त्वम् ।
कर्मणां कल्पितानां करिष्यति कल्पान्तरेषु को निर्वेशम् ॥१८॥

22

कप्पसि कंखिआइं कप्पदुमो व्व सिरिकञ्चणलआसहिओ ।
णअसच्च सइफलाइं णिअच्छाहिणिहिण्णणिच्चतावतिहुवणो ॥१९॥

कल्पयसि काङ्क्षितानि कल्पद्रुम इव श्रीकाञ्चनलतासहितः ।
नतसत्य सदाफलानि निजच्छायानिर्भिन्ननित्यतापत्रिभुवनः ॥१९॥

सअलाअमाणं णिट्ठा सअलसुराणं वि अंतरो अप्पाणो ।
सअलफलाणं पसूई सअलजणाणं समो खु णअसच्च तुमम ॥२०॥

सकलागमानां निष्ठा सकलसुराणामभ्यन्तर आत्मा ।
सकलफलानां प्रसूतिः सकलजनानां समः खलु नतसत्य त्वम् ॥२०॥

इअ सव्वाणं समाणो सच्चठिओ दाससच्च सइ परिपुण्णो ।
कहं वहसि पक्खवाअं पण्डवमुहेसु पेसणं वि सहंतो ॥२१॥

इति सर्वेषां समानः सत्यस्थितो दाससत्य सदा परिपूर्णः ।
कथं वहसि पक्षपातं पाण्डवप्रमुखेषु प्रेषणमपि सहमानः ॥२१॥

विसमम्मि कम्ममग्गे विपरिक्खलंताणं विब्भलिअकरणाणम् ।
णाह णिहिलाण अण्णो णत्थि तुमाहि णअसच्च हत्थालम्बो ॥२२॥

विषमे कर्ममार्गे विपरिस्खलतां विह्वलितकरणानाम् ।
नाथ निखिलानामन्यो नास्ति त्वन्नतसत्य हस्तालम्बः ॥२२॥

णाणस्स को अविसओ अच्चुअ कलुणाइ तुज्झ दुरठिओ ।
सत्तीअ को अइभरो ता खु उवाओ तुमं चिअ सअं सिद्धो ॥२३॥

ज्ञानस्य कोऽविषयोऽच्युत करुणायास्ताव को दूरस्थितः ।
शक्तेः कोऽतिभरस्तस्मात्खलूपायस्त्वमेव स्वयं सिद्धः ॥२३॥

संकप्पकण्णहारो किंकरसच्च भवसाअरे अइगहिरे ।
अणहो तुमं खु पोओ अप्पाण किवासमीरणेण पउत्तो ॥२४॥

संकल्पकर्णधारः किङ्करसत्य भवसागरेऽतिगभीरे ।
अनघस्त्वं खलु पोत आत्मनां कृपासमीरणेन प्रयुक्तः ॥२४॥

अच्चुअ ण देन्ति मोक्खं ईसरभावेण इअरसुरा ।
रत्तिं परिवट्टेउं लक्खं आळेक्खदिणअराण वि णखमम् ॥२५॥

अच्युत न ददति मोक्षमीश्वरभावेन भाविता इतरसुराः ।
रात्रिं परिवर्तयितुं लक्षमालेख्यदिनकराणामपि न क्षमम् ॥२५॥

अमअरससाअरस्स व अहिन्दउरणाह णिम्मलमहग्घाइम् ।
तीरन्ति ण विगणेउं अणण्णसुळहाइ तुज्झ गुणरअणाइम् ॥२६॥

अमृतरससागरस्येवाहीन्द्रपुरनाथ निर्मलमहार्घाणि ।
तीर्यन्ते न विगणयितुमनन्यसुलभानि तव गुणरत्नानि ॥२६॥

भूसिअसुइसीमन्तो भुअइन्दउरेस सव्वगुणसीमन्तो ।
खविअतिसामळमोहो मुणीणं हिअएसु फुरसि सामळमोहो ॥२७॥

भूषितश्रुतिसीमन्तो भुजगेन्द्रपुरेश सर्वगुणसीमन्तः ।
क्षपिततृषामलमोहो मुनीनां हृदयेषु स्फुरसि श्यामलमयूखः ॥२७॥

सुहलक्खणसिरिवच्छो सोहसि णिम्मुत्तविरहखणसिरिवच्छो ।
रणदेवणसविहगओ उद्धणगलुलणइतीरवणसविहगओ ॥२८॥

शुभलक्षणश्रीवत्सः शोभसे निर्मुक्तविरहक्षणश्रीवत्सः ।
रणदेवनसाविहगः उद्भटगरुडनदीतीरवनसविधगतः ॥२८॥

अकुमारजोव्वणठिअं अहिन्दउरणाह अहिमअं अणुरूवम् ।
णिच्चं सहावसिद्धं सुव्वइ सूरिमहिअं सुहं तुह रूवम् ॥२९॥

अकुमारयौवनस्थितमहीन्द्रपुरनाथाभिमतमनुरूपम् ।
नित्यं स्वभावसिद्धं श्रूयते भूरिमहितं सुखं तव रूपम् ॥२९॥

तिउणं तस्स विआरा अच्चुअ पुरिसोत्ति आअमगणिज्जन्ता ।
अत्था तुह खु समत्ता परम्मि रूपम्मि भूषणत्थसरूवा ॥३०॥

त्रिगुणं तस्य विकारा अच्युत पुरुष इत्यागमगण्यमानाः ।
अर्थास्तव खलु समस्ताः परस्मिन्रूपे भूषणास्त्रस्वरूपाः ॥३०॥

णिन्ति तुमाओ अच्चुअ णिक्खविअविवक्खणिठ्ठुरपरक्कमणा ।
संठविअपरमधम्मा साहुपरित्ताणसप्फला ओआरा ॥३१॥

निर्यान्ति त्वत्तोऽच्युत निक्षिपितविपक्षनिष्ठुरपराक्रमणाः ।
संस्थापितपरमधर्माः साधुपरित्राणसफला अवताराः ॥३१॥

हरिमणिसरिच्छणिअरुइहरिआअन्तभुअइन्दवुरपेरन्तो ।
काले दासजणाणं कण्ह घणो होसि दिण्णकालुण्णरसो ॥३२॥

हरिमणिसदृशनिजरुचिहरितायमानभुजगेन्द्रपुरपर्यन्तः ।
काले दासजनानां कृष्ण घनो भवसि दत्तकारुण्यरसः ॥३२॥

गलुलणइकच्छरण्णे लक्खिज्जसि लच्छिमहिकरेणुमणहरो ।
दीसन्तबहुळदाणो दिसागइन्दो व्व खुडिअदणुइन्ददुमो ॥३३॥

गरुडनदीकच्छारण्ये लक्ष्यसे लक्ष्मीमहीकरेणुमनोहरः ।
दृश्यमानबहुलदानो दिशागजेन्द्र इव खण्डितदनुजेन्द्रद्रुमः ॥३३॥

मुहचन्दमोळिदिणअरमज्झठिओ तुज्झ चिहुरभारन्धारो ।
अघडिअघडणासत्तिं सच्चं ठावेइ दाससच्च समग्गम् ॥३४॥

मुखचन्द्रमौलिदिनकरमध्यस्थितस्तव चिकुरभारान्धकारः ।
अघटितघटनाशक्तिं सत्यं स्थापयति दाससत्य समग्राम् ॥३४॥

परिहसिअपुण्णचंदं पदुमसरिच्छप्पसण्णलोअणजुअळम् ।
संकप्पिअदुरिआइ वि सम्हरिअं हरइ दाससच्च तव मुखम् ॥

परिहसितपूर्णचन्द्रं पद्मसदृक्षप्रसन्नलोचनयुगलम् ।
संकल्पितदुरितान्यपि संस्मृतं हरति दाससत्य तव मुखम् ॥३५॥

माहप्पं तुह महिअं मङ्गळिअं तुळसिकोत्थुहप्पमुहाणम् ।
अच्चुअ ठिरवणमाळं वच्छं दंसेइ लच्छिलक्खणसुहअम् ॥३६॥

माहात्म्यं तव महितं माङ्गलिकं तुलसीकौस्तुभप्रमुखाणाम् ।
अच्युत स्थिरवनमाले वत्सं दर्शयति लक्ष्मीलक्षणसुभगम् ॥३६॥

णिव्विसइ णिच्छतावो देवअणो देवणाअअ विहिप्पमुहो ।
सीअळसन्तबहुत्तं छाहिं तुह विउळबाहुकप्पदुमाणम् ॥३७॥

निर्विशति नित्यतापो देवजनो देवनायक विधिप्रमुखः ।
शीतळशान्तप्रभूतां छायां तव विपुलबाहुकल्पद्रुमाणाम् ॥३७॥

संकप्पचन्दखोहिअतिउणोअहिविउळबुब्बुअप्पअरेहिम् ।
बम्हण्डेहि वि भरिअं किंकरसच्च तुह कीस णु किसं उअरम् ॥

संकल्पचन्द्रक्षोभितत्रिगुणोदधिविमलबुद्बुदप्रकरैः ।
ब्रह्माण्डैरपि भरितं किंकरसत्य तव कस्मान्नु कृशमुदरम् ॥३८॥

णाहिरुहं तुह णळिणं भुअईसरणअरणाह सोहइ सुहअम् ।
मज्झठिअबम्हभमरं वच्छासणलच्छिपाअवीढमरिच्छम् ॥३९॥

नाभिरुहं तव नळिनं भुजगेश्वरनगरनाथ शोभते सुभगम् ।
मध्यस्थितब्रह्मभ्रमरं वत्सासनलक्ष्मीपादपीठसदृक्षम् ॥३९॥

दिढपीडिअमहुकइढवसोणिअपडलपरिपाडलम्बरघडिआ ।
राअइ अच्चुअ मुहला रइणाहगइन्दसिंखळा तुह रसणा ॥४०॥

दृढपीडितमधुकैटभशोणितपटलपरिपाटलाम्बरघटिता ।
राजत्यच्युत मुखरा रतिनाथगजेन्द्रशृङ्खला तव रशना ॥४०॥

दासाणं सच्च दीसइ दाणववीराणं दीहणिद्दासअणम् ।
तुह उअरट्ठिअतिहुवणपासाअक्खम्भसच्छअं ऊरुजुअम ॥४१॥

दासानां सत्य दृश्यते दानववीराणां दीर्घनिद्राशयनम् ।
तवोदरस्थितत्रिभुवनप्रासादस्तम्भसच्छायमूरुयुगम् ॥४१॥

जाणुमणिदप्पणेण अ जङ्घामरगअकळाइआए अ धणिआ ।
अच्चुअ ण मुअइ कन्ती लच्छी व सरोअलञ्छणे तुह चळणे ॥

जानुमणिदर्पणेन च जङ्घामरकतकलाचिकया च धन्या ।
अच्युत न मुञ्चति कान्तिर्लक्ष्मीरिवसरोजलाच्छनौ तव चरणौ ॥४२॥

सुइसीमन्तपसूणं सोहइ णअसच्च तुज्झ सव्वसरण्णम ।
कमणखणजणिअसुरणइपसमिअतेल्लोक्कपाअअं पअपउमम ॥४३॥

श्रुतिसीमन्तप्रसूनं शोभते नतसत्य तव सर्वशरण्यम् ।
क्रमणक्षणजनितसुरनदीप्रशमितत्रैलोक्यपातकं पदपद्मम् ॥४३॥

इअ तिहुवणेक्कमूळं आसादेंति अणहा अमअसाउरसम् ।
ओसहिमहिहरपासे उइअं तुं ओसहं व दासरुआणम् ॥४४॥

इति त्रिभुवनैकमूलमास्वादयन्त्यनघ अमृतस्वादुरसम् ।
ओषधिमहीधरपार्श्वे उदितं त्वामौषधमिव दासरुजाम् ॥४४॥

सिद्धञ्जणं व सामं तुज्झ तणुं णिअविलोअणेसु खिवंता ।
अच्चुअ लच्छिणिवासं णिच्चणिऊढं णिहिं व पेच्छंति तुमम् ॥

सिद्धाञ्जनमिव श्यामां तव तनुं निजविलोचनेषु क्षिपन्तः ।
अच्युत लक्ष्मीनिवासं नित्यनिगूढं निधिमिव पश्यन्ति त्वाम् ॥४५॥

विहडिअणिविडंधारो घडंतजोई तिलोअएक्कगहवई ।
दिट्ठिगओ जाण तुमं णमंतसच्च ण हु ताण मोहतिआमा ॥४६॥

विघटितनिबिडान्धकारो घटमानज्योतिस्त्रिलोकैकग्रहपतिः ।
दृष्टिगतो येषां त्वं नमतसत्य न खलु तेषां मोहत्रियामा ॥४६॥

विसअरसम्मि सुवंता विआरजणणेहि विअ णहु विकीरंता ।
जीवंतमुक्कसरिसा अच्युत दीसंति पावणा तुह भत्ता ॥४७॥

विषयरसे स्वपन्तो विकारजननैरपि च न खलु विक्रियमाणाः ।
जीवन्मुक्तसदृशा अच्युत दृश्यन्ते पावनास्तव भक्ताः ॥४७॥

गन्धव्वणअरसिविणअसारिच्छाणं सिरीणं वणसरिआणम् ।
ण सुमरइ तुह्मगहिओ सरणागअसच्च सइमओ जीअगओ ॥४८॥

गन्धर्वनगरस्वप्नसदृक्षाणां श्रियां वनसरिताम् ।
न स्मरति त्वद्गृहीतः शरणागतसत्य सदामदो जीवगजः ॥४८॥

ण महेन्ति णाणवन्ता तरङ्गडिण्डीरबुब्बुअसारिच्छाइम् ।
विहिपमुहाण पआइं घणकन्दळिकन्दकअळिखम्भसमाइम ॥४९॥

न महयन्ति ज्ञानवन्तस्तरङ्गडिण्डीरबुद्बुदसदृक्षाणि ।
विधिप्रमुखाणां पदानि घनकन्दलिकन्दकदलीस्तम्भसमानि ॥४९॥

पुळइअसपरसहावा पुरिसा घेत्तूण सामिणो तुह सीळम् ।
णाह णअसच्च सघिणा ण मुअन्ति कहं वि सव्वजणसोहद्दम् ॥

दृष्टस्वपरस्वभावाः पुरुषा गृहीत्वा स्वामिनस्तव शीलम् ।
नाथ नतसत्य सघृणा न मुञ्चन्ति कथमपि सर्वजनसौहार्दम् ॥५०॥

माणमएसामच्छरडम्भासूआभआमरिसलोहमुहा ।
दीसन्ति ण मोहसुआ दोसा दासाणं सच्च तुह भत्ताणम ॥५१॥

मानमदेर्ष्यामत्सरदम्भासूयाभयामर्षलोभमुखाः ।
दृश्यन्ते न मोहसुता दोषा दासानां सत्य तव भक्तानाम् ॥५१॥

जाणं मई इअरमुहो कालो सअलो वि ताण कलिवित्थारो ।
जे तुह पअम्मि पवणा णत्थि कली णाअवइ ण अरवइताणम् ॥५२॥

येषां मतिरितरमुखी कालः सकलोऽपि तेषां कलिविस्तारः ।
ये तव पदे प्रवणा नास्ति कलिर्नागपतिनगरपते तेषाम ॥५२॥

अच्चासण्णविणासा अच्चुअ पेच्छन्ति तावए भत्तअणे ।
मोक्खरुईणं सुमग्गे मूढा दिअहअरमण्डलम्मि व छिद्दम् ॥५३॥

अत्यासन्नविनाशा अच्युत पश्यन्ति तावके भक्तजने ।
मोक्षरुचीनां सुमार्गे मूढा दिवसकरमण्डल इव च्छिद्रम् ॥५३॥

णितुडिअदुम्माणघणा णिम्मलगुणघडिअतारआपब्भारा ।
भासन्तभत्तिजोण्हा णअसच्छ फुरन्ति णहणिहा तुह भत्ता ॥५४॥

निस्त्रुटितदुर्मानघना निर्मलगुणघटिततारकाप्राग्भाराः ।
भासमानभक्तिज्योत्स्ना नतसत्य स्फुरन्ति नभोनिभास्तव भक्ताः ॥५४॥

णहु जमविसअम्मि गई णअसच्च पअम्बुअं तुह पवण्णाणम् ।
खलिआण वि जहजोग्गं सिक्खा सुद्धन्तकिंकराण व लहुई ॥५५॥

न खलु यमविषये गतिर्नतसत्य पदाम्बुजं तव प्रपन्नानाम् ।
स्खलितानामपि यथायोग्यं शिक्षा शुद्धान्तकिंकराणामिव लघ्वी ॥५५॥

कम्मगइदोसदुहिआ कअन्तभिउडीभुअङ्गिदंसणतत्था ।
अञ्चन्ति तुज्झ चळणे अच्चुअ पब्भट्ठवम्महरसासाआ ॥५६॥

कर्मगतिदोषदुःखिताः कृतान्तभ्रुकुटीभुजंगीदर्शनत्रस्ताः ।
अर्चन्ति तव चरणावच्युत प्रभ्रष्टमन्मथरसास्वादाः ॥५६॥

आलग्गइ तुह चळणे अच्चुअ विहिणा वि अच्चणा आअरिआ ।
जा एक्कन्तिपउत्ता सेसं व सअं सिरेण पडिगेण्हासि तम् ॥५७॥

आलगति तव चरणावच्युत विधिनाप्यर्चनाचरिता ।
यैकान्तिप्रयुक्ता शेषामिव स्वयं शिरसा प्रतिगृह्णासि ताम् ॥५७॥

**तुह मुहजोण्हादाविअमाणससिअन्तपवहसंणिहबाहे ।**
**अच्चुअ ण मुअसि भत्ते कळम्बगोळणिहकण्टअन्तणिअङ्गे ॥५८॥**

तव मुखज्योत्स्नाद्रावितमानसशशिकान्तप्रवाहसंनिभबाष्पान् ।
अच्युत न मुञ्चसि भक्तान्कदम्बगोळनिभकण्टकायमाननिजाङ्गान् ॥५८॥

**सव्वेसु वि णिव्वेरा सरणागअसच्च गहिअसासअधम्मा ।**
**गअसङ्गा तुह भत्ता जन्ति तुमं एव्व दुल्लहं इअरेहिम् ॥५९॥**

सर्वेष्वपि निर्वैराः शरणागतसत्य गृहीतशाश्वतधर्माः ।
गतसङ्गास्तव भक्ता यान्ति त्वामेव दुर्लभमितरैः ॥५९॥

**अहिवइणअरिन्द तुमं आसण्णं वि गअणं व सइ दुग्गेज्झम् ।**
**विसएसु विलग्गन्ता तूरन्ता वि ण लहन्ति डोळन्तमणा ॥६०॥**

अहिपतिनगेन्द्र त्वामासन्नमपि गगनमिव सदा दुर्ग्रहम् ।
विषयेषु विलगन्तस्त्वरमाणा अपि न लभन्ते डोळायमानमनसः ॥६०॥

**भत्ता तावअसेवारसभरिआ सअलरक्खणूसुअरुइणा ।**
**करणाइ धरन्ति चिरं कङ्खिअमोक्खा वि अच्चुअ तुए ठविआ ॥**

भक्तास्तावकसेवारसभरिताः सकलरक्षणोत्सुकरुचिना ।
करणानि धरन्ति चिरं काङ्क्षितमोक्षा अप्यच्युत त्वया स्थापिताः ॥६१॥

**ठिरगुणगिरिजणिएहिं संतारेसि णअसच्च णिअभत्तेहिम् ।**
**जम्मपरिवाडिजलहिं जङ्गमठिरसेउदंसणिज्जेहि जणे ॥६२॥**

स्थिरगुणगिरिजनितैः संतारयसि नतसत्य निजभक्तैः ।
जन्मपरिपाटीजलधिं जङ्गमस्थिरसेतुदर्शनीयैर्जनान् ॥६२॥

पसमिअभवन्तरभआ पत्तं पत्तं हिअं ति परिपेच्छन्ता ।
भावेन्ति तुज्झ भत्ता पिआइहिं व णअसच्च पच्छिमदिअहम् ॥

प्रशमितभवान्तरभयाः प्राप्तं प्राप्तं हितमिति परिपश्यन्तः ।
भावयन्ति तव भक्ताः प्रियातिथिमिव नतसत्य पश्चिमदिवसम् ॥६३॥

पअडातिमिरम्मि भुवणे पत्तपइट्ठाविअपरमणाणपईवा ।
णिज्जन्ति अच्चुअ तुए णिअं पअं सइ सअंपहं कअकज्जा ॥६४॥

प्रकटतिमिरे भुवने पात्रप्रतिष्ठापितपरमज्ञानप्रदीपः ।
नीयन्तेऽच्युत त्वया निजं पदं सदा स्वयंप्रभं कृतकार्याः ॥६४॥

दिढतिव्वभत्तिणअणा परिपेच्छन्ता अहिन्दउरणाह तुमम् ।
पत्ता तुह साउज्जं पन्ति पूरेन्ति पण्णइन्दमुहाणम् ॥६५॥

दृढतीव्रभक्तिनयनाः परिपश्यन्तोऽहीन्द्रपुरनाथ त्वाम् ।
प्राप्तास्तव सायुज्यं पङ्क्तिं पूरयन्ति पन्नगेन्द्रमुखानाम् ॥६५॥

संणअसुळहं अच्चुअ समाहिसोवाणमाविळम्बविमुहिआ ।
सरणं गन्तूण तुमं मुत्ता मुउउन्दखत्तबन्धुप्पमुहा ॥६६॥

संनतसुलभमच्युत समाधिसोपाणकमविळम्बविमुखिताः ।
शरणं गत्वा त्वां मुक्ता मुचुकुन्दक्षत्रबन्धुप्रमुखाः ॥६६॥

देवाण पसुसमाणो जन्तूण गन्तूण देवणाह तुह पअम् ।
तेहिं चिअ सव्वेहिं संसरमाणेहिं होइ सइ दिण्णवळी ॥६७॥

देवानां पशुसमानो जन्तुर्गत्वा देवनाथ तव पदम् ।
तैरेव सर्वैः संसरमानैर्भवति सदा दत्तबलिः ॥६७॥

मोहन्धारमहण्णवमुच्छिअमाआमहारअणिपच्चूहो ।
अच्चुअ तुज्झ कडक्खो विमुत्तिपत्थाणपुढमपरिअरबन्धो ॥६८॥

मोहान्धकारमहार्णवमूर्छितमायामहारजनिप्रत्यूषः ।
अच्युत तव कटाक्षो विमुक्तिप्रस्थानप्रथमपरिकरबन्धः ॥६८॥

**मोक्खसुहरुक्खमूळं मोहजराउरमहारसाअणपवरम् ।**
**सअलकुसलेक्कखेत्तं किंकरसच्च तुह कित्तणं अमिअणिहम् ॥६९॥**

मोक्षसुखवृक्षमूलं मोहजरातुरमहायनप्रवरम् ।
सकलकुशलैकक्षेत्रं किंकरसत्य तव कीर्तनममृतनिभम् ॥६९॥

**णत्थि अहिक्कमणासो विच्छेअम्मि वि ण पच्चवाअपसङ्गो ।**
**सप्पा वि तुह सपज्जा रक्खइ अच्चुअ महत्तरादु भआदो ॥७०॥**

नास्त्यभिक्रमनाशो विच्छेदेऽपि न प्रत्यवायप्रसङ्गः।
स्वल्पापि तव सपर्या रक्षत्यच्युत महतो भयात् ॥७०॥

**अपसाए अपसण्णा तुज्झ पसाअम्मि दासस्स पसण्णा ।**
**आरज्झा होन्ति परे किं तेहि पसङ्गलम्भिअपहावेहिम् ॥७१॥**

अप्रसादे अप्रसन्नास्तव प्रसादे दाससत्य प्रसन्नाः ।
आराध्या भवन्ति परे किं तैः प्रसङ्गलम्भितप्रभावैः ॥७१॥

**इअरतिअसा पसण्णा किंकरसच्च मह किं णु काहिन्ति हिअम् ।**
**णीहारघणसएहिं णहु पूरिज्जइ कहं वि चाअअतिण्हा ॥७२॥**

इतरत्रिदशाः प्रसन्नाः किंकरसत्य मम किं नु करिष्यन्ति हितम् ।
नीहारघनशतैर्न खलु पूर्यते कथमपि चातकतृष्णा ॥७२॥

**अणुगअसुहमिअतिण्हा अच्चुअ वीसमइ तुज्झ मामअतिण्हा ।**
**पवहेसु पसरिआए आसिअपवहन्तघणकिवासरिआए ॥७३॥**

अनुगतसुखमृगतृष्णा अच्युत विश्राम्यति तव मामकतृष्णा ।
प्रवाहेषु प्रसृतायाः आश्रितप्रवहद्घनकृपासरितः ॥७३॥

विअलसअलङ्गविसमे धम्मेणअसञ्च धअणिहे धारेन्तो ।
कन्तारपन्थओ विअ खळन्तचलणो म्हि काअरविसीरन्तो ॥७४॥

विकलसकलाङ्गविषमान्धर्मोन्नतसत्य ध्वजनिभान्धारयन् ।
कान्तारपान्थक इव स्खलच्चरणोऽस्मि कातरविशीर्यमाणः ॥७४॥

ठिरधम्मवम्मथइअं अधम्मपवणाण अग्गखन्धपउत्तम् ।
अघडन्तविपडिसारं अच्चुअ मं हससि णूणं लच्छिसमक्खम् ॥

स्थिरधर्मवर्मस्थगितमधर्मप्रवणानामग्रजन्यप्रवृत्तम् ।
अघटमानविप्रतीसारमच्युत मां हससि नूनं लक्ष्मीसमक्षम् ॥७५॥

तरिउं अच्चुअ दुरिअं इमम्मि देहम्मि एक्कदिअहे वि कअम् ।
काळो जळं ण सअळो कलुणाए तुज्झ पुण्णपत्तं म्हि इमो ॥७६॥

तरितुमच्युत दुरितमस्मिन्देह एकदिवसेऽपि कृतम् ।
कालोऽलं न सकलः करुणायास्तव पूर्णपात्रमस्म्ययम् ॥७६॥

अच्चुअ तुज्झ गुणाणं मह दोसाणं वि णत्थि कुत्थ वि गणणा ।
तह वि अजो पुढमाणं अहिअं लीणाण होइ णहु दोब्बळ्ळम् ॥

अच्युत तव गुणानां मम दोषाणामपि नास्ति कुत्रापि गणना ।
तथापि जयः प्रथमानामधिकं लीनानां भवति न खलु दौर्बल्यम् ॥७७॥

रत्तिं दिअहं अच्चुअ तुडिअपडन्ताइ आउदुमखण्डाइम् ।
दठ्ठूण वि दरिअमणं बालं एण्हिं वि भरसु मं अपमत्तो ॥७८॥

रात्रिं दिवसमच्युत त्रुटितपतन्त्यायुर्द्रुमखण्डानि ।
दृष्ट्वापि दृप्तमनसं बालमिदानीमपि भरस्व मामप्रमत्तः ॥७८॥

णीसाससंकणिज्जे देहे पडळन्तसळिलबिंदुसरिच्छे ।
मुणासि णअसच्च तुं मं जरंतकरणे वि दीहजोव्वणतिण्हम् ॥७९॥

निश्वासशङ्कनीये देहे पटलान्तसलिलबिन्दुमहत्त्वे ।
जानासि नतसत्य त्वं मां जरत्करणेऽपि दीर्घयौवनतृष्णाम् ॥७९॥

अमुणिअणिअकाअव्वं तिळगमुणिएसु मं वि पडिऊळगइम् ।
इअ णिअसहाववियळिअं हाउं दासाण सच्च णहु तुह जुत्तम् ॥८०॥

अज्ञातनिजकर्तव्यं तिलाग्रज्ञातेषु मामपि प्रतिकूलगतिम् ।
इति निजस्वभावविगलितं हातुं दासानां सत्य न खलु तव युक्तम् ॥८०॥

कोहं किं करणिज्जं परिहरणिज्जं वि किंति जाणसि सव्वम् ।
तीरसि अ तं हिअं महे तिअसेसर कुणसु णिअहिअअणिक्खत्तम् ॥

कोऽहं किं करणीयं परिहरणीयमपि किमिति जानासि सर्वम् ।
शक्नोषि च तद्धितं मम विदशेश्वर कुरुष्व निजहृदयनिक्षिप्तम् ॥८१॥

एण्हि उवरिं वि इमो गुणगहिओ दारुपुत्तओ व परवसो ।
तस्स वि मह तिअसेसर तीसु वि करणेसु होसु सुहसंकप्पो ॥८२॥

इदानीमुपर्यप्ययं गुणगृहीतो दारुपुत्रक इव परवशः ।
तस्यापि मम त्रिदशेश्वर त्रिष्वपि करणेषु भव सुखसंकल्पः ॥८२॥

णिअकम्मणिअळजुअळं अच्चुअ काऊण मह पिअप्पिअवग्गे ।
काहे घोरकळेवरकाराघरकुहरणिग्गअं काहिसि मम् ॥८३॥

निजकर्मनिगळयुगळमच्युत कृत्वा मम प्रियाप्रियवर्गे ।
कदा घोरकळेबरकारागृहकुहरनिर्गतं करिष्यसि माम् ॥८३॥

हद्दे तुमम्मि कइआ विस्समिअं बम्हधमणिमग्गणिहिन्तम् ।
दिणअरदिण्णग्गकरं अच्चुअ दच्छिहिसि दइअडिम्भं विअ मम् ॥

हार्दे त्वयि कदा विश्रान्तं ब्रह्मधमनिमार्गगमिष्यन्तम् ।
दिनकरदत्ताग्रकरमच्युत द्रक्ष्यसि दयितडिम्भमिव माम् ॥८४॥

काहे अमाणवन्ता अग्गिमुहा आइवाहिआ तुह पुरिसा ।
अइलङ्घेहिन्ति मिमं अच्चुअ तमगहणतिउगमरुकन्तारम् ॥८५॥

कदा अमानवान्ता अग्निमुखा आतिवाहिकास्त्वत्पुरुषाः ।
अतिलङ्घयिष्यन्ति मामच्युत तमोगहनत्रिगुणमरुकान्तारम् ॥८५॥

लङ्घिअ विरआसरिअं लम्भिअसइसुद्धसत्तमअसोम्मतणुम् ।
कअबम्हलङ्कारं कहिसि णअसच्च किंकरं काहे मम् ॥८६॥

लङ्घितविरजासरितं लम्भितसदाशुद्धसत्त्वमयसौम्यतनुम् ।
कृतब्रह्मालङ्कारं करिष्यसि नतसत्य किंकरं कदा माम् ॥८६॥

संसारसाअराओ उक्खित्तं तिअसणाह पुरिआलोअम् ।
काहे काहिसि हिअए कोत्थुहमणिदप्पणं व लच्छिपुळइअम् ॥८७॥

संसारसागरादुत्क्षिप्तं त्रिदशनाथ स्फुरितालोकम् ।
कदा करिष्यसि हृदये कौस्तुभमणिदर्पणमिव लक्ष्मीदृष्टम् ॥८७॥

काहे तुह पअपउमे होहिमि णअसच्च केळिकन्ततिवणे ।
मअणरिउमउडमण्डससुरसरिआसोत्तसूइअमहुप्पवहे ॥८८॥

कदा तव पादपद्मे भविष्यामि नतसत्य केळिकान्तत्रिभुवने ।
मदनरिपुमकुटमण्डनसुरसरित्स्रोतःसूचितमधुप्रवाहे ॥८८॥

उवणिसआसिरकुसुमं उत्तंसेऊण तुह पअम्बुअजुअळम् ।
दइओ होहिमि कइआ दासो दासाण सच्च सूरिसरिच्छो ॥८९॥

उपनिषच्छिरःकुसुममुत्तंस्य तव पदाम्बुजयुगळम् ।
दयितो भविष्यामि कदा दासो दासानां सत्य सूरिसदृक्षः ॥८९॥

अउणोणिउत्तिजोग्गं ओआरविहारसहअरत्तणधणिअम् ।
अप्पसमभोअमेत्तं अणुहोहिसि देवणाह काहे णु मिमम् ॥९०॥

अपुनर्निवृत्तियोग्यमवतारविहारसहचरत्वधन्यम् ।
आत्मसमभोगमात्रमनुभविष्यसि देवनाथ कदा नु माम् ॥९१॥

इअ फुडमणोरहं मं एआरिसवअणमेत्तसारं वसअम् ।
कुणसु णिअगुणगणेहिं सच्चं दासाण सच्च सइ सच्छन्दो ॥९१॥

इति स्फुटमनोरथं मामेतादृशवचनमात्रसारं वशगम् ।
कुरुष्व निजगुणगणैः सत्यं दासानां सत्य सदा स्वच्छन्दः ॥९१॥

बाळपवगोव्व तरळो मारुइजाइत्ति साअरं तरिउमणो ।
पत्थेमि तुमं अच्चुअ कङ्खिअपअपउम खमसु मह् काबेअम् ॥

बालप्लवग इव तरलो मारुतिजातिरिति सागरं तरितुमनाः ।
प्रार्थये त्वामच्युत काङ्क्षितपदपद्म क्षमस्व मम कापेयम् ॥९२॥

अच्चुअ विसअक्कन्तं भवण्णवावत्तभमिणिबुड्डिज्जन्तम् ।
जणणी थणंधअं विअ मं उद्धरिऊण सेवसु सअं पच्छम् ॥९३॥

अच्युत विषयाक्रान्तं भवार्णवावर्तभ्रमिनिमज्जन्तम् ।
जननी स्तनंधयमिव मामुद्धृत्य सेवस्व स्वयं पथ्यम् ॥९३॥

कम्मसअघम्मतविअं सुहाभिअतिण्हाहि काहि वि अतिण्हाअम् ।
कारेसु णिव्वुअं मं करआसिसिरेहि अच्चुअ कडक्खेहिम् ॥९४॥

कर्ममयघर्मतप्तं सुखमृगतृष्णाभिः काभिरप्यतृष्णाकम् ।
कारय निर्वृतं मां करकाशिशिरैरच्युत कटाक्षैः ॥९४॥

तुह चिन्तणाविमुहाणं दिट्ठिविसाणं व दंसणाउ मोएन्तो ।
अमअमुहाणं विअ मं अच्चुअ भत्ताणं णेसु णअणासारम् ॥९५॥

तव चिन्तनाविमुखानां दृष्टिविषाणामिव दर्शनान्मोचयन् ।
अमृतमुखानामिव मामच्युत भक्तानां नयस्व नयनासारम् ॥९५॥

विसमिळिअमहुणिहेसु अ तिणपडिमेसु अ पडिग्गहेसु पलुठिअम् ।
अमअणिहिम्मि व अच्चुअ ठावेसु तुमम्मि णिम्ममं मह हिअअम् ॥

विषमिलितमधुनिभेषु च तृणप्रतिमेषु च प्रतिग्रहेषु प्रलुठितम् ।
अमृतनिधाविवाच्युत स्थापय त्वयि निर्ममं मम हृदयम् ॥९६॥

णिच्चं इमम्मि किवणे णिक्खिवसु णमन्तसच्च णिहिसारिच्छे ।
पवहन्तणहपहाझरपसामिअपणमन्तसंजरे तुह चलणे ॥९७॥

नित्यमस्मिन्कृपणे निक्षिप नमत्सत्य निधिसदृशौ ।
प्रवहन्नखप्रभाझरप्रशमितप्रणमत्संज्वरौ तव चरणौ ॥९७॥

सरणागओत्ति जणिए जणवाए वि जइ अच्चुअ ण रक्खसि मम् ।
होज्ज खु साअरघोसो साअरपुळिणम्मि तारिसं तुह वअणम ॥

शरणागत इति जनिते जनवादेऽपि यद्यच्युत न रक्षसि माम् ।
भवेत्खलु सागरघोषः सागरपुलिने तादृशं तव वचनम् ॥९८॥

णिक्खित्तो म्हि अ अगइ णिवुणेहि तुमम्मि णाह कारुणिएहिम् ।
ते तुह दठ्ठूण पिए भरिअं णअसच्च भरसु अप्पाण भरम् ॥९९॥

निक्षिप्तोऽस्मि चागतिर्निपुणैस्त्वयि नाथ कारुणिकैः ।
तांस्तव दृष्ट्वा प्रियान् भृतं नतसत्य भरस्वात्मनो भरम् ॥९९॥

णअसच्च पक्कणाणिअगळिअचिलाअभमाणिअकुमारं व णिवो ।
होज्जन्तजोव्वणवहुं वरोव्व मं लहसु मन्तिअणविअम् ॥१००॥

नतसत्य पक्कणानीतगळितकिरातभ्रमानिजकुमारमिव नृपः ।
भविष्यद्यौवनवधूं वर इव मां लभस्व मन्त्रिजनाविज्ञापितम् ॥१००॥

इअ कइतक्किअकेसरिवेअन्ताअरिअवेङ्कटेशविरइअम् ।
सुहअं अच्चुअसअअं सहिअअहिअएसु सोहउ समग्गगुणम् ॥

इति कवितार्किककेसरिवेदान्ताचार्यवेङ्कटेशविरचितम् ।
सुभगमच्युतशतकं सहृदयहृदयेषु शोभतां समग्रगुणम् ॥१०१॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु श्रीअच्चुअसअअं संपुण्णम् ॥
॥ अच्युतशतकं संपूर्णम् ॥

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥

## ॥ भगवद्ध्यानसोपानम् ॥

श्रीमान्वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥

अन्तर्ज्योतिः किमपि यमिनामञ्जनं योगदृष्टे-
श्चिन्तारत्नं सुलभमिह नः सिद्धिमोक्षानुरूपम् ।
दीनानाथव्यसनशमनं दैवतं दैवतानां
दिव्यं चक्षुः श्रुतिपरिषदां दृश्यते रङ्गमध्ये ॥१॥

वेलातीतश्रुतिपरिमळं वेधसां मौळिसेव्यं
प्रादुर्भूतं कनकसरितः सैकते हंसजुष्टे ।
लक्ष्मीभूम्योः करसरसिजैर्लालितं रङ्गभर्तुः
पादांभोजं प्रतिफलति मे भावनादीर्घिकायाम् ॥२॥

चित्राकारां कटकरुचिभिश्चारुवृत्तानुपूर्व्यां
काले दृष्यद्द्रुततरगतिं कान्तिलीलाकळाचीम् ।
जानुच्छायाद्विगुणसुभगां रङ्गभर्तुर्मदात्मा
जङ्घां दृष्ट्वा जननपदवीजाङ्घिकत्वं जहाति ॥३॥

कामारामस्थिरकदलिकास्तम्भसंभावनीयं
क्षौमाश्लिष्टं किमपि कमलाभूमिनीळोपधानम् ।
न्यञ्चत्काञ्चीकिरणरुचिरं निर्विशत्यूरुयुग्मं
लावण्यौघद्वयमिव मतिर्मामिका रङ्गयूनः ॥४॥

संप्रीणाति प्रतिकलमसौ मानसं मे सुजाता
गम्भीरत्वात्कचन समये गूढनिक्षिप्तविश्वा ।
नाळीकेन स्फुरितरजसा वेधसो निर्ममाणा
रम्यावर्तद्युतिसहचरी रङ्गनाथस्य नाभिः ॥५॥

श्रीवत्सेन प्रथितविभवं श्रीपदन्यासधन्यं
मध्यं बाह्वोर्मणिवररुचा रञ्जितं रङ्गधाम्नः ।
सान्द्रच्छायं तरुणतुळसीचित्रया वैजयन्त्या
संतापं मे शमयति धियश्चन्द्रिकोदारहारम् ॥६॥

एकं लीलोपहितमितरं बाहुमाजानुलम्बं
प्राप्ता रङ्गे शयितुरखिलप्रार्थनापारिजातम् ।
दृप्ता सेयं दृढनियमिता रश्मिभिर्भूषणानां
चिन्ताहास्तिन्यनुभवति मे चित्रमालानयन्त्रम् ॥७॥

साभिप्रायस्मितविकसितं चारुबिंबाधरोष्ठं
दुःखापायप्रणयिनि जने दूरदत्ताभिमुख्यम् ।
कान्तं वक्त्रं कनकतिलकालंकृतं रङ्गभर्तुः
स्वान्ते गाढं मम विलगति स्वागतोदारनेत्रम् ॥८॥

मात्यैरन्तःस्थिरपरिमळैर्वल्लभास्पर्शमान्यैः
फुल्यच्चोळीवचनकुटिलैः कुन्तळैः श्लिष्टमूले ।
रत्नापीडद्युतिशबळिते रङ्गभर्तुः किरीटे
राजन्वत्यः स्थितिमधिगता वृत्तयश्चेतसो मे ॥९॥

पादाम्भोजं स्पृशति भजते रङ्गनाथस्य जङ्घा-
मूरुद्वन्द्वे विलगति शनैरूर्ध्वमभ्येति नाभिम् ।
वक्षस्यास्ते वलति भुजयोर्मामिकेयं मनीषा
वक्त्राभिख्यां पिबति वहते वासनां मौळिबन्धे ॥१०॥

कान्तोदारैरयमिह भुजैः कङ्कणज्याकिणाङ्कै-
र्लक्ष्मीधाम्नः पृथुळपरिघैर्लक्षिताभीतिहेतिः ।
अग्रे किञ्चिद्भुजगशयनः स्वात्मनैवात्मनः सन्
मध्येरङ्गं मम च हृदये वर्तते मावरोधः ॥११॥

रङ्गास्थाने रसिकमहिते रञ्जिताशेषचित्ते
विद्वत्सेवाविमलमनसा वेङ्कटेशेन क्लृप्तम् ।
अक्लेशेन प्रणिहितधियामारुरुक्षोरवस्थां
भक्तिं गाढां दिशतु भगवद्ध्यानसोपानमेतत् ॥१२॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु श्रीभगवद्ध्यानसोपानं संपूर्णम् ॥

---

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥

## ॥ श्रीवैकुण्ठस्तवः ॥

श्रीवत्सचिह्नयान्तिमङ्गळसूत्रताम् ॥

यो नित्यमच्युतपदाम्बुजयुग्मरुक्मव्यामोहतस्तदितराणि तृणाय मेने।
अस्मद्गुरोर्भगवतोऽस्य दयैकसिंधो रामानुजस्य चरणौ शरणं प्रपद्ये ॥

त्रैविद्यवृद्धजनमूर्धविभूषणं यत्संपच्च सात्विकजनस्य यदेव नित्यम् ।
यद्वा शरण्यमशरण्यजनस्य पुण्यं तत्संश्रयेम वकुळाभरणाङ्घ्रियुग्मम् ॥

भक्तिप्रभावभवदद्भुतभावबन्धसन्धुक्षितप्रणयसाररसौघपूर्णः ।
वेदार्थरत्ननिधिरच्युतदिव्यधामा जीयात्पराङ्कुशपयोधिरसीमभूमा ॥

यन्मङ्गळाय महते जगतामुशन्ति त्रैविष्टपान्यपि पदानि यदाश्रयाणि ।
वन्दामहे सरसिजेक्षणमद्वितीयं वेदान्तवेद्यमनिदं प्रथमं महस्तत् ॥

पीताम्बरं वरदशीतलदृष्टिपातमाजानुलम्बिभुजमायतकर्णपाशम् ।
तन्मेघमेचकमुदग्रविशालवक्षोलक्ष्मीधरं किमपि वस्तु ममाविरस्तु ॥

यत्तत्वमक्षरमदृश्यमगोत्रवर्ण मग्राह्यमव्ययमनीदृशमद्वितीयम ।
ईशानमस्य जगतो यदणोरणीय स्तद्वैष्णवं पदमुदात्तमुदाहरामः ।

आम्नायमूर्धनि च मूर्धनि चोर्ध्वपुंसां
यद्धाम वैष्णवमभीक्ष्णतरं चकास्ति ।
तन्मादृशामपि च गोचरमेति वाचो
मन्ये तदीयमिदमाश्रितवत्सलत्वम् ॥७॥

जानन्नपीह किलमामनपत्रपिष्णु-
र्विष्णोः पदप्रणयिनीं गिरमाद्रियेऽहम् ।

न श्वावलीढमपि तीर्थमतीर्थमाहु-
र्नोदन्यतापि च शुना किल लज्जितव्यम् ॥८॥

देवस्य दैत्यमथनस्य गुणेष्वियत्ता-
संख्या च वाङ्मनसगोचरमत्यभूताम् ।
अप्येवमण्वपि च तत्र ममार्तिशान्त्यै
कीटस्य तृष्यत उदन्वति विप्रुषाऽलम् ॥९॥

प्रेमार्द्रविह्वलगिरः पुरुषाः पुराणा-
स्त्वां तुष्टुवुर्मधुरिपो मधुरैर्वचोभिः ।
वाचोविडम्बितमिदं मम नीचवाचः
क्षान्तिस्तु ते सविषया मम दुर्वचोभिः ॥१०॥

आज्ञा तवात्रभवती विदिता त्रयी सा
तां हि प्रमाणमभिजग्मुरतीन्द्रियेऽर्थे ।
आभासभूयमभियान्त्यपराणि दोषै-
रेषा तु दोषरहिता महिता पुराणी ॥११॥

अन्तर्हितो निधिरसि त्वमशेषपुंसां लभ्योऽसि पुण्यपुरुषैरितरैर्दुरापः ।
तव त्रयीं सुकृतिनः कृतिनोऽधिजग्मुर्बाह्येषु बाह्यचरितैरितरैर्निपेते ॥

चित्रं विधेर्विलसितं त्विदमाविरस्ति
दुष्टात्मनामयमहो किल दुर्विपाकः ।
यत्केचिदत्रभवतीं श्रुतिमाश्रयन्तोऽ
प्यर्थे कुदृष्टिविनिविष्टधियो विनष्टाः ॥१३॥

बाह्याः कुदृष्टय इति द्वितयेऽप्यपारं
घोरं तमस्समुपयान्ति नहीक्षसे तान् ।
जग्धस्य काननमृगैर्मृगतृष्णिकेप्सोः
कासारसत्वनिहतस्य च को विशेषः ? ॥१४॥

न्यायस्मृतिप्रभृतिभिर्भवता निसृष्टैर्वेदोपबृंहणविधावुचितैरुपायैः ।
श्रुत्यर्थमर्थमिव भानुकरैर्विभेजु स्त्वद्भक्तिभावितविकल्मषशेमुषीकाः ॥
ये तु त्वदङ्घ्रिसरसीरुहभक्तिहीना स्तेषाममीभिरपि नैव यथार्थबोधः ।
पित्तभ्रमंजनमनाप्नुषि जातु नेत्रे नैव प्रभाभिरपि शंखसिततत्वबुद्धिः॥

(१)तत्वार्थतत्परपरश्शतवेदवाक्यै-
स्सामर्थ्यतस्स्मृतिभिरप्यथ तादृशीभिः ।
त्वामेव तत्वपरसात्विकसत्पुराणै-
र्दैवज्ञधीभिरपि निश्चिनुमः परेशम् ॥ ॥१७॥

अन्यत्र तु क्वचन केचिदिहेशशब्दा-
ल्लोकप्रसिद्धिमुपगम्य तमीशमाहुः ।
तैश्च प्रसिद्धिविभवस्य समूलतायै
ग्राह्या त्रयी त्वयि तु साऽच्युतसम्मुखीना ॥१८॥

यः खल्वणोरणुतरो महतो महीया-
नात्मा जनस्य जनको जगतश्च योऽभूत् ।

---

(१) इतः पूर्वमयमधिकः श्लोकः क्वचिद्दृश्यते—
वेदार्थधीस्त्वयि तु भक्तित एव लभ्या यावान्हि यश्च भगवन्नसि तत्वतस्त्वम् ।
ज्ञातुं तथाभुवनभावन वेदवेद्यं द्रष्टुं प्रवेष्टुमपि भक्तित एव शक्य ॥

वेदात्मकप्रणवकारणवर्णवाच्यं
तं त्वां वयं तु परमेश्वरमामनामः ॥१९॥

आत्मेश्वरोऽसि नपरोऽस्ति तवेश्वरोऽन्यो
विश्वस्य चासि पतिरस्य परायणं च ।
नारायणाच्युतपरस्त्वमिहैक एव
ब्रह्मादयोऽपि भवदीक्षणलब्धमत्त्वाः ॥२०॥

नित्यस्समाभ्यधिकवर्जित ऊर्जितश्री-
र्नित्येऽक्षरे दिवि वसन्पुरुषः पुराणः ।
सत्त्वप्रवर्तनकरो जगतोऽस्य मूलं
नान्यस्त्वदस्ति धरणीधर वेदवेद्यः ॥२१॥

यं भूतभव्यभवदीशमनाशमाहु-
रन्तस्समुद्रनिलयं यमनन्तरूपम् ।
यस्य त्रिलोकजननी महिषी च लक्ष्मी-
स्साक्षात्स एव पुरुषोऽसि सहस्रमूर्धा ॥२२॥

सर्वश्रुतिष्वनुगतं स्थिर मप्रकंप्यं नारायणाह्वयधरं त्वमिवानवद्यम् ।
सूक्तं तु पौरुषमशेषजगत्पवित्रं त्वामुत्तमं पुरुषमीशमुदाजहार ॥

आनन्दमैश्वरमवाङ्मनसाऽवगाह्य-
माम्नासिषुश्शतगुणोत्तरितक्रमेण ।
सोऽयं तवैव नृषु हि त्व मिहान्तरात्मा
त्वं पुण्डरीकनयनः पुरुषश्च पौष्णः ॥२४॥

यन्मूलकारण मबुध्यत सृष्टिवाक्यै-
र्ब्रह्मेति वा सदितिवाऽऽत्मगिराथवा तत् ।
नारायणस्त्विति महोपनिषद्ब्रवीति
सौबालिकीप्रभृतयोऽप्यनुजग्मुरेनाम् ॥२५॥

ज्योतिः परं परमतत्वमथो परात्मा
ब्रह्मेति च श्रुतिषु यत्परतस्त्वधीतम् ।
नारायणस्तदिति तद्विशिनष्टि काचि-
द्विष्णोः पदं परमित्यपरा गृणाति

संतीदृशाश्श्रुतिशिरस्सु परस्सहस्रा
वाचस्तव प्रथयितुं परमेशितृत्वम् ।
किंश्चेह न व्यजगणः क्रमिधातृभेदं
क्रामन्जगन्ति निगिरन्पुनरुद्गिरंश्च ॥२७॥

रूपश्रिया परमया परमेण धाम्ना
चित्रैश्च कैश्चि दुचितैर्भवत श्चरित्रैः।
चिह्नै रनिह्नवपरै रपरैश्च कश्चि-
न्निश्चिन्वते त्वयि विपश्चित ईशितृत्वम् ॥२८॥

यस्याः कटाक्षण मनुक्षण मीश्वराणा-
मैश्वर्यहेतुरिति सार्वजनीनसिद्धम् ।
तां श्रीरिति त्वदुपसंश्रयणान्निराहु-
स्त्वां च श्रियश्श्रिय मुदाहुरुदारवाचः ॥२९॥

माया त्वया गुणमयी किल या निसृष्टा
सा ते विभो किमिव नर्म न निर्मिमीते ।
कौतस्कुताः स्थिरकुतर्कवशेन केचि-
त्सत्यां श्रुतौ च बधिरास्त्वयि तन्महिम्ना ॥३०॥

यस्स्थावर क्रिमि पतंग मतंगजादि-
ष्वन्येषु जन्तुषु सदैव विजायमानः ।
त्वन्नित्य निर्मल निरञ्जन निर्विकार-
कल्याणसद्गुणनिधे स इतीरितस्तैः ॥३१॥

त्वद्दृष्टिजुष्टमिदमाविरभूदशेषं
नोचेत्कटाक्षयसि नैव भवेत्प्रवृत्तिः ।
स्थातुं च वांछति जगत्तव दृष्टिपातं
तेन श्रुतौ जगदिषे हि जगत्त्वमेव ॥३२॥

एवं भगो इह भवत्परतन्त्र एव
शब्दोऽपि रूपव दमुष्य चराचरस्य ।
ऐश्वर्यमीदृशमिदं श्रुतिपूदितं ते
पापीयसामयमहो त्वयि मोहहेतुः ॥३३॥

ये त्वत्कटाक्षलव लक्ष्यमिव क्षणं तै-
रैश्वर्यमीदृशमलभ्यमलम्भि पुम्भिः ।
यत्केऽपि संजगदिरे परमेशितृत्वं
तेषामपि श्रुतिषु तन्महिम प्रसंगात् ॥३४॥

नित्येषु वस्तुषु भवन्निरपेक्षमेव तत्तत्स्वरूपमिति केचिदिह भ्रमन्तः।
ऐश्वर्यमत्र तव सावधिकं गिरं ते ब्रूते त्रयी तु निरुपाधिकमीशनं ते ॥

इच्छात एव तवविश्वपदार्थसत्ता
नित्यं प्रियास्तव तु केचन ते हि नित्याः ।
नित्यं त्वदेक परतन्त्रनिजस्वरूपा
भावत्क मङ्गळ गुणा हि निदर्शनं नः ॥३६॥

विश्वस्य विश्वविधकारणमच्युतत्वं
कार्यं तदेत दखिलं चिदचित्स्वरूपम् ।
त्वं निर्विकार इति वेदशिरस्सु घोषो
निस्सीममेव तव दर्शयतीशितृत्वम् ॥३७॥

किंसाधनः क्व निवसन्किमुपाददानः
कस्मै फलाय सृजतीश इदं समस्तम्? ।
इत्याद्यानिष्ठितकुतर्कमतर्कयन्त-
स्त्वद्वैभव श्रुतिविदो विदुरप्रतर्क्यम् ॥३८॥

यत्संवृतं दशगुणोत्तरसप्ततत्त्वै-
रण्डं चतुर्दशजगद्भवधातृधाम ।
अण्डानि तत्सुसदृशानि परश्शतानि
क्रीडाविधेस्तव परिच्छदतामगच्छन् ॥३९॥

इच्छाविहारविधये विहितान्यमूनि
स्यात्त्वद्विभूतिलवलेशकलायुतांशः ।

या वै न जातु परिणामपदास्पदं सा
कालात्मिका तव परा महती विभूतिः ॥४०॥

यद्वैष्णवं हि परमं पदमामनन्ति
खं वा यदेव परमं तमसः परस्तात् ।
तेजोमयं परमसत्वमयं ध्रुवं य-
दानन्दकन्दमतिसुन्दरमद्भुतं यत् ॥४१॥

यद्ब्रह्मरुद्र पुरुहूतमुखैर्दुरापं
नित्यं निवृत्तिनिरतै स्सनकादिभिर्वा ।
सायुज्यमुज्वलमुशन्ति यदाऽऽपरोक्ष्यं
यस्मात्परं न पदमञ्चित मस्ति किञ्चित् ॥४२॥

रूपेणसद्गुणगणैः परया समृद्ध्या
भावैरुदारमधुरै रपि वा महिम्ना ।
तादृक्तदीदृगिदमित्युपवर्णयन्त्यो
वाचो यदीयविभवस्य तिरस्क्रियायै ॥४३॥

यद्वृद्ध्यपक्षयविनाशमुखैर्विकारैरेतैरसंस्कृत मनस्तमितास्तिशब्दम् ।
यद्वारवान्छतिषुफल्गुफलं क्रियाणा मादिष्टमन्यदसुखोत्तरमध्रुवं च ॥४४॥

निष्कल्मषैर्निहतजन्मजराविकारैर्भूयिष्ठभक्तिविभवैरभवैरवाप्यम् ।
अन्यैरधन्यपुरुषैर्मनसाप्यनाप्यं वैकुण्ठनाम तव धाम तदामनन्ति ॥

नित्या तवान्यनिरपेक्षमहामहिम्नोऽ
प्येतादृशी निरवधिर्नियता विभूतिः ।

ज्ञानादयोगुणगणास्समतीतसीमा
लक्ष्मीः प्रिया परिजनाः पतगेन्द्रमुख्याः ॥४६॥

एकस्य येषु हि गुणस्य लवायुतांश-
स्स्यात्कस्यचित्स खलु वाङ्मनसातिगश्रीः ।
ते तादृशोत्यवधयस्समतीतसंख्या-
स्त्वत्सद्गुणास्त्वमसि तन्निरपेक्षलक्ष्मीः ॥४७॥

सर्वस्य चैव गुणतो हि विलक्षणत्व-
मैश्वर्यतश्च किल कश्चि दुदञ्चितस्स्यात् ।
तत्प्रत्युत त्वयि विभो विभवो गुणाश्च
संबन्धतस्तत्र भजन्ति हि मङ्गळत्वम् ॥४८॥

दूरे गुणा स्तव तु सत्वरजस्तमांसि
तेन त्रयी प्रथयति त्वयि निर्गुणत्वम् ।
नित्यं हरे निखिल सद्गुणसागरं हि
त्वामामनन्ति परमीश्वरमीश्वराणाम् ॥४९॥

ज्ञानात्मनस्तव तदेवगुणं गृणंति
तेजोमयस्य हि मणेर्गुण एव तेजः ।
तेनैव विश्व मपरोक्ष मुदीक्षसे त्वं
रक्षा त्वदीक्षणत एव यतोऽखिलस्य ॥५०॥

त्रय्युद्यता तव युवत्वमुखैर्गुणौघै-
रानन्दमेधित मियानिति संनियन्तुम् ।

ते ये शतंत्विति परम्परया प्रवृता
नैवैष वाङ्मनसगोचर इत्त्युदाह ॥५१॥

एवं तया चतुरया तव यौवनाद्यास्सर्वेगुणास्सह समस्तविभूतिभिश्च ।
प्रव्याहृतास्स्युरवधीनवधीरयन्तो वाचामगोचरमहामहिमान एव ॥

संवर्तवर्ति निखिलं निरभिज्ञमज्ञं
चित्रे च कर्मणि यथार्ह महो नियच्छन् ।
सद्यः कृमिद्रुहिणभेदमभेदमेत-
दाविश्वकर्थ सकृदीक्षणदीक्षणेन ॥५३॥

अस्तं यदुद्यदुपचाय्यपचायि चैव मीशंदरिद्रमथ जङ्गममप्यनिङ्गम् ।
विश्वं विचित्र मविलक्षणवीक्षणेन विक्षोभयस्यनवधिर्वत शक्तिरैशी ॥

रूपप्रकारपरिणामकृतव्यवस्थं
विश्वं विपर्यसितुमन्यदसच्च कर्तुम् ।
क्षाम्यन्स्वभावनियमं किमुदीक्षसे त्वं
स्वातन्त्र्यमैश्वरमपर्यनुयोज्यमाहुः ॥५५॥

संवर्तसंभृतकरस्य सहस्ररश्मेरुस्रं तमिस्रयदजस्रविहारि हारि ।
नित्यानुकूलमनुकूलनृणां परेषा मुद्वेजनं च तव तेज उदाहरन्ति ॥

नैव ह्यवाप्यमनवाप्तमिहास्ति यस्य
सत्तापि तस्य तव वीक्षणतः प्रजानाम् ।
संपत्तु किं पुनरितो न वदान्यमन्यं
मन्ये त्वमेव खलु मन्दिरमिन्दिरायाः ॥५७॥

पापैरनादिभवसम्भववासनोत्थै-
र्दुःखेषु यः खलु मिमंक्षति हन्त जन्तुः ।
तं केवलं नु कृपयैव समुद्धरिष्यं-
स्तद्दुष्कृतस्य ननु निष्कृतिमात्थ शास्त्रैः ॥५८॥

शास्त्रैरनादिनिधनैस्स्मृतिभिस्त्वदीय-
दिव्यावतारचरितै श्शुभया च दृष्ट्या ।
निःश्रेयसं यदुपकल्पयसि प्रजानां
सा त्वत्कृपाजलधि तल्लवलिंगतश्रीः ॥५९॥

है हन्त जन्तुषु निरन्तरसन्ततात्मा
पाप्मा हि नाम वद कोऽयमचिन्त्यशक्तिः ।
यस्त्वत्कृपाजलधिमप्यतिवेलखेल-
मुल्लङ्घयत्यकृतभासुरभागधेयान् ॥६०॥

यद्ब्रह्मकल्पनियुतानुभवेऽप्यनाश्यं
तत्किल्बिषं सृजति जन्तुरिह क्षणार्धे ।
एवं सदा सकलजन्मसु सापराधं
क्षाम्यस्यहो तदभिसन्धिविराममात्रात् ॥६१॥

क्षान्तिस्तवेयमियती महती कथन्नु
मुह्येदहो त्वयि कृताञ्जलिपञ्जरेषु ।
इत्थं स्वतो निखिलजन्तुषु निर्विशेषं
वात्सल्यमुत्सुकजनेषु कथं गुणस्ते ? ॥६२॥

विश्वं धियैव विरचय्य निचाय्य भूय-
स्सञ्जुहुष स्सति समाश्रितवत्सलत्वे ।
आजग्मुषस्तव गजोत्तमबृंहितेन
पादं परामममृशुषोपि च का मनीषा? ॥६३॥

यः कश्चिदेव यदि किञ्चन हन्त जन्तु-
र्भव्यो भजेत भगवन्त मनन्यचेताः ।
तं सोऽय मीदृश इयानिति वा प्यजानन्
हे वैनतेयसमम प्युररीकरोषि ॥६४॥

त्वत्साम्यमेव भजतामभिवाञ्छसि त्वं
त्वत्सात्कृतै र्विभवरूपगुणै स्त्वदीयैः ।
मुक्तिं ततो हि परमं तव साम्य माहु-
स्त्वद्दास्यमेव विदुषां परमं मतंतत् ॥६५॥

तद्वै तथास्तु कतमोऽय महो स्वभावो
यावान्यथाविधगुणो भजते भवन्तम् ।
तावांस्तथाविधगुणस्तदधीनवृत्ति-
स्संश्लिष्यसे त्वमिह तेन समानधर्मा ॥६६॥

नीलाञ्जनाद्रिनिभ मुन्नस मायताक्ष-
माजानुजैत्रभुज मायतकर्णपाशम् ।
श्रीवत्सलक्षण मुदारगभीरनाभिं
पश्येम देव शरदश्शतमीदृशं त्वाम् ॥६७॥

अम्भोरुहाक्षमरविन्दनिभाङ्घ्रियुग्म-
माताम्रतामरस रम्यकराग्रकान्तिम् ।
भृङ्गालकं भ्रमरविभ्रमकायकान्ति
पीताम्बरं वपु रदस्तु वयं स्तुवाम ॥६८॥

भ्रूविभ्रमेण मृदुशीतविलोकितेन मन्दस्मितेन मधुराक्षरया च वाचा।
प्रेमप्रकर्षपिशुनेन विकासिना च सम्भावयिष्यसि कदामुखपङ्कजेन?॥

वज्राङ्कुश ध्वजसरोरुहशङ्खचक्र
मत्सीसुधाकलशकल्पक कलिताङ्कम् ।
त्वत्पादपद्मयुगळंविगळत्प्रभाभि-
र्भूयोऽभिषेक्ष्यति कदानु शिरो मदीयम् ? ॥७०॥

त्रैविक्रमक्रमकृताक्रमणात्रिलोक-
मुत्तंसमुत्तममनुत्तमभक्तिभाजाम् ।
नित्यं धनं मम कदा हि मदुत्तमाङ्ग-
मङ्गीकरिष्यति चिरं तव पादपद्मम् ? ॥ ॥७१॥

उन्निद्रपत्र शतपत्रसगोत्रमन्त-
र्लेखारविन्द मभिनन्दनमिन्द्रियाणाम् ।
मन्मूर्ध्नि हन्त करपल्लवतल्लजं ते
कुर्वन्कदा कृतमनोरथयिष्यसे माम् ? ॥७२॥

आङ्गी निसर्ग नियता त्वयि हन्त कान्ति-
र्नित्यं तन्नालमियमेव तथापि चान्या ।

वैभूषणी भवति कान्तिरलन्तरां सा
हैपुष्कलैव निखिलापि भवद्विभूतिः ॥७३॥

श्रीवत्सकौस्तुभ-किरीटललाटिकाभिः
केयूरहारकटकोत्तमकर्णिकाभिः ।
उद्दामदाममणिनूपुरनीविबन्धै-
र्भातं भवन्तमनिमेषमुदीक्षिषीय ॥७४॥

ऐन्दीवरी क्वचिदपि क्वचिदारविन्दी
चान्द्रातपी क्वचन च क्वचनाथ हैमी ।
कान्तिस्तवोढपरभागपरस्परश्रीः
पार्येत पारणयितुं किमु चक्षुषोर्मे ॥७५॥

त्वां सेवितं जलजचक्रगदासिशार्ङ्गै-
स्तार्क्ष्येण सैन्यपतिनाऽनुचरैस्तथान्यैः ।
देव्या श्रिया सह वसन्तमनन्तभोगे
भुञ्जीय साञ्जलिरसङ्कुचिताक्षिपक्ष्मा ॥७६॥

कैङ्कर्यनित्यनिरतैर्भवदेकभोगैर्नित्यैरनुक्षणनवीनरसार्द्रभावैः ।
नित्याभिवाञ्छितपरस्परनीचभावैर्मद्दैवतैः परिजनैस्तव सङ्गषीय ॥

यत्किञ्चिदुज्ज्वलमिदं यदुपाख्ययाहु-
स्सौन्दर्यमृद्धिरिति यन्महिमांशलेशः ।
नाम्नैव यां श्रियमुशन्ति यधीयधाम
त्वामामनन्ति यतमा यतमानासिद्धिः ॥७८॥

यावै त्वयाऽप्युदधिमन्थनयत्नलभ्या
यान्तर्हितेति जगदुन्मथनोद्यतोऽभूः ।
या च प्रतिक्षणमपूर्वरसानुबन्धै-
र्भावैर्भवन्तमभिनन्दयते सदैव ॥७९॥

रूपश्रिया गुणगणैर्विभवेन धाम्ना
भावैरुदारमधुरैश्चतुरैश्चरित्रैः ।
नित्यं तवैव सदृशीं श्रियमीश्वरीं तां
त्वां चाश्रितः परिचरेयमुदीर्णभावः ॥८०॥

या बिभ्रती स्थिरचरात्मकमेव विश्वं
विश्वम्भरा परमया क्षमया क्षमा च ।
तां मातरं च पितरं च भवन्तमस्य
व्युच्छन्तु रात्रय इमा वरिवस्यतो मे ॥८१॥

भावैरुदारमधुरैर्विविधैर्विलासै-
र्भ्रूविभ्रमस्मितकटाक्षनिरीक्षणैश्च ।
या त्वन्मयी त्वमपि च यन्मय एव सा मा
नीळा नितान्तमुररीकुरुतामुदारा ॥८२॥

भावैरनुक्षण मपूर्वरसानुविद्धै रत्यद्भुतैरभिनवैरभिनन्द्य देवीः ।
भृत्यान्यथोचितपरिच्छदिनो यथार्हं संभावयंतमभितो भगवन्भवेयम् ॥

हा हन्त हन्त हतकोऽस्मि खलोऽस्मि धिङ्मां
मुह्यन्नहो अहमिदं किमुवाच वाचा ।

त्वामङ्गमङ्गळगुणास्पदमस्तहेय-
मा स्स्मर्तुमेव कथमर्हति मादृगंहः ? ॥८४॥

अंहः प्रसह्य विनिगृह्य विशोध्य बुद्धिं
व्यापूय विश्वमशिवं जनुषानुबद्धम् ।
आधाय सद्गुणगणानपि नाहमर्ह-
स्त्वत्पादयोर्यदहमत्र चिरं निमग्नः ॥८५॥

जानेऽथवा किमहमङ्ग यदेव सङ्गा-
दङ्गीकरोषि न हि मङ्गळमन्यदस्मात् ।
तेन त्वमेन मुररीकुरुषे जनं चे-
न्नैवामुतो भवति युक्ततरो हि कश्चित् ॥८६॥

यन्नाभवाम भवदीयकटाक्षलक्ष्यं
संसारगर्तपरिवर्तमतोऽगमाम ।
आगांसि ये खलु सहस्रमजस्रमेव
जन्मस्वतन्महि कथं त इमेऽनुकम्प्याः ? ॥८७॥

सत्कर्म नैव किल किञ्चन सञ्चिनोमि
विद्याप्यवद्यरहिता न तु विद्यते मे ।
किञ्च त्वदञ्चितपदाम्बुजभक्तिहीनः
पात्रं भवामि भगवन्भवतो दयायाः ॥८८॥

किं भूयसा प्रलपितेन यदेव किंचि-
त्पापाह्वमल्पमुरु वा तदशेषमेषः ।

जानन्नवा शतसहस्रपराधकृत्वो
योऽकार्षमेनमगतिं भगवन् क्षमस्व ॥८९॥

देव त्वदीयचरणप्रणयप्रवीण-
रामानुजार्यविषयीकृतमप्यहो माम् ।
भूयः प्रधर्षयति वैषयिको विमोहो
मत्कर्मणः कतरदत्र समानसारम् ? ॥९०॥

गर्भेषु निर्भरनिपीडनखिन्नदेहः
क्षोदीयसोऽतिमहतोऽप्यखिलस्य जन्तोः ।
जन्मान्तराण्यनुविचिन्त्य परस्सहस्रा-
ण्यत्राहमप्रतिविधिर्निहतश्चरामि ॥९१॥

भूयश्च जन्मसमयेषु सुदुर्वचानि
दुःखानि दुःखमतिरिच्य किमप्यजानन् ।
मूढोऽनुभूय पुनरेव तु बालभावं
दुःखोत्तरं निजचरित्रमुत्रसेवे ॥९२॥

भूयांसि भूय उपयन्विविधानि दुःखा-
न्यन्यच्च दुःखमनुभूय सुखभ्रमेण ।
दुःखानुबंधमपि दुःखविमिश्रकल्पं
क्षुद्रं जुगुप्सितसुखं सुखमित्युपासे ॥९३॥

लोलद्भिरिन्द्रियहयैरपथेषु नीतो दुष्प्रापदुर्भगमनोरथमथ्यमानः ।
विद्याधनाभिजनजन्ममदेन कामक्रोधादिभिश्च हृतधीर्न शमं प्रयामि ॥

लभ्येषु दुर्लभतरेष्वपि वाञ्छितेषु
जाता सहस्रगुणतः प्रतिलम्भनेऽपि ।
विघ्नैर्हृतेष्वपि च तेषु समूलघातं
वर्धिष्णुरेव न तु शाम्यति हंत तृष्णा ॥९५॥

त्वत्कीर्तनस्तुति नमस्कृतिवेदनेषु
श्रद्धा न भक्तिरपि शक्तिरथो न चेच्छा ।
नैवानुतापमतिरेष्वकृतेषु किन्नु
भूयानहो परिकरः प्रतिकूलपक्षे ॥९६॥

एतेन वै सुविदितं बत मामकीनं दौरात्म्यमप्रतिविधेयमपारमीश ।
संमूर्छतोऽप्यपदमस्मि यतस्त्वदीयनिस्सीमभूमकरुणामृतवीचिवायोः ॥

ऐश्वर्यवीर्य करुणागरिम क्षमाद्या-
स्स्वामित्व कारणसुहृत्त्वमथो विशेषात् ।
सर्वेगुणास्सविषयास्तव मामपार-
घोराघपूर्णमगतिं निहतं समेत्य ॥९८॥

त्वत्पादसंश्रयणहेतुषु साधिकारा-
नुद्युञ्जतश्चरितकृत्स्नविधींश्च तांस्तान् ।
त्वं रक्षसीति महिमा तव नालमेषा
मां चेदनीदृशमनन्यगतिं न रक्षेः ॥९९॥

या कर्मणामधिकृतिर्य इहोद्यमस्ते-
ष्वप्येष्वनुष्ठितिरशेषमिदं हि पुंसाम् ।

त्वामन्तरेण न कथंचन शक्यमाप्तु-
मेवं च तेषु मयि चास्ति न ते विशेषः ॥१००॥
निर्बन्ध एष यदि ते यदशेषवैध-
संसेविनो वरद रक्षसि नेतरांस्त्वम् ।
तर्हि त्वमेव मयि शक्त्यधिकारवांछाः
प्रत्यूहशान्तिमितरञ्च विधेहि विश्वम् ॥१०१॥

(१) इति श्रीहारीतकुलतिलकश्रीवत्साङ्कमिश्रविरचिते पञ्चस्तवे
॥ श्रीवैकुण्ठस्तवस्सम्पूर्णः ॥

---

## ॥ अथ श्रीमदतिमानुषस्तवः ॥

श्रीवत्सचिह्नमिश्रेभ्यो नमउक्तिमधीमहि ।
यदुक्तयस्त्रयीकण्ठे यान्तिमङ्गलसूत्रताम् ॥

अतिमानुषशीलवृत्त वेषैरतिवृत्तामरविक्रमप्रतापैः ।
अतिलङ्घितसर्वलोक साम्यं वरयेवैष्णव वैभवावतारम् ॥१॥

श्रेयः किरन्तु किरणाश्चरणारविन्दनिष्यन्दमानमकरन्दरसौघदेश्याः ।
तज्जाश्श्रुतेर्मधुन उत्स इति प्रतीता माङ्गल्यरङ्गनिलयस्य परस्य धाम्नः॥

श्रीमत्पराङ्कुशमुनीन्द्रमनोनिवासा-
त्तज्जानुरागरस मज्जनमञ्जसाऽऽप्य ।

---

(१) अन्तेऽयं श्लोकः क्वचिदुपलभ्यते—
व्यत्तीकुर्वन्निगमशिरसामर्थमन्तर्निगूढं श्रीवैकुण्ठस्तुतिमकृत यश्श्रेयसे सज्जनानाम् ।
कूराधीशं गुरुतरदयादुग्धसिन्धुं तमीडे श्रीवत्साङ्कं श्रुतिमतगुरुच्छात्रशीलैकधाम॥

अद्याप्यनारततदुत्थितरागयोगं
श्रीरङ्गराजचरणाम्बुजमुन्नयामः ॥३॥

वज्रध्वजाङ्कुशसुधाकलशातपत्र पङ्केरुहाङ्कपरिकर्मपरीतमन्तः ।
तत्पादपङ्कजविशृङ्खलरत्नमौळेः श्रीरङ्गिणश्चरणयोर्युग माश्रयामः ॥४॥

श्रीरङ्गराजचरणौ प्रणुमो ययोः ख-
ल्वेकस्त्रिविक्रमविधौ वसुधामशेषाम् ।
व्यक्रंस्त साचलकुलामपि विप्रकीर्ण-
स्थूलावलग्नसिकतामिव निर्णतोऽश्नम् ॥५॥

ज्ञानं बलं विपुलमीशनवीर्यशक्ति-
तेजांसि च त्रियुगभूयमुपागतानि ।
पूर्णानि षट् च परिगृह्य भवंश्चतुर्था
भक्तं जनं त्वमनुजग्रहिथानुरागात् ॥६॥

एकान्तमङ्गळगुणास्पदमस्तहेयं नित्यं पदं तव यतस्तत एव देव ।
आम्नायते तदिह विश्वविरूपरूपं तेनैव नन्विदमशब्दमरूपमाहुः ॥७॥

शब्दादिहेय इह गोचर इन्द्रियाणां
तत्प्रत्यनीकविभवस्त्वमतीन्द्रियोऽसि ।
तेनैव तेन बत दर्शनमस्ति किञ्चि
द्वाचोधियश्च तत एव न गोचरोऽसि ॥८॥

एवं स्थिते त्वदुपसंश्रयणाभ्युपायो
मानेन केनचिदलप्स्यत नोपलब्धुम् ।

नोचेदमर्त्यमनुजादिषु योनिषु त्व-
मिच्छाविहारविधिना समवातरिष्यः ॥९॥

शीलः क एष तव हन्त दयैकसिन्धो
क्षुद्रे पृथग्जनपदे जगदण्डमध्ये ।
क्षोदीयसोऽपि हि जनस्य कृते कृती त्व-
मत्रावतीर्य ननु लोचनगोचरोऽसि ॥१०॥

यं पातकात्सुमहतोऽप्युदधारयस्त्वं
त्वत्पादवारिपरिपूतशिराश्च योऽभूत् ।
तं वन्दसे किल ततश्च वरं वृणीषे
क्रीडाविधिर्बत विलक्षणलक्षणस्ते ॥११॥

क्रीडा विधेः परिकरस्तव या तु माया
सा मोहिनी न कतमस्य तु हन्त जन्तोः ।
हे मर्त्यसिंह वपुषस्तव तेजसोंऽशे
शम्भुर्भवन्हि शरभश्शलभो बभूव ॥१२॥

यस्यात्मतां त्रिपुरभङ्गविधावधास्त्वं
त्वच्छक्तितेजितशरो विजयी च योऽभूत् ।
दक्षक्रतौ तु किल तेन विनिर्जितस्त्वं
युक्ता विधेयविषयेषु हि कामचारः ॥१३॥

मुग्धश्शिशुर्वटदळे शयितोऽतितन्वा
तन्वाजगन्ति बिभृषे सविकासमेव ।

ऐशीमिमां तव तु शक्ति मितर्कितव्या-
मव्याजतः प्रथयसे कि मिहावतीर्णः ॥१४॥

ब्रह्मेशमध्यगणना गणनार्कपङ्क्ता-
विन्द्रानुजत्वमदितेस्त नयत्वयोगात् ।
इक्ष्वाकुवंशयदुवंशजनिच हन्त
श्लाघ्या न्यमू न्यनुपमस्य परस्य धाम्नः ॥१५॥

त्वन्निर्मिता जठरगा च तव त्रिलोकी
किं भिक्षणादियमृते भवता दुरापा ।
मध्ये कदा तु न विचक्रमिषे जगच्चे-
त्त्वद्विक्रमः कथमिव श्रुतिराञ्चिता स्यात् ? ॥१६॥

पृच्छामि किञ्चन यदा खलु राघवत्वे
मायामृगस्य वशगो मनुजत्वमौग्ध्यात् ।
सीतावियोगविवशो न च तद्गतिज्ञः
प्रादास्तदा परगतिं हि कथं जटायोः ? ॥१७॥

अक्षुण्णयोगपथमन्य हतं जटायुं
तिर्यञ्च मेव बत मोक्षपथे नियोक्तुम् ।
शक्नोषि वेत्सि च यदा स तदा कथं त्वं
देवीमवाप्तु मनलं व्यथितो विचिन्वन् ? ॥१८॥

सालान्हि सप्त सगिरी न्सरसातला न्या-
नेकेषुमन्दजवतो निरपत्रयस्त्वम् ।

तेष्वेकविव्यथनखिन्न कपिप्रणुन्नं-
शाखामृगं मृगयसे स्म कथं सहायम् ॥१९॥

दासस्सखा समभव त्तव यः कपीन्द्रः
ताद्विद्विषं कपिममर्षवशा ज्जिघांसुः ।
त्वत्स्नेहविक्लबधियं तमिमं कपीन्द्रं
विस्रम्भयन्सपदि सालगिरीनवध्यः ॥२०॥

यद्वा मृगं मृगयुवन्मृगयापथेन
छन्नो जघन्थ न तु शत्रुव दाभिमुख्यात् ।
तद्युक्तमेव तव राघव वंशजस्य
तिर्यक्षु नैव हि विपक्षतयोपचारः ॥२१॥

मानुष्यकं चरित माचरितुं प्रवृत्तो देवातिगं चरितमङ्ग किमभ्यकार्षीः ?।
यत्सागरे किल बबन्धिथ नाथ सेतुं शैलैः प्लवङ्गमसमीहितसंप्रणुन्नैः ॥

यो विक्रमेण मनुजत्वविभूषितेन
देवं वरं वरुणराज मज व्यजेष्ठाः ।
कृत्वोपदां दशरथं विधिरुद्रमुख्यै-
र्देवै स्स्तुतश्च स किलेन्द्रजिता जितोऽसि ॥२३॥

अब्धिं न तेरिथ न जिग्यिथ राक्षसेन्द्रं
नैवास्य जिज्ञिथ यदा च बलाबलं त्वम् ।
निस्संशयस्सपदि तस्य पदेऽभ्यषिञ्च-
स्तस्यानुजं कथमिदं हि विभीषणं च ? ॥२४॥

त्वं दक्षिणस्य निवसन्नुदधेस्तटेऽपि
दूरान्तरोत्तरपयोधिमहान्तरीपे ।
दैत्यान्निजैक शरपारणय न्किमेतां
लङ्कां स्थितोऽत्र कुरुषे किल न स्म भस्म ? ॥२५॥

एतत्कथं कथय यन्मथितस्त्वयासौ
हित्वा स्वभावनियमं प्रथितं त्रिलोक्याम् ।
अश्वाप्सरोविषसुधा विधुपारिजात-
लक्ष्म्यात्मना परिणतो जलधिर्बभूव ? ॥२६॥

यत्तादृशागसमरिं रघुवीर वीक्ष्य
विश्राम्यतामिति मुमोचिथ मुग्धमाजौ ।
कोऽयं गुणः कतरकोटिगतः कियान्वा
कस्य स्तुतेः पदमहो बत कस्य भूमिः ? ॥२७॥

एतेन वै सुविदितो भवदिन्द्रशत्रोर्मायास्त्रबन्धनजो विमोहः ।
यल्लक्ष्मणस्त्वदनुजो रिपुशक्तिमुग्धश्शत्रोर्गुरुर्हनुमतस्तु लघुत्वमाप ॥

हा हन्त हन्त भवतश्चरणारविन्द-
द्वंद्वं कदानु भविता विषयो ममाक्ष्णोः ? ।
योऽहं निरर्गळविनिर्गळ दन्धकारै-
र्वृक्षैस्तृणैश्च सुलभं समयं व्यतीतः ॥२९॥

वंशं रघो रनुजिघृक्षुरिहावतीर्णो
दिव्यैर्न्यवर्षिथ तथात्र भवद्गुणौघैः ।

त्वत्सन्निधि प्रभवशैत्यजुषो यथा हि
वृक्षाश्च तांति मभजन्त भवद्वियोगे　　॥३०॥

ये धर्ममाचरितुमभ्यसितुं च योगं
बोद्धुं च किञ्चन नजात्वधिकारभाजः।
तेऽपि त्वदाचरितभूतलबन्धगन्धा-
द्बन्धातिगाः परगतिं गमितास्तृणाद्याः　　॥३१॥

तादृग्गुणो ननु बभूविथ राघवत्वं
यस्तावकं चरितमन्वहमन्वभुंक्त।
सोऽत्रैव हन्त हनुमान्परमां विमुक्तिं
बुध्याऽवधूय चरितं तव सेवतेऽसौ　　॥३२॥

यस्त्वं कृतागसमपि प्रणतिप्रसक्तं तं वायसं परमया दययाऽक्षमिष्ठाः।
तेनैवमादृशजनस्यमहागसोऽपियुक्तं समाश्वसनमित्युपधारयामि ॥

सा पूतना शकटमर्जुनयोश्च युग्मं
बाल्योचितेऽन्यपरचेष्टितविस्फुलिंगे।
यस्यालभन्त शलभत्वमहो निगूढ-
स्सत्वं व्रजे ववृधिषे किल कंसभीत्या　　॥३४॥

पश्यत्सु सूरिषु सदा परमं पदं ते
देव्या श्रिया सह वसन्परया विभूत्या।
योगेन योगनिरतैः परिमृग्यमाणः
किं त्वं व्रजेषु नवनीतमहो व्यमुष्णाः?　　॥३५॥

यं दुर्ग्रहं सुमनसो मनसापि नित्यं
बन्धच्छिदं परममीशमुदाहरन्ति ।
दाम्ना निबद्ध इति शुश्रुम तं भवन्तं
नालं बभूविथ बत श्लथनाय तस्य ॥३६॥

ऐशं हि शैशवमपि व्यतिवेलखेलं यत्पूतनाशकटमर्जुनयोश्च युग्मम् ।
बाल्योचितान्यपरसाचिविचेष्टितेन हन्तालभन्त शलभायितमोजसस्ते॥

सत्येव गव्यनिवहे निजधाम्नि भूम्ना
पर्यस्तसद्मसु किमर्थमचूचुरस्त्वम् ?
मुष्णंश्च किं व्यजघटो घटशेषमग्रे
गोपीजनस्य परिहासपदं किमासीः ? ॥३८॥

यन्नाम नाथ नवनीतमचूचुरस्त्वं
तच्छादनाय यदि ते मतिराविरासीत्
किं मुग्धदिग्धममुना करपल्लवं ते
गात्रे प्रमृज्य निरगाः किल निर्विशंकः ? ॥३९॥

त्वामन्यगोपगृहगव्यमुषं यशोदा गुर्वी त्वदीयमवमानममृष्यमाणा ।
प्रेम्णाथ दामपरिणामजुषा बबन्ध तादृङ्न ते चरितमार्यजनास्सहन्ते ॥

मात्रा यदि त्वमसि दामनि सन्निबद्ध-
स्तच्छाविणामुदितचाक्षुषनिर्झराणाम् ।
बध्नासि हन्त हृदयं भगवन्कुतस्ते
सर्वो हि वश्यविषये विवृणोति वीर्यम् ॥४१॥

कान्तालकान्तममलं कमलायताक्षमुद्भ्रूविलासमुदितस्मितमुन्नसं च ।
वक्त्रं वहन्परमगोपगृहेषु किं त्वं गोपीमनांसि नवनीतमुतामुमोषीः ॥

सर्वं गुणाय गुणिनामिति सत्यमेत द्यत्खल्विहेतरजने मलिनत्वहेतुः ।
यद्गोपवेषविनिवेषणमुत्तमं ते गोपालनं च गणयन्ति गुणं गुणेषु ॥

गोपालपोतकतया निभृतं धरित्री-
मावस्तुकाम इव सन्नपिबाल्यलौल्यात् ।
ऐन्द्रं निहत्य मखमद्रिमथो दधानः
किं तस्थिषे सुरगणाय सवासवाय ? ॥४४॥

वेणुक्वणप्रणयिनि त्वयि लोकनाथे बृन्दावनं चरणसञ्चरणैः पुनाने ।
भावास्तदा वनभुवः किल कीदृशस्ते त्वद्गीतसिक्तसिकतासु वसुंधरासु ॥

धन्यैश्श्रुतं तदिह तावकरासकाले गीतेन येन हि शिलास्सलिलांबभूवुः ।
पञ्चापि किञ्च परिवृत्तगुणानि भूतान्युर्वीकृशानुमरुदम्बरशम्बराणि ॥

तेभ्यः कृती न किल कश्चिदिहास्ति ये वै
रासोत्सवोत्सुकधियस्तव काननान्ते ।
वेणुस्वनस्रुतरसौघपरिप्लुतां ते
स्वे सृक्किणी रसनया लिलिहुर्भुजङ्गाः ॥४७॥

अम्भोदनीलमरविन्ददळायताक्षं
पिञ्छावतंसमुररीकृतवेणुपाणिम् ।
त्वां गोपवेषपरिकर्मितकायकान्ति
धन्यास्तदा ददृशुरुन्मथितान्यभावाः ॥४८॥

गोवर्धनो गिरिवरो यमुना नदी सा
वृन्दावनं च मधुरा च पुरी पुराणी ।
अद्यापि हन्त सुलभाः कृतिनां जनाना-
मेते भवच्चरणचारजुषः प्रदेशाः ॥४९॥

वृन्दावने स्थिरचिरात्मककीटदूर्वापर्यन्तजन्तुनिचये बत ये तदानीम् ।
नैवालभामहि जनिं हतकास्त एते पापाः पदं तव कदा पुनराश्रयामः ?॥

हा जन्म तासु सिकतासु मया न लब्धं
रासे त्वया विरहिताः किलगोपकन्याः ।
यास्तावकीनपदपंक्तिजुषोऽजुषन्त
निक्षिप्य तत्र निजमङ्गमनङ्गतप्तम् ॥५१॥

आचिन्वतः कुसुममङ्घ्रिसरोरुहं ते
ये भेजिरे बत वनस्पतयो लता वा ।
अद्यापि तत्कुलभुवः कुलदैवतं मे
वृन्दावनं मम धियं च सनाथयन्ति ॥५२॥

यत्त्वत्प्रियं तदिह पुण्यमपुण्यमन्य-
न्नान्यत्तयोर्भवति लक्षणमत्र जातु ।
धूर्तायितं तव तु यत्किल रासगोष्ठ्यां
तत्कीर्तनं परमपावनमामनन्ति ॥५३॥

या कंसमुख्यनृपकीटनिग्रहणोत्था
सा निर्जितत्रिजगतस्तव नैव कीर्तिः ।

गोपालनादि यदिदं भवदीयकर्म-
त्यार्द्रीकरोति विदुषां हृदयं तदेतत् ॥५४॥

गोपालवेषपरिकर्मपरावरेशं यन्नाम धाम परमं तमसः परस्तात् ।
तत्पिञ्छलाञ्छनसुदामकृतोपवीतं गोधूळिधूसरितकुन्तलमंतरास्ताम् ॥

यद्वै जरासुतभयाद्विपलायथास्त्वं
तच्चेन्मनुष्यचरितानुविधानजं ते ।
तर्हि त्रिलोकगुरुमीश्वरमीश्वराणां
बाणाहवे किमिति शम्भुमजृम्भयस्त्वम् ॥५६॥

जातं कुतस्तदकृतज्ञविचेष्टितं ते पुत्री यया किल वरं ववृषे वृषांकात् ।
अक्षेषु सक्तमतिना च निरादरेण वाराणसी हरपुरी भवता विदग्धा ॥

संजीवयन्नपि मृतं सुतमुत्तराया
स्सांदीपिनेश्चिरमृतं सुतमानयंश्च ।
धाम्नो निजाद्द्विजसुतान्पुनरानयन्वा
स्वामेव तां तनुमहो कथमानयस्त्वम्? ॥५८॥

अद्यापि नास्त्युपरतिस्त्रिविधापचारा-
त्पापः परे निपतितोऽस्मि तमस्यपारे ।
एतादृशोऽहमगतिर्भवतो दयायाः
पात्रं त्वदीयचरणौ शरणं प्रपद्ये ॥५९॥

विस्रम्भणं त्वयि न यद्यपि मेऽस्ति नापि
श्रद्धा यथोक्तवचनार्थगता तथाऽपि ।

वाचं त्विमां सकृदथाप्यसकृन्मयोक्तां
सत्यां कुरुष्व दययैव दयैकसिन्धो ॥६०॥

पापीयसोऽपि शरणागतिशब्दभाजो नोपेक्षणं मम तवोचितमीश्वरस्य।
त्वद्ज्ञानशक्तिकरुणासु सतीषु नेह पापं पराक्रमितुमर्हति मामकीनम् ॥

इति श्रीहारीतकुलतिलकश्रीवत्साङ्कमिश्रविरचिते पञ्चस्तवे
॥ श्रीमदतिमानुषस्तवः समाप्तः ॥

## ॥ अथ क्षमाषोडशी ॥

यश्चक्रे रंगिणस्स्तोत्रं क्षमाषोडशिनामकम् ।
वेदव्यासस्यतनयं वेदाचार्यतमाश्रये ॥

श्रीरंगेश यया करोषि जगतां सृष्टिप्रतिष्ठाक्षया-
नत्रामुत्र च भोगमक्षयसुखं मोक्षं च तत्तत्तृषाम् ।
त्वत्स्वातन्त्र्यमपास्य कल्पितजगत्क्षेमाऽतिहृद्या स्वतः
क्षान्तिस्ते करुणासखी विजयतां क्षेमाय सर्वात्मनाम् ॥१॥

पापानांप्रथमोऽस्म्यहं भवति चेच्छास्त्रं प्रमाणं परं
श्रीरंगेश न विद्यतेऽत्र विशयस्सन्त्येव ते साक्षिणः ।
पृष्ट्वा तानधुना मयोदितमिदं सत्वेन गृह्येत चे
त्सत्यं ह्युक्तमिति क्षमस्व भगवन्स्वैरं तदस्मत्कृतम् ॥२॥

त्वत्क्षान्तिः खलु रंगराज महती तस्याः पुनस्तोषणे
पर्याप्तं न समस्तचेतनकृतं पापं ततो मामकम् ।
लक्ष्यं नेति न मोक्तुमर्हसि यतः कुत्रापि तुल्यो मया
नान्यस्सिध्यति पापकृत्तदधुना लब्धं तु नोपेक्ष्यताम् ॥३॥

पुण्यं पापमिति द्वयं खलु तयोः पूर्वेण यत्साध्यते
तत्तद्विस्मृतिकारकं ननुभृतां रंगेश सञ्जायते ।
पाश्चात्यस्य तु यत्फलं तदिह ते दुःखच्छिदस्स्मारकं
तेनानेन कृतं तदेव शिशुनेत्यस्मत्कृतं क्षम्यताम् ॥४॥

पुण्यं यत्तव पूजनं भवतिचेत्तत्कर्तुरिष्टे कृते
तत्स्याद्रंगपते कृतप्रतिकृतं सर्वेऽपि तत्कुर्वते ।
पापं चेदपराधमेव भवतस्तत्कर्तृसंरक्षणे
क्षान्तिस्ते निरुपाधिका निरुपमा लक्ष्येत तत्क्षम्यताम्

न द्वित्राणि कृतान्यनेन निरयैर्नालं पुनः कल्पितैः
पापानामिति मत्कृते तदधिकान्कर्तुं प्रवृत्ते त्वयि ।
तेभ्योऽप्यभ्यधिकानि तान्यहमपि क्षुद्रः करोमि क्षणा-
त्तद्यत्नस्तव निष्फलः खलु भवेत्तत्तत्क्षमैव क्षमम् ॥६॥

सम्भूयाखिलपातकैर्बहुविधं स्वं स्वं फलं दीयतां
सर्वं सह्यमिदं मयि त्वयि हरे जाग्रत्यपि त्रातरि ।
दुःखाक्रान्तमवेक्ष्य मामिहजनो दुष्टाशयस्त्वद्गुणान्
क्षान्त्यादीन्प्रति दुर्वचं यदिवदेत्सोढुं न तच्छक्यते

क्षान्तिर्नाम वरो गुणस्तव महान्श्रीरंगपृथ्वीपते
सोऽयं सन्नपि सापराधनिवहाभावे न विद्योतते ।
तस्मान्नैकविधापराधकरणे निष्ठावता नित्यशः
आप्रोत्येव मया प्रकाशमतुलं प्रप्स्याम्यहंचप्रथाम्

मत्पापक्षपणाय योजयसिचेद्घोरेण दंडेन मां
रंगाधीश्वर केवलाघकरणाद्दुःखं मम स्यान्महत् ।
तद्दृष्टुर्भवतोऽपि दुःखमतुलं घोरं दयाळो भवे-
त्तस्मात्तेऽपि सुखाय मत्कृतमिदं सर्वं त्वया क्षम्यताम् ॥९॥

देव त्वां शरणं प्रपन्नमपि मां दुःखान्यनन्याश्रयं
बाधन्ते यदि सर्वपापनिवहात्त्वां मोक्षयिष्याम्यहम् ।
इत्युक्तं तव वाक्यमर्थविधुरं जायेत यद्वा भवान्
तत्रासक्त इति प्रथेत हि ततो मां रक्षतु त्वत्क्षमा ॥१०॥

न त्वं क्षाम्यसि चेदिदं मम कृतंनास्त्यत्र काचित्क्षतिः
पूर्वं यत्समभूत्तदेव हि पुनर्जायेत तज्जायताम् ।
यद्वा स्यादधिकं च सोऽपि सुमहान्लाभोऽस्तु मे तादृशः
स्वामिन्दासजनस्तवायमधिकं स्वैरेण दूरीभवेत् ॥११॥

सोऽहं क्षुद्रतया जुगुप्सिततमं दुष्कर्म नित्यं स्मर-
न्कुर्वन्काममशुद्धरीतिरभवं श्रीरङ्गपृथ्वीपते ।
एतत्ते महतो विशुद्धमनसा स्मर्तुं न युक्तं खलु
क्षान्त्या विस्मरतत्ततोऽहमसुखान्मुक्तो भवेयं सुखी ॥१२॥

तत्तत्कर्मफलानुरूपमखिलो लोकस्त्वया सृज्यते
तस्मात्कर्मवशंवदत्वमधिकं वक्तुं तवापिक्षमम् ।
श्रीरंगेश्वर तत्प्रशान्तिविधये क्षान्त्या निराकृत्य मे
सर्वं पातकमाशु दर्शय भवत्स्वातन्त्र्यमत्युज्ज्वलम् ॥१३॥

श्रीरंगेश वचो मदीयमधुना व्यक्तं त्वया श्रूयतां-
पुण्यं तत्फलसङ्गमात्रविरहाद्भूयो न मां प्राप्नुयात् ।
पापं नैव तथा फलं वितनुते शक्यं न तद्वारणं
त्वत्क्षान्त्या तव शक्यमेव तदिदं सत्यं त्वया कल्प्यताम् ॥१४॥

श्रीरंगेश्वर पुण्यपापफलयोस्स्वाधीनतां कुर्वतो-
स्सर्वेषां सुखदुःखयोस्स्वयमहं मग्नाशयो मामपि ।
स्मर्तुं न प्रभवामि किम्पुनरहं त्वामन्तरन्तास्थितं
तत्ते त्वं क्षमया निरस्य कुरु मे त्वद्ध्यानयोग्यां दशाम् ॥१५॥

अल्पं चेदनवेक्षणीयसरणावारोप्यतां मत्कृतं
किञ्चिद्भूरि भवेदिदं यदि गुरून्सम्प्रेक्ष्य मे त्यज्यताम् ।
यद्वाऽनन्तमनन्तवैभवजुषा रङ्गक्षमावल्लभ
त्वत्क्षान्त्याः खलु लक्ष्यतामनुगुणामानीयतां तत्त्वया ॥१६॥

श्रीमान्कूरान्ववाये कलशजलनिधौ कौस्तुभाभोऽवतीर्ण-
श्श्रीवेदव्यासभट्टारकतनयवरो रङ्गराजस्यहृद्यः ।
वेदाचार्याग्र्यनामा विदितगुणगणो रंगिणस्तोत्रमेत-
च्चक्रे नित्याभिजप्यं सकलतनुभृतां सर्वपापापनुत्त्यै ॥१७॥

सन्त्यक्तसर्वविहितक्रियमर्थकाम श्रद्धालुमन्वहमनुष्ठितनिन्द्यकृत्यम् ।
अत्यन्तनास्तिकमनात्मगुणोपपन्नं मां रंगराज परया कृपया क्षमस्व ।

॥ इति श्रीवेदाचार्यविरचिता क्षमाषोडशी समाप्ता ॥

---

## ॥ दयाशतकम् ॥

श्रीमान्वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥

प्रपद्ये तं गिरिं प्रायः श्रीनिवासानुकम्पया ।
इक्षुसारस्रवन्त्येव यन्मूर्त्या शर्करायितम् ॥१॥

विगाहे तीर्थबहुलां शीतलां गुरुसंततिम् ।
श्रीनिवासदयाम्भोधिपरीवाहपरम्पराम् ॥२॥

कृतिनः कमलावासकारुण्यैकान्तिनो भजे ।
धत्ते यत्सूक्तिरूपेण त्रिवेदी सर्वयोग्यताम् ॥३॥

पराशरमुखान्वन्दे भगीरथनये स्थितान् ।
कमलाकान्तकारुण्यगङ्गाप्लावितमद्विधान् ॥४॥

अशेषविघ्नशमनमनीकेश्वरमाश्रये ।
श्रीमतः करुणाम्भोधौ शिक्षास्रोत इवोत्थितम् ॥५॥

समस्तजननीं वन्दे चैतन्यस्तन्यदायिनीम् ।
श्रेयसीं श्रीनिवासस्य करुणामिव रूपिणीम् ॥६॥

वन्दे वृषगिरीशस्य महिषीं विश्वधारिणीम् ।
तत्कृपाप्रतिघातानां क्षमया वारणं यया ॥७॥

निशामयतु मां नीळा यद्भोगपटलैर्ध्रुवम् ।
भावितं श्रीनिवासस्य भक्तदोषेष्वदर्शनम् ॥८॥

कमप्यनवधिं वन्दे करुणावरुणालयम् ।
वृषशैलतटस्थानां स्वयं व्यक्तिमुपागतम् ॥९॥

अकिंचननिधिं सूतिमपवर्गत्रिवर्गयोः ।
अञ्जनाद्रीश्वरदयामभिष्टौमि निरञ्जनाम् ॥१०॥

अनुचरशक्त्यादिगुणामग्रेसरबोधविरचितालोकाम् ।
स्वाधीनवृषगिरीशां स्वयं प्रभूतां प्रमाणयामि दयाम् ॥११॥

अपि निखिललोकसुचरितमुष्टिंधयदुरितमूर्च्छनाजुष्टम् ।
संजीवयतु दये मामञ्जनगिरिनाथरञ्जनी भवती ॥१२॥

भगवति दये भवत्या वृषगिरिनाथे समाप्लुते तुङ्गे ।
अप्रतिघमज्जनानां हस्तालम्बो मदागसां मृग्यः ॥१३॥

कृपणजनकल्पलतिकां कृतापराधस्य निष्क्रियामाद्याम् ।
वृषगिरिनाथदये त्वां विदन्ति संसारतारिणीं विबुधाः ॥१४॥

वृषगिरिगृहमेधिगुणा बोधबलैश्वर्यवीर्यशक्तिमुखाः ।
दोषा भवेयुरेते यदि नाम दये त्वया विनाभूताः ॥१५॥

आसृष्टिसंततानामपराधानां निरोधिनीं जगतः ।
पद्मासहायकरुणे प्रतिसंचरकेळिमाचरसि ॥१६॥

अचिदविशिष्टान्प्रळये जन्तूनवलोक्य जातनिर्वेदा ।
करणकळेबरयोगं वितरसि वृषशैलनाथकरुणे त्वम् ॥१७॥

अनुगुणदशार्पितेन श्रीधरकरुणे समाहितस्नेहा ।
शमयसि तमः प्रजानां शास्त्रमयेन स्थिरप्रदीपेन ॥१८॥

रूढा वृषाचलपतेः पादे मुखकान्तिपत्रलच्छाया ।
करुणे सुखयसि विनतान्कटाक्षविटपैः करापचेयफलैः ॥१९॥

नयने वृषाचलेन्दोस्तारामैत्रीं दधानया करुणे ।
दृष्टस्त्वयैव जनिमानपवर्गमकृष्टपच्यमनुभवति ॥२०॥

समयोपनतैस्तव प्रवाहैरनुकम्पे कृतसम्प्लवा धरित्री ।
शरणागतसस्यमालिनीयं वृषशैलेशकृषीवलं धिनोति ॥२१॥

कलशोदधिसंपदो भवत्याः करुणे सन्मतिमन्थसंस्कृतायाः ।
अमृतांशमवैमि दिव्यदेहं मृतसंजीवनमञ्जनाचलेन्दोः ॥२२॥

जलधेरिव शीतता दये त्वं वृषशैलाधिपतेः स्वभावभूता ।
प्रलयारभटीनटीं तदीक्षां प्रसभं ग्राहयसि प्रसत्तिलास्यम् ॥२३॥

प्रणतप्रतिकूलमूलघाती प्रतिघः कोऽपि वृषाचलेश्वरस्य ।
कलमे यवसापचायनीत्या करुणे किंकरतां तवोपयाति ॥२४॥

अबहिष्कृतनिग्रहान्विदन्तः कमलाकान्तगुणान्स्वतन्त्रतादीन् ।
अविकल्पमनुग्रहं दुहानां भवतीमेव दये भजन्ति सन्तः ॥२५॥

कमलानिलयस्त्वया दयालुः करुणे निष्करुणा निरूपणे त्वम् ।
अत एव हि तावकाश्रितानां दुरितानां भवति त्वदेव भीतिः ॥२६॥

अतिलङ्घितशासनेष्वभीक्ष्णं वृषशैलाधिपतिर्विजृम्भितोष्मा ।
पुनरेव दये क्षमानिदानैर्भवतीमाद्रियते भवत्यधीनैः ॥२७॥

करुणे दुरितेषु मामकेषु प्रतिकारान्तरदुर्जयेषु खिन्नः ।
कवचायितया त्वयैव शार्ङ्गी विजयस्थानमुपाश्रितो वृषाद्रिम् ॥२८॥

मयि तिष्ठति दुष्कृतां प्रधाने मितदोषानितरान्विचिन्वती त्वम् ।
अपराधगणैरपूर्णकुक्षिः कमलाकान्तदये कथं भवित्री? ॥२९॥

अहमस्म्यपराधचक्रवर्ती करुणे त्वं च गुणेषु सार्वभौमी ।
विदुषी स्थितिमीदृशीं स्वयं मां वृषशैलेश्वरपादसात्कुरु त्वम् ॥३०॥

अशिथिलकरणेऽस्मिन्नक्षतश्वासवृत्तौ
वपुषि गमनयोग्ये वासमासादयेयम् ।
वृषगिरिकटकेषु व्यञ्जयत्सु प्रतीतै-
र्मधुमथनदये त्वां वारिधाराविशेषैः ॥३१॥

अविदितनिजयोगक्षेममात्मानभिज्ञं
गुणलवरहितं मां गोप्तुकामा दये त्वम् ।
परवति चतुरैस्ते विभ्रमैः श्रीनिवासे
बहुमतिमनपायां विन्दसि श्रीधरण्योः ॥३२॥

फलवितरणदक्षं पक्षपातानभिज्ञं
प्रगुणमनुविधेयं प्राप्य पद्मासहायम् ।
महति गुणसमाजे मानपूर्वं दये त्वं
प्रतिवदसि यथार्हं पाप्मनां मामकानाम् ॥३३॥

अनुभवितुमघौघं नालमागामिकालः
प्रशमयितुमशेषं निष्क्रियाभिर्न शक्यम् ।
स्वयमिति हि दये त्वं स्वीकृतश्रीनिवासा
शिथिलितभवभीतिः श्रेयसे जायसे नः ॥३४॥

अवतरणविशेषैरात्मलीलापदेशै-
रवमतिमनुकम्पे मन्दचित्तेषु विन्दन् ।

वृषभशिखरिनाथस्त्वन्निदेशेन नूनं
भजति शरणभाजां भाविनो जन्मभेदान् ॥३५॥

परहितमनुकम्पे भावयन्त्यां भवत्यां
स्थिरमनुपधि हार्दं श्रीनिवासो दधानः ।
ललितरुचिषु लक्ष्मीभूमिनीळासु नूनं
प्रथयति बहुमानं त्वत्प्रतिच्छन्दबुद्ध्या ॥३६॥

वृषगिरिसविधेषु व्याजतो वासभाजां
दुरितकलुषितानां दूयमाना दये त्वम् ।
करणविलयकाले कान्दिशीकस्मृतीनां
स्मरयसि बहुलीलं माधवं सावधाना ॥३७॥

दिशि दिशि गतिविद्भिर्देशिकैर्नीयमाना
स्थिरतरमनुकम्पे स्त्यानलग्ना गुणैस्त्वम् ।
परिगतवृषशैलं पारमारोपयन्ती
भवजलधिगतानां पोतपात्री भवित्री ॥३८॥

परिमितफलसङ्गात्प्राणिनः किंपचानाः
निगमविपणिमध्ये नित्यमुक्तानुषक्तम् ।
प्रसदनमनुकम्पे प्राप्तवत्यां भवत्यां
वृषगिरिहरिनीलं व्यञ्जितं निर्विशन्ति ॥३९॥

त्वयि बहुमतिहीनः श्रीनिवासानुकम्पे
जगति गतिमिहान्यां देवि संमन्यते यः ।

स खलु विबुधासिन्धौ संनिकर्षे वहन्त्यां
शमयति मृगतृष्णावीचिकाभिः पिपासाम् ॥४०॥

आज्ञां ख्यातिं धनमनुचरानाधिराज्यादिकं वा
काले दृष्ट्वा कमलवसतेरप्यकिंचित्कराणि ।
पद्माकान्तं प्रणिहितवतीं पालनेऽनन्यसाध्ये
साराभिज्ञा जगति कृतिनः संश्रयन्ते दये त्वाम् ॥४१॥

प्राजापत्यप्रभृतिविभवं प्रेक्ष्य पर्यायदुःखं
जन्माकाङ्क्षन्वृषगिरिवने जग्मुषां तस्थुषां वा
आशासानाः कतिचन विभोस्त्वत्परिष्वङ्गधन्यै-
रङ्गीकारं क्षणमपि दये हार्दतुङ्गैरपाङ्गैः ॥४२॥

नाभीपद्मस्फुरणसुभगा नव्यनीलोत्पलाभा
क्रीडाशैलं कमपि करुणे वृण्वती वेङ्कटाख्यम्।
शीता नित्यं प्रसदनवती श्रद्धानावगाह्या
दिव्या काचिज्जयति महती दीर्घिका तावकीना ॥४३॥

यस्मिन्दृष्टे तदितरसुखैर्गम्यते गोष्पदत्वं
सत्यं ज्ञानं त्रिभिरवधिभिर्मुक्तमानन्दसिन्धुम् ।
त्वत्स्वीकारात्तमिह कृतिनः सूरिबृन्दानुभाव्यं
नित्यापूर्वं निधिमिवदये निर्विशन्त्यञ्जनाद्रौ ॥४४॥

सारं लब्ध्वा कमपि महतः श्रीनिवासाम्बुराशेः
काले काले घनरसवती कालिकेवानुकम्पे ।

व्यक्तोन्मेषा मृगपतिगिरौ विश्वमाप्याययन्ती
शीलोपज्ञं क्षरति भवती शीतलं सद्गुणौघम् ॥४५॥

भीमे नित्यं भवज़लनिधौ मज्जतां मानवाना-
मालम्बार्थं वृषगिरिपतिस्त्वन्निदेशात्प्रयुङ्क्ते ।
प्रज्ञासारं प्रकृतिमहता मूलभागेन जुष्टं
शाखाभेदैः सुभगमनघं शाश्वतं शास्त्रपाणिम् ॥४६॥

विद्वत्सेवाकतकनिकषैर्वीतपङ्काशयानां
पद्माकान्तः प्रणयति दये दर्पणं ते स्वशास्त्रम् ।
लीलादक्षां त्वदनवसरे लाळयन्विप्रलिप्सां
मायाशास्त्राण्यपि शमयितुं त्वत्प्रपन्नप्रतीपान् ॥४७॥

दैवात्प्राप्ते वृषगिरितटं देहिनि त्वन्निदाना-
त्स्वामिन्पाहीत्यवशवचने विंदति स्वापमन्त्यम् ।
देवः श्रीमांदिशति करुणे दृष्टिमिच्छंस्त्वदीया-
मुद्घातेन श्रुतिपरिषदामुत्तरेणाभिमुख्यम् ॥४८॥

श्रेयःसूतिं सकृदपि दये संमतां यः सखीं ते
शीतोदारामलभत जनः श्रीनिवासस्य दृष्टिम् ।
देवादीनामयमनृणतां देहवत्त्वेऽपि विन्दन्
बन्धान्मुक्तो बलिभिरनघैः पूर्यते तत्प्रयुक्तैः ॥४९॥

दिव्यापाङ्गं दिशसि करुणे येषु सद्देशिकात्मा
क्षिप्रं प्राप्ता वृषगिरिपतिं क्षत्रबन्ध्वादयस्ते ;

विश्वाचार्या विधिशिवमुखाः स्वाधिकारोपरुद्धाः
मन्ये माता जड इव सुते वत्सला मादृशे त्वम् ॥५०॥

अतिकृपणोऽपि जन्तुरधिगम्य दये भवती-
मशिथिलधर्मसेतुपदवीं रुचिराम्चिरात् ।
अमितमहोर्मिजालमतिलङ्घ्य भवाम्बुनिधिं
भवति वृषाचलेशपदपत्तननित्यधनी ॥५१॥

अभिमुखभावसंपदभिसंभविनां भविनां
क्वचिदुपलक्षिता क्वचिदभङ्गुरगूढगतिः ।
विमलरसावहा वृषगिरीशदये भवती
सपदि सरस्वतीव शमयत्यघमप्रतिघम् ॥५२॥

अपि करुणे जनस्य तरुणेन्दुविभूषणता-
मपि कमलासनत्वमपि धाम वृषाद्रिपतेः ।
तरतमतावशेन तनुते ननु ते विततिः
परहितवर्ष्मणा परिपचेळिमकेळिमती ॥५३॥

धृतभुवना दये त्रिविधगत्यनुकूलतरा
वृषगिरिनाथपादपरिरम्भवती भवती ।
अविदितवैभवापि सुरसिन्धुरिवातनुते
सकृदवगाहमानमपतापमपापमपि ॥५४॥

निगमसमाश्रिता निखिललोकसमृद्धिकरी
भजदघकूलमुद्वहगतिः परितप्तहिता ।

प्रकटितहंसमत्स्यकमठाद्यवतारशता
विबुधसरिच्छ्रियं वृषगिरीशदये वहसि ॥५५॥

जगति मितंपचा त्वदितरा तु दये तरळा
फलनियमोज्झिता भवति संतपनाय पुनः ।
त्वमिह निरङ्कुशप्रशकनादिविभूतिमती
वितरसि देहिनां निरवधिं वृषशैलनिधिम् ॥५६॥

सकरुणलौकिकप्रभुपरिग्रहनिग्रहयो-
र्नियतिमुपाधिचक्रपरिवृत्तिपरम्परया ।
वृषभमहीधरेशकरुणे वितरङ्गयतां
अतिमितसंपदि त्वयि कथं भविता विशयः ? ॥५७॥

वृषगिरिकृष्णमेघजनितां जनितापहरां
त्वदभिमतिं सुवृष्टिमुपजीव्य निवृत्ततृषः ।
बहुषु जलाशयेषु बहुमानमपोह्य दये
न जहति सत्पथं जगति चातकवत्कृतिनः ॥५८॥

त्वदुदयतूलिकाभिरमुना वृषशैलजुषा
स्थिरचरशिल्पिनैव परिकल्पितचित्रधियः ।
यतिपतियामुनप्रभृतयः प्रथयन्ति दये
जगति हितं न नस्त्वयि भरन्यसनादधिकम् ॥५९॥

मृदुहृदये दये मृदितकामहिते महिते
धृतविबुधे बुधेषु विततात्मधुरे मधुरे ।

वृषगिरिसार्वभौमदयिते मयि ते महतीं
भवुकनिधे निधेहि भवमूलहरां लहरीम् ॥६०॥

अकूपारैरेकोदकसमयवैतण्डिकजवै-
रनिर्वाप्यां क्षिप्रं क्षपयितुमविद्याख्यबडबाम् ।
कृपे त्वं तत्तादृक्प्रथिमवृषपृथ्वीधरपति-
स्वरूपद्वैगुण्याद्द्विगुणनिजबिन्दुः प्रभवसि ॥६१॥

विवित्सावेतालीविगमपरिशुद्धेऽपि हृदये
पटुप्रत्याहारप्रभृतिपुटपाकप्रचकिताः ।
नमन्तस्त्वां नारायणशिखरिकूटस्थकरुणे
निरुद्धत्वद्द्रोहा नृपतिसुतनीतिं न जहति ॥६२॥

अनन्याधीनः सन्भवति परतन्त्रः प्रणमतां
कृपे सर्वद्रष्टा न गणयति तेषामपकृतिम् ।
पतिस्त्वत्पारार्थ्यं प्रथयति वृषक्ष्माधरपति-
र्व्यवस्थां वैयात्यादिति विघटयन्ती विहरसि ॥६३॥

अपां पत्युः शत्रूनसहनमुनेर्धर्मनिगळं
कृपे काकस्यैकं हितमिति हिनस्ति स्म नयनम् ।
विलीनस्वातन्त्र्यो वृषगिरिपतिस्त्वद्विहृतिभि-
र्दिशत्येवं देवो जनितसुगतिं दण्डनगतिम् ॥६४॥

निषादानां नेता कपिकुलपतिः कापि शबरी
कुचेलः कुब्जा सा व्रजयुवतयो माल्यकृदिति ।

अमीषां निम्नत्वं वृषगिरिपतेरुन्नतिमपि
प्रभूतैः स्रोतोभिः प्रसभमनुकम्पे शमयसि ॥६५॥

त्वया दृष्टस्तुष्टिं भजति परमेष्ठी निजपदे
वहन्मूर्तीरष्टौ विहरति मृडानीपरिबृढः ।
बिभर्ति स्वाराज्यं वृषशिखरिशृङ्गारिकरुणे
शुनासीरो देवासुरसमरनासीरसुभटः ॥६६॥

दये दुग्धोदन्वद्व्यतियुतसुधासिन्धुनयत-
स्त्वदाश्लेषान्नित्यं जनितमृतसंजीवनदशाः ।
स्वदन्ते दान्तेभ्यः श्रुतिवदनकर्पूरगुळिका
विवृण्वन्ताश्चित्तं वृषशिखरिविश्वंभरगुणाः ॥६७॥

जगज्जन्मस्थेमप्रळयरचनाकेळिरसिको
विमुक्त्यैकद्वारं विघटितकवाटं प्रणयिनाम् ।
इति त्वय्यायत्तं द्वितयमुपधीकृत्य करुणे
विशुद्धानां वाचां वृषशिखरिनाथः स्तुतिपरम् ॥६८॥

कलिक्षोभोन्मीलत्क्षितिकलुषकूलंकषजवै-
रनुच्छेदैरेतैरवटतटवैषम्यरहितैः ।
प्रवाहैस्ते पद्मासहचरपरिष्कारिणि कृपे
विकल्पन्तेऽनल्पा वृषशिखरिणो निर्झरगणाः ॥६९॥

खिलं चेतोवृत्तेः किमिदमिति विस्मेरभुवनं
कृपे सिंहक्ष्माभृत्कृतमुखचमत्कारकरणम् ।

भरन्यासच्छन्नप्रबलवृजिनप्राभृतभृतां
प्रतिप्रस्थानं ते श्रुतिनगरशृङ्गाटकजुषः ॥७०॥

त्रिविधचिदचित्सत्तास्थेमप्रवृत्तिनियामिका
वृषगिरिविभोरिच्छा सा त्वं परैरपराहता ।
कृपणपरभृत्किंकुर्वाणप्रभूतगुणान्तरा
वहसि करुणे वैचक्षण्यं मदीक्षणसाहसे ॥७१॥

वृषगिरिपतेर्हृद्या विश्वावतारसहायिनी
क्षपितनिखिलावद्या देवि क्षमादिनिषेविता ।
भुवनजननी पुंसां भोगापवर्गविधायिनी
वितमसि पदे व्यक्तिं नित्यां बिभर्षि दये स्वयम् ॥७२॥

स्वयमुदयिनः सिद्धाद्याविष्कृताश्च शुभालया
विविधविभवव्यूहावासाः परं च पदं विभोः ।
वृषगिरिमुखेष्वेतेष्विच्छावधिप्रतिलब्धये
दृढविनिहिता निश्रेणिस्त्वं दये निजपर्वभिः ॥७३॥

हितमिति जगद्दृष्ट्या कॢप्तैरकॢप्तफलान्तरै-
रमतिविहितैरन्यैर्धर्मायितैश्च यदृच्छया ।
परिणतबहुच्छद्मा पद्मासहायदये स्वयं
प्रदिशसि निजाभिप्रेतं नः प्रशाम्यदपत्रपा ॥७४॥

अतिविधिशिवैरैश्वर्यात्मानुभूतिरसैर्जना-
नहृदयमिहोपच्छन्दैषामसङ्गदशार्थिनी ।

तृषितजनतातीर्थस्नानक्रमक्षपितैनसां
वितरसि दये वीतातङ्का वृषाद्रिपतेः पदम्   ॥७५॥

वृषगिरिसुधासिन्धौ जन्तुर्दये निहितस्त्वया
भवभयपरीतापच्छित्त्यै भजन्नघमर्षणम् ।
मुषितकलुषो मुक्तेरग्रेसरैरभिपूर्यते
स्वयमुपनतैः स्वात्मानन्दप्रभृत्यनुबन्धिभिः   ॥७६॥

अनितरजुषामन्तर्मूलेऽप्यपायपरिप्लवे
कृतविदनघा विच्छित्त्यैषां कृपे यमवश्यताम् ।
प्रपदनफलप्रत्यादेशप्रसङ्गविवर्जितं
प्रतिविधिमुपाधत्से सार्धं वृषाद्रिहितैहिणा   ॥७७॥

क्षणविलयिनां शास्त्रार्थानां फलाय निवेशिने
सुरपितृगणे निर्वेशात्प्रागपि प्रळयं गते ।
अधिगतवृषक्ष्माभृन्नाथामकालवशंवदां
प्रतिभुवमिह व्याचख्युस्त्वां कृपे निरुपप्लवाम्   ॥७८॥

त्वदुपसदनादद्य श्वो वा महाप्रळयेऽपि वा
वितरति निजं पादाम्भोजं वृषाचलशेखरः ।
तदिह करुणे तत्तत्क्रीडातरङ्गपरम्परा-
तरतमतया जुष्टायास्ते दुरत्ययतां विदुः   ॥७९॥

प्रणिहितधियां त्वत्संपृक्ते वृषाद्रिशिखामणौ
प्रसृमरसुधाधाराकारा प्रसीदति भावना ।

दृढमिति दये दत्तास्वादं विमुक्तिवलाहकं
निभृतगरुतो निध्यायन्ति स्थिराशयचातकाः ॥८०॥

कृपे विगतवेलया कृतसमग्रपोषैस्त्वया
कलिज्वलनदुर्गते जगति कालमेघायितम् ।
वृषक्षितिधरादिषु स्थितिपदेषु सानुप्लवै-
र्वृषाद्रिपतिविग्रहैर्व्यपगताखिलावग्रहैः ॥८१॥

प्रसूय विविधं जगत्तदभिवृद्धये त्वं दये
समीक्षणविचिन्तनप्रभृतिभिः स्वयं तादृशैः ।
विचित्रगुणचित्रितां विविधदोषवैदेशिकीं
वृषाचलपतेस्तनुं विशसि मत्स्यकूर्मादिकाम् ॥८२॥

युगान्तसमयोचितं भजति योगनिद्रारसं
वृषक्षितिभृदीश्वरे विहरणक्रमाज्जाग्रति ।
उदीर्णचतुरर्णवीकदनवेदिनीं मेदिनीं
समुद्धृतवती दये त्वदभिजुष्टया दंष्ट्रया ॥८३॥

सटापटलभीषणे सरभसाट्टहासोद्भटे
स्फुरत्क्रुधि परिस्फुटभ्रुकुटिकेऽपि वक्त्रे कृते ।
दये वृषगिरीशितुर्दनुजडिम्भदत्तस्तना
सरोजसदृशा दृशा समुदिताकृतिर्दृश्यसे ॥८४॥

प्रसक्तमधुना विधिप्रणिहितैः सपर्योदकैः
समस्तदुरितच्छिदा निगमगन्धिना त्वं दये ।

अशेषमविशेषतस्त्रिजगदञ्जनाद्रीशितु-
श्चराचरमचीकरश्चरणपङ्कजेनाङ्कितम्     ॥८५॥

परश्वथतपोधनप्रथनसत्क्रतूपाकृत-
क्षितीश्वरपशुक्षरत्क्षतजकुङ्कुमस्थासकैः ।
वृषाचलदयालुना ननु विहर्तुमालिप्यथाः
निधाय हृदये दये निहतरक्षितानां हितम्     ॥८६॥

कृपे कृतजगद्धिते कृपणजन्तुचिन्तामणे
रमासहचरं क्षितौ रघुधुरीणयन्त्या त्वया ।
व्यभज्यत सरित्पतिः सकृदवेक्षणत्तत्क्षणा-
त्प्रकृष्टबहुपातकप्रशमहेतुना सेतुना     ॥८७॥

कृपे परवतस्त्वया वृषगिरीशितुः क्रीडितं
जगद्धितमशेषतस्तदिदमित्थमर्थाप्यते ।
मदच्छलपरिच्युतप्रणतदुष्कृतप्रेक्षितै-
र्हतप्रबलदानवैर्हलधरस्य हेलाशतैः     ॥८८॥

प्रभूतविबुधद्विषद्भरणखिन्नविश्वंभरा-
भरापनयनच्छलात्त्वमवतार्य लक्ष्मीधरम् ।
निराकृतवती दये निगमसौधदीपश्रिया
विपश्चिदविगीतया जगति गीतयान्धं तमः     ॥८९॥

वृषाद्रिहयसादिनः प्रबलदोर्मरुत्प्रेङ्खित-
स्त्विषा स्फुटतटिद्गुणस्त्वदवसेकसंस्कारवान् ।

कारिष्यति दये कलिप्रबलधर्मनिर्मूलनं
पुनः कृतयुगाङ्कुरं भुवि कृपाणधाराधरः ॥९०॥

विश्वोपकारमिति नाम सदा दुहाना-
मद्यापि देवि भवतीमवधीरयन्तम् ।
नाथे निवेशय वृषाद्रिपतौ दये त्वं
न्यस्तस्वरक्षणभरं त्वयि मां त्वयैव ॥९१॥

नैसर्गिकेण तरसा करुणे नियुक्ता
निम्नेतरेऽपि मयि ते विततिर्यदि स्यात् ।
विस्मापयेद्वृषगिरीश्वरमप्यनार्या
वेलातिलङ्घनदशेव महाम्बुराशेः ॥९२॥

विज्ञातशासनगतिर्विपरीतवृत्त्या वृत्रादिभिः परिचितां पदवीं भजामि ।
एवंविधे वृषगिरीशदये मयि त्वं दीने विभोः शमय दण्डधरत्वलीलाम् ॥

मासाहसोक्तिघनकञ्चुकवञ्चितान्यः
पश्यत्सु तेषु विदधाम्यतिसाहसानि ।
पद्मासहायकरुणे न रुणत्सि किं त्वं
घोरं कुलिङ्गशकुनेरिव चेष्टितं मे ॥९४॥

विक्षेपमर्हसि दये विपुलायितेऽपि
व्याजं विभाव्य वृषशैलपतेर्विहारम् ।
स्वाधीनसत्त्वसरणिः स्वयमत्र जन्तौ
द्राघीयसी दृढतरा गुणवागुरा त्वम् ॥९५॥

संतन्यमानमपराधगणं विचिन्त्य
त्रस्यामि हन्त भवतीं च विभावयामि ।
अह्नाय मे वृषगिरीशदये जहीमा-
माशीविषग्रहणकेळिनिभामवस्थाम् ॥९६॥

औत्सुक्यपूर्वमुपहृत्य महापराधान्
मातः प्रसादयितुमिच्छति मे मनस्त्वाम् ।
आलिह्य तान्निरवशेषमलब्धतृप्ति-
स्ताम्यस्यहो वृषगिरीशधृता दये त्वम् ॥९७॥

जह्याद्वृषाचलपतिः प्रतिघेऽपि न त्वां
घर्मोपतप्त इव शीतळतामुदन्वान् ।
सा मामरुन्तुदभरन्यसनानुवृत्ति-
स्तद्वीक्षणैः स्पृश दये तव केळिपद्मैः ॥९८॥

दृष्टेऽपि दुर्बलधियं दमनेऽपि दृप्तं
स्नात्वापि धूळिरसिकं भजनेऽपि भीमम् ।
बद्ध्वा गृहाण वृषशैलपतेर्दये मां
त्वद्वारणं स्वयमनुग्रहशृङ्खलाभिः ॥९९॥

नातः परं किमपि मे त्वयि नाथनीयं
मातर्दये मयि कुरुष्व तथा प्रसादम् ।
बद्धादरो वृषगिरिप्रणयी यथासौ
मुक्तानुभूतिमिह दास्यति मे मुकुन्दः ॥१००॥

निःसीमवैभवजुषां मिषतां गुणानां
स्तोतुर्दये वृषगिरीशगुणेश्वरीं त्वाम् ।
तैरेव नूनमवशैरभिनन्दितं मे
सत्यापितं तव बलादकुतोभयत्वम् ॥१०१॥

अद्यापि तद्वृषगिरीशदये भवत्यामारम्भमात्रमनिदंप्रथमस्तुतीनाम् ।
संदर्शितस्वपरनिर्वहणा सहेथाः मन्दस्य साहसमिदं त्वयि वन्दिनो मे॥

प्रायो दये त्वदनुभावमहाम्बुराशौ प्राचेतसप्रभृतयोऽपिपरं तटस्थाः ।
तत्रावतीर्णमतलस्पृशमाप्लुतं मां पद्मापतेः प्रहसनोचितमाद्रियेथाः ॥

वेदान्तदेशिकपदे विनिवेश्य बालं देवो दयाशतकमेतदवादयन्माम् ।
वैहारिकेण विधिना समये गृहीतं वीणाविशेषमिव वेङ्कटशैलनाथः ॥

अनवधिमधिकृत्य श्रीनिवासानुकम्पा-
मवितथविषयत्वाद्विश्वमव्रीडयन्ती ।
विविधकुशलनीवी वेङ्कटेशप्रसूता
स्तुतिरियमनवद्या शोभते सत्त्वभाजाम् ॥१०५॥

शतकमिदमुदारं सम्यगभ्यस्यमाना-
न्वृषगिरिमधिरुह्य व्यक्तमालोकयन्ती ।
अनितरशरणानामाधिराज्येऽभिषिञ्चे-
च्छमितविमतपक्षा शार्ङ्गधन्वानुकम्पा ॥१०६॥

विश्वानुग्रहमातरं व्यतिषजत्स्वर्गापवर्गां सुधा-
सध्रीचीमिति वेङ्कटेश्वरकविर्भक्त्या दयामस्तुत ।

पद्यानामिह यद्विधेयभगवत्संकल्पकल्पद्रुमात्
झंझामारुतधूतचूतनयतः सांपातिकोऽयं क्रमः ॥१०७॥

कामं सन्तु मिथः करम्बितगुणावद्यानि पद्यानि नः
कस्यास्मिञ्छतके सदम्बुकतके दोषश्रुतिं क्षाम्यति ।
निष्प्रत्यूहवृषाद्रिनिर्झरझरत्कारच्छलेनोच्चल-
द्दीनालम्बनदिव्यदंपतिदयाकल्लोलकोलाहलः ॥१०८॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु दयाशतकं संपूर्णम् ॥

---

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥

---

## ॥ अथ अष्टश्लोकी ॥

श्रीपराशरभट्टार्यश्श्रीरंगेशपुरोहितः ।
श्रीवत्साङ्कसुतश्श्रीमान्श्रेयसे मेस्तुभूयसे ॥

अकारार्थो विष्णुर्जगदुदयरक्षाप्रळयकृ-
न्मकारार्थो जीवस्तदुपकरणं वैष्णवमिदम् ।
उकारोऽनन्यार्हं नियमयति सम्बन्धमनयो-
स्त्रयीसारस्त्र्यात्मा प्रणव इममर्थं समदिशत् ॥१॥

मन्त्रब्रह्मणि मध्यमेन नमसा पुंसस्स्वरूपं गति-
र्गम्यं शिक्षितमीक्षितेन पुरतः पश्चादपि स्थानतः ।

स्वातन्त्र्यं निजरक्षणं समुचिता वृत्तिश्च नान्योचिता
तस्यैवेति हरेर्विविच्य कथितं स्वस्यापि नार्हं ततः ॥२॥

अकारार्थायैव स्वमहमथ मह्यं न विवहो
नराणां नित्यानामयनमिति नारायणपदम् ।
यमाहास्मै कालं सकलमपि सर्वत्र सकला-
स्ववस्थास्वाविस्युर्मम सहजकैङ्कर्यविधयः ॥३॥

देहासक्तात्मबुद्धिर्यदि भवति पदं साधु विद्यात्तृतीयं
स्वातन्त्र्यान्धो यदि स्यात्प्रथममितरशेषत्वधीश्चेद्द्वितीयं ।
आत्मत्राणोन्मुखश्चेन्नम इति च पदं बान्धवाभासलोल-
श्शब्दं नारायणाख्यं विषयचपलधीश्चेच्चतुर्थीं प्रपन्नः ॥४॥

ईशानां जगतामधीशदयितां नित्यानपायां श्रियं
संश्रित्याश्रयणोचिताखिलगुणस्याङ्घ्री हरेराश्रये ।
इष्टोपायतया श्रिया च सहितायात्मेश्वरायार्थये
कर्तुं दास्यमशेषमप्रतिहतं नित्यं त्वहं निर्ममः ॥५॥

नेतृत्वं नित्ययोगं समुचितगुणजातं तनुख्यापनं चो-
पायं कर्तव्यभागं त्वथ मिथुनपरं प्राप्यमेवं प्रसिद्धम् ।
स्वामित्वप्रार्थनां च प्रबलतरविरोधिप्रहाणं दशैता-
न्मन्तारं त्रायते चेत्यधिगतनिगमष्षट्पदोऽयं द्विखण्डः ॥६॥

मत्प्राप्त्यर्थतया मयोक्तमखिलं सन्त्यज्य धर्मं पुन-
र्मामेकं मदवाप्तये शरणमित्यार्तोवसायं कुरु ।

त्वामेवं व्यवसाययुक्तमखिलज्ञानादिपूर्णो ह्यहं
मत्प्राप्तिप्रतिबन्धकैर्विरहितं कुर्यां शुचं मा कृथाः ॥७॥

निश्चित्य त्वदधीनतां मयि सदा कर्माद्युपायान् हरे
कर्तुं त्यक्तुमपि प्रपत्तुमनलं सीदामि दुःखाकुलः ।
एतद्ज्ञानमुपेयुषो मम पुनस्सर्वापराधक्षयं
कर्तासीति दृढोऽस्मि ते तु चरमं वाक्यं स्मरन् सारथेः ॥८॥

॥ इति श्रीपराशरभट्टारक विरचिता अष्टश्लोकी समाप्ता ॥

## ॥ दशावतारस्तोत्रम् ॥

श्रीमान्वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥

देवो नः शुभमातनोतु दशधा निर्वर्तयन्भूमिकां
रङ्गे धामनि लब्धनिर्भररसैरध्यक्षितो भावुकैः ।
यद्भावेषु पृथग्विधेष्वनुगुणान्भावान्स्वयं बिभ्रती
यद्धर्मैरिह धर्मिणी विहरते नानाकृतिर्नायिका ॥१॥

निर्मग्नश्रुतिजालमार्गणदशादत्तक्षणैर्वीक्षणै-
रन्तस्तन्वदिवारविन्दगहनान्यौदन्वतानामपाम् ।
निष्प्रत्यूहतरङ्गरिङ्खणमिथःप्रत्यूढपाथश्छटा-
डोलारोहसदोहळं भगवतो मात्स्यं वपुः पातु नः ॥२॥

अव्यासुर्भुवनत्रयीमनिभृतं कण्डूयनैरद्रिणा
निद्राणस्य परस्य कूर्मवपुषो निश्वासवातोर्मयः ।

यद्विक्षेपणसंस्कृतोदधिपयःप्रेङ्खोळपर्याङ्किका-
नित्यारोहणनिर्वृतो विहरते देवः सहैव श्रिया ॥३॥

गोपायेदनिशं जगन्ति कुहनापोत्री पवित्रीकृत-
ब्रह्माण्डः प्रळयोर्मिघोषगुरुभिर्घोणारवैर्घुर्घुरैः ।
यद्दंष्ट्राङ्कुरकोटिगाढघटनानिष्कम्पनित्यस्थिति-
र्ब्रह्मस्तम्बमसौदसौ भगवती मुस्तेव विश्वंभरा ॥४॥

प्रत्यादिष्टपुरातनप्रहरणग्रामः क्षणं पाणिजै-
रव्यात्त्रीणि जगन्त्यकुण्ठमहिमा वैकुण्ठकण्ठीरवः ।
यत्प्रादुर्भवनादवन्ध्यजठरा यादृच्छिकाद्वेधसां
या काचित्सहसा महासुरगृहस्थूणा पितामह्यभूत् ॥५॥

व्रीडाविद्धवदान्यदानवयशोनासीरधाटीभट-
त्रैयक्षं मकुटं पुनन्नवतु नस्त्रैविक्रमो विक्रमः ।
यत्प्रस्तावसमुच्छ्रितध्वजपटीवृत्तान्तसिद्धान्तिभिः
स्रोतोभिः सुरसिन्धुरष्टसु दिशासौधेषु दोधूयते ॥६॥

क्रोधाग्निं जमदग्निपीडनभवं संतर्पयिष्यन्क्रमा-
दक्षत्रामपि संततक्ष य इमां त्रिःसप्तकृत्वः क्षितिम् ।
दत्त्वा कर्मणि दक्षिणां कचन तामास्कन्द्य सिन्धुं वस-
न्नब्रह्मण्यमपाकरोतु भगवानाब्रह्मकीटं मुनिः ॥७॥

पारावारपयोविशोषणकलापारीणकालानल-
ज्वालाजालविहारहारिविशिखव्यापारघोरक्रमः ।

सर्वावस्थसकृत्प्रपन्नजनतासंरक्षणैकव्रती
धर्मो विग्रहवानधर्मविरतिं धन्वी स तन्वीत नः ॥८॥

फक्कत्कौरवपट्टणप्रभृतयः प्रास्तप्रलम्बादय-
स्तालाङ्कस्य तथाविधा विहृतयस्तन्वन्तु भद्राणि नः ।
क्षीरं शर्करयेव याभिरपृथग्भूताः प्रभूतैर्गुणै-
राकौमारकमस्वदन्त जगते कृष्णस्य ताः केळयः ॥९॥

नाथायैव नमःपदं भवतु नश्चित्रैश्चरित्रक्रमै-
र्भूयोभिर्भुवनान्यमूनि कुहनागोपाय गोपायते ।
कालिन्दीरसिकाय कालियफणिस्फारस्फटावाटिका-
रङ्गोत्सङ्गविशङ्कचंक्रमधुरापर्यायचर्यायते ॥१०॥

भाविन्या दशया भवन्निह भवध्वंसाय नः कल्पतां
कल्की विष्णुयशस्सुतः कलिकथाकालुष्यकूलंकषः ।
निःशेषक्षतकण्टके क्षितितले धाराजलौघैर्ध्रुवं
धर्मं कार्तयुगं प्ररोहयति यन्निस्त्रिंशधाराधरः ॥११॥

इच्छामीन विहारकच्छप महापोत्रिन्यदृच्छाहरे
रक्षावामन रोषराम करुणाकाकुत्स्थ हेलाहलिन् ।
क्रीडावल्लव कल्किवाहनदशाकील्कन्निति प्रत्यहं
जल्पन्तः पुरुषाः पुनन्ति भुवनं पुण्यौघपण्यापणाः ॥१२॥

विद्योदन्वति वेङ्कटेश्वरकवौ जातं जगन्मङ्गळं
देवेशस्य दशावताराविषयं स्तोत्रं विवक्षेत यः ।

वक्त्रे तस्य सरस्वती बहुमुखी भक्तिः परा मानसे
शुद्धिः कापि तनौ दिशासु दशसु ख्यातिः शुभा जृम्भते ॥१३॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु दशावतारस्तोत्रं संपूर्णम् ॥

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥

---

## ॥ मत्स्यस्तोत्रम् ॥

नूनं त्वं भगवान्साक्षाद्धरिर्नारायणोऽव्ययः ।
अनुग्रहाय भूतानां धत्से रूपं जलौकसाम् ॥१॥

नमस्ते पुरुषश्रेष्ठ स्थित्युत्पत्त्यप्ययेश्वर ।
भक्तानां नः प्रपन्नानां मुख्यो ह्यात्मगतिर्विभो ॥२॥

सर्वे लीलावतारास्ते भूतानां भूतिहेतवः ।
ज्ञातुमिच्छाम्यदो रूपं यदर्थं भवता धृतम् ॥३॥

न तेऽरविन्दाक्ष पदोपसर्पणं मृषा भवेत्सर्वसुहृत्प्रियात्मनः ।
यथेतरेषां पृथगात्मनां सतामनीदृशो यद्वपुरद्भुतं हि नः ॥४॥

इति श्रीमद्भागवतांतर्गतं मत्स्यस्तोत्रम् संपूर्णम् ॥

## ॥ कूर्मस्तोत्रम् ॥

देवा उचुः—

नमाम ते देव पदारविंदं प्रपन्नतापोपशमातपत्रम् ।
यन्मूलकेता यतयोऽञ्जसोरुसंसारदुःखं बहिरुत्क्षिपंति ॥१॥

धातर्यदस्मिन्भवईश जीवास्तापत्रयेणोपहता न शर्म ।
आत्मंल्लभंते भगवंस्तवांघ्रिच्छायां सविद्यामत आश्रयेम ॥२॥

मार्गंति यत्ते मुखपद्मनीडैश्छंदःसुपर्णैर्ऋषयो विविक्ते ।
यस्याघमर्षोदसरिद्वरायाः पदंपदं तीर्थपदः प्रपन्नाः ॥३॥

यच्छ्रद्धया श्रुतवत्या च भक्त्या संमृज्यमाने हृदयेऽवधाय ।
ज्ञानेन वैराग्यबलेन धीर व्रजेम तत्तेंऽघ्रिसरोजपीठम् ॥४॥

विश्वस्य जन्मस्थितिसंयमार्थे कृतावतारस्य पदांबुजं ते ।
व्रजेम सर्वे शरणं यदीश स्मृतं प्रयच्छत्यभयं स्वपुंसाम् ॥५॥

यत्सानुबंधेऽसति देहगेहे ममाहमित्यूढदुराग्रहाणाम् ।
पुंसां सुदूरं वसतोऽपि पुर्यां भजेम तत्ते भगवन्पदाब्जम् ॥६॥

तान्वा असद्वृत्तिभिरक्षिभिर्ये पराहृतांतर्मनसः परेश ।
अथो न पश्यंत्युरुगाय नूनं ये ते पदन्यासविलासलक्ष्म्याः ॥७॥

पानेन ते देव कथासुधायाः प्रवृद्धभक्त्या विशदाशया ये ।
वैराग्यसारं प्रतिलभ्य बोधं यथांजसान्वीयुरकुण्ठधिष्ण्यम् ॥८॥

तथापरे चात्मसमाधियोगबलेन जित्वा प्रकृतिंबलिष्ठाम् ।
त्वामेव धीरः पुरुषं विशंति तेषां श्रमः स्यान्न तु सेवया ते ॥९॥

तत्ते वयं लोकसिसृक्षयाद्य त्वयानुसृष्टास्त्रिभिरात्मभिः स्म ।
सर्वे बियुक्ताः स्वविहारतंत्रं न शक्नुमस्तत्प्रतिहर्तुमे ते ॥१०॥

यावद्बलिं तेऽज हराम काले यथा वयं चान्नमदाम यत्र ।
यथोभयेषां त इमे हि लोका बलिं हरंतोऽन्नमदंत्यनूहाः ॥११॥

त्वं नः सुराणामसि सान्वयानां कूटस्थ आद्यः पुरुषः पुराणः ।
त्वं देवशक्त्यां गुणकर्मयोनौ रेतस्त्वजायां कविमादधेऽजः ॥१२॥
ततो वयं सत्प्रमुखा यदर्थे बभूविमात्मन्करवाम किं ते? ।
त्वं नः स्वचक्षुः परिदेहि शक्त्या देवक्रियार्थे यदनुग्रहाणाम् ॥१४॥

इति श्रीमद्भागवतांतर्गतं कूर्मस्तोत्रं समाप्तम् ॥

---

## ॥ वराहस्तोत्रम् ॥

ऋषय ऊचुः—

जितं जितं तेऽजित यज्ञभावन त्रयीं तनुं स्वां परिधुन्वते नमः ।
यद्रोमगर्तेषु निलिल्युरध्वरास्तस्मै नमः कारणसूकराय ते ॥१॥
रूपं तवैतन्ननु दुष्कृतात्मनां दुर्दर्शनं देव यदध्वरात्मकम् ।
छंदांसि यस्य त्वचि बर्हि रोमस्वाज्यं दृशि त्वंघ्रिषु चातुर्होत्रम् ॥२॥
स्रुक् तुण्ड आसीत्स्रुव ईश नासयोरिडोदरे चमसाः कर्णरंध्रे ।
प्राशित्रमास्ये ग्रसने ग्रहास्तु ते यच्चर्वणं ते भगवन्नग्निहोत्रम् ॥३॥
दीक्षानुजन्मोपसदः शिरोधरं त्वं प्रायणीयोदयनीयदंष्ट्रः ।
जिह्वा प्रवर्ग्यस्तव शीर्षकं क्रतोः सभ्यावसथ्यं चितयोऽसवो हि ते ॥
सोमस्तु रेतः सवनान्यवस्थितिः संस्थाविभेदास्तव देव धातवः ।
सत्राणि सर्वाणि शरीरसंधिस्त्वं सर्वयज्ञक्रतुरिष्टिबंधनः ॥५॥
नमो नमस्तेऽखिलयन्त्रदेवताद्रव्याय सर्वक्रतवे क्रियात्मने ।
वैराग्यभक्त्यात्मजयानुभावितज्ञानाय विद्यागुरवे नमो नमः ॥

दंष्ट्राग्रकोट्या भगवंस्त्वया धृता विराजते भूधर भूः सभूधरा ।
यथा वनान्निःसरतो दता धृता मतंगजेंद्रस्य सपत्रपद्मिनी ॥७॥

त्रयीमयं रूपमिदं च सौकरं भूमंडले नाथ दता धृतेन ते ।
चकास्ति शृंगोढघनेन भूयसा कुलाचलेंद्रस्य यथैव विभ्रमः ॥८॥

संस्थापयैनां जगतां सतस्थुषां लोकाय पत्नीमसि मातरं पिता ।
विधेम चास्यै नमसा सह त्वया यस्यां स्वतेजोऽग्निमिवारणावधाः ॥

कः श्रद्दधीतान्यतमस्तव प्रभो रसां गताया भुव उद्विबर्हणम् ।
न विस्मयोऽसौ त्वयि विश्वविस्मये यो माययेदं ससृजेऽतिविस्मयम् ॥

विधुन्वता वेदमयं निजं वपुर्जनस्तपःसत्यनिवासिनो जयम् ।
सटाशिखोद्धूतशिवांबुबिंदुभिर्विमृज्यमाना भृशमीश पाविताः ॥

स वै बत भ्रष्टमतिस्तवैष ते यः कर्मणां पारमपारकर्मणः ।
यद्योगमायागुणयोगमोहितं विश्वं समस्तं भगवन्विधेहि शम् ॥

इति श्रीमद्भागवतांतर्गतं वराहस्तोत्रं समाप्तम् ॥

---

## ॥ वराहाष्टकम् ॥

कमलायतनेत्राय कमलायतनोरसे ।
वराहवपुषे दैत्यवारहवपुषे नमः ॥१॥

वामांसभूषायितविश्वधात्री वामस्तनन्यस्तकरारविंदः ।
जिघ्रन्मुखेनापि कपोलमेनां जीवातुरस्माकगुरोस्स जीयात् ॥२॥

वेदिस्तनूराहवनीयमास्यं बर्हींषि लोमानि वहूश्च नासा ।
शम्या च दंष्ट्राऽजनियस्य यूपो वालोमखात्मा स पुनातु पोत्री ॥

पापेन दैत्येन भवांबुराशौ निपातितं मां निरवग्रहोर्मौ ।
धूतारिरुद्धृत्य धरामिवोच्चैः कुर्यान्मुदं मे कुहनावराहः ॥४॥

वेशंतति व्रतजुषां हृदयं मुनीनां
वेगापगाविहृतिकाननचंक्रमानि ।
मुस्तागणंति किल यस्य सुरारिवर्गाः
कोलस्सकोपि कुशलं कुरुतादजस्रम ॥५॥

कल्याणमंकुरति यस्य कटाक्षलेशा-
द्यस्य प्रिया वसुमती सवनं यदंगम् ।
अस्मद्गुरोः कुलधनं चरणौ यदीयौ
भूयश्शुभं दिशतु भूमिवराह एषः ॥६॥

कल्पंत संततघनाघननिर्विघातनिर्घातवातघननिष्ठुरतारधीरम् ।
मायाकिटेर्बधिरितद्रुहिणश्रवस्कं घोणापुटी घुरुघुरारसितं पुनातु ॥

झडिति विलुठदूर्मीचाटवाचाटसिंधुस्फुटपटहविद्रस्फोटदीत्पोटमुद्यन् ।
खरखुरपुटघाताभूतखटारिवाटः कपटकिटिरघौघाटोपमुच्चाटयेन्नः ॥

श्रीवेंकटाध्वरिकृतं वराहाष्टकं समाप्तम् ॥

---

## ॥ श्रीलक्ष्मीनृसिंहाष्टोत्तरशतनामस्तोत्रम् ॥

नारसिंहो महासिंहो दिव्यसिंहो महाबलः ।
उग्रसिंहो महादेवः स्तम्भजश्चोग्रलोचनः ॥१॥

रौद्रस्सर्वाद्भुतश्श्रीमान्योगानन्दस्त्रिविक्रमः ।
हरिः कोलाहलश्चक्री विजयो जयवर्धनः ॥२॥

पञ्चाननः परं ब्रह्म चाघोरो घोरविक्रमः ।
ज्वलन्मुखो ज्वालमाली महाज्वालो महाप्रभुः ॥३॥
निटलाक्षः सहस्राक्षो दुर्निरीक्षः प्रतापनः ।
महादंष्ट्रायुधः प्राज्ञ श्चण्डकोपी सदाशिवः ॥४॥
हिरण्यकशिपुध्वंसी दैत्यदानवभञ्जनः ।
गुणभद्रो महाभद्रो बलभद्रस्सुभद्रकः ॥५॥
करालो विकरालश्च विकर्ता सर्वकर्तृकः ।
शिंशुमारस्त्रिलोकात्मा ईशस्सर्वेश्वरो विभुः ॥६॥
भैरवाडंबरो दिव्यश्चाच्युतः कविमाधवः ।
अधोक्षजोऽक्षरश्शर्वो वनमाली वरप्रदः ॥७॥
विश्वम्भरोऽद्भुतोभव्यश्श्रीविष्णुः पुरुषोत्तमः ।
अनघास्त्रो नखास्त्रश्च सूर्यज्योतिस्सुरेश्वरः ॥८॥
सहस्रबाहुस्सर्वज्ञस्सर्वसिद्धिप्रदायकः ।
वज्रदंष्ट्रो वज्रनखो महानन्दः परन्तपः ॥९॥
सर्वयन्त्रैकरूपश्च सर्वयन्त्रविदारणः ।
सर्वतन्त्रात्मकोऽव्यक्तस्सुव्यक्तो भक्तवत्सलः ॥१०॥
वैशाखशुक्लभूतोत्थशरणागतवत्सलः ।
उदारकीर्तिः पुण्यात्मा महात्मा चण्डविक्रमः ॥११॥
वेदत्रयप्रपूज्यश्च भगवान्परमेश्वरः ।
श्रीवत्साङ्कश्श्रीनिवासो जगद्व्यापी जगन्मयः ॥१२॥

जगत्पालो जगन्नाथो महाकायो द्विरूपभृत् ।
परमात्मा परंज्योतिर्निर्गुणश्च नृकेसरी ॥१३॥

परतत्त्वं परंधाम सच्चिदानन्दविग्रहः ।
लक्ष्मीनृसिंहस्सर्वात्मा धीरः प्रह्लादपालकः ॥१४॥

इदं श्रीमन्नृसिंहस्य नाम्नामष्टोत्तरं शतम् ।
त्रिसन्ध्यं यः पठेद्भक्त्या सर्वाभीष्टमवाप्नुयात् ॥१५॥

इति श्रीनृसिंहपूजाकल्पे नृसिंहाष्टोत्तरशतं संपूर्णं ॥

---

## ॥ श्रीलक्ष्मीनृसिंहसहस्रनामस्तोत्रम् ॥

ओं मार्कण्डेय उवाचः—

एवं युद्धमभूद्घोरं रौद्रं दैत्यबलैस्सह ।
नृसिंहस्यांगसंभूतैर्नारसिंहैरनेकशः ॥१॥

दैत्यकोटिहता स्तत्र केचिद्भीताः पलायिताः ।
तं दृष्ट्वातीव संक्रुद्धो हिरण्यकशिपुस्स्वयं ॥२॥

भूतपूर्वैरमृत्युर्मे इति ब्रह्मवरोद्धतः ।
ववर्ष शरवर्षेण नारसिंहो भृशंबली ॥३॥

द्वंद्वयुद्ध मभूदुग्रं दिव्यवर्षसहस्रकम् ।
दै त्येन्द्रसाहसं दृष्ट्वा देवाश्चेंद्रपुरोगमाः ॥४॥

श्रेयः कस्य भवेदत्र इति चिन्तापराभवन् ।
तदा क्रुद्धो नृसिंहस्तु दैत्येंद्रप्रहिता न्यपि ॥५॥

विष्णुचक्रं महाचक्रं कालचक्रं तु वैष्णवम् ।
रौद्रं पाशुपतं ब्राह्मं कौबेरं कुलिशासनम् ॥६॥
आग्नेयं वारुणं सौम्यं मोहनं सौरपार्वतं ।
भार्गवादिबहून्यस्त्राण्यभक्षयत कोपनः ॥७॥
सन्ध्याकाले सभाद्वारे स्वांके निक्षिप्यभैरवः ।
ततः खट्गधरं दैत्यं जग्राह नरकेसरी ॥८॥
हिरण्यकशिपो वंक्षो विदार्यातीव रोषितः ।
उद्धृत्य चान्त्रमालानि नखै र्वज्रसमप्रभैः ॥९॥
मेने कृतार्थमात्मानं सर्वतः पर्यवैक्षत ।
हर्षिता देवता स्सर्वाः पुष्पवृष्टि मवाकिरन् ॥१०॥
देवदुंदुभयो नेदुर्विमलाश्च दिशोऽभवन् ।
नरसिंह मतीवोग्रं विकीर्णवदनं भृशम् ॥११॥
लेलिहानं च गर्जंतं कालानलसमप्रभम् ।
अतिरौद्रं महाकायं महादंष्ट्रं महारुतम् ॥१२॥
महासिंहं महारूपं दृष्ट्वा संक्षुभितं जगत् ।
सर्वदेवगणै स्सार्धं तत्रा गत्य पितामहः ॥१३॥
आगंतुकै र्भूतपूर्वै र्वर्तमानै रनुत्तमैः ।
गुणै र्नामसहस्रेण तुष्टाव श्रुतिसम्मतैः ॥२४॥

ओं नमः श्रीमद्दिव्यलक्ष्मीनृसिंहसहस्रनामस्तोत्रमहामंत्रस्य ब्रह्मा ऋषिः, श्रीलक्ष्मीनृसिंहोदेवता । अनुष्टुप्छन्दः श्रीनृसिंहः-

परमात्मा बीजं लक्ष्मीर्मायाशक्तिः जीवोबीजं बुद्धिः शक्तिः उदानवायुः बीजं सरस्वती शक्तिः व्यंजनानि बीजानि स्वराः शक्तयः ओं क्ष्रौं ह्रीं इति बीजानि ओं श्रीं अं आं इति शक्तयः विकीर्णनखदंष्ट्रायुधायेति कीलकं अकारादिति बोधकं श्रीलक्ष्मीनृसिंहप्रसादसिद्ध्यर्थे श्रीलक्ष्मीनृसिंहसहस्रनामस्तोत्रमंत्रजपे विनियोगः—

ब्रह्मोवाचः—

| | |
|---|---|
| ओं श्रीलक्ष्मीनृसिंहाय नमः | अंगुष्ठाभ्यां नमः |
| ओं वज्रनखाय नमः | तर्जनीभ्यां नमः |
| ओं महारुद्राय नमः | मध्यमाभ्यां नमः |
| ओं सर्वतोमुखाय नमः | अनामिकाभ्यां नमः |
| ओं विकटास्याय नमः | कनिष्ठिकाभ्यां नमः |
| ओं वीराय नमः | करतलकरपृष्ठाभ्यां नमः |

एवं हृदयादिन्यासः—इति दिग्बंधः

ओं ऐंद्रीं दिशं सुदर्शनेन बध्नामि नमश्चक्राय स्वाहा
ओं आग्नेयीं दिशं सुदर्शनेन बध्नामि नमश्चक्राय स्वाहा
ओं याम्यां दिशं सुदर्शनेन बध्नामि नमश्चक्राय स्वाहा
ओं नैर्ऋतिं दिशं सुदर्शनेन बध्नामि नमश्चक्राय स्वाहा
ओं वारुणीं दिशं सुदर्शनेन बध्नामि नमश्चक्राय स्वाहा
ओं वायवीं दिशं सुदर्शनेन बध्नामि नमश्चक्राय स्वाहा
ओं कौबेरीं दिशं सुदर्शनेन बध्नामि नमश्चक्राय स्वाहा
ओं ईशानीं दिशं सुदर्शनेन बध्नामि नमश्चक्राय स्वाहा

ओं ऊर्ध्वां दिशं सुदर्शनेन बध्नामि नमश्चक्राय स्वाहा
ओं अधस्तादिशं सुदर्शनेन बध्नामि नमश्चक्राय स्वाहा
ओं अंतरिक्षां दिशं सुदर्शनेन बध्नामि नमश्चक्राय स्वाहा

अथ ध्यानं :—

सत्यज्ञानसुखस्वरूपममलं क्षीराब्धिमध्ये स्थितं
योगारूढमतिप्रसन्नवदनं भूषासहस्रोज्वलम् ।
त्र्यक्षं चक्रपिनाकसाभयकरान्बिभ्राणमर्कच्छविं
छत्रीभूतफणींद्रमिंदुधवळं लक्ष्मीनृसिंहं भजे ॥१॥

उपास्महे नृसिंहाख्यं ब्रह्म वेदांतगोचरं ।
भूयोलालितसंसारच्छेदहेतुं जगद्गुरुम् ॥२॥

ब्रह्मोवाचः—

ओं ह्रीं श्रीं ऐं क्ष्रौं
ओं नमो नारसिंहाय वज्रदंष्ट्राय वज्रिणे ।
वज्रदेहाय वज्राय नमोवज्रनखाय च ॥१॥

वासुदेवाय वंद्याय वरदाय वरात्मने ।
वरदाभयहस्ताय वराय वररूपिणे ॥२॥

वरेण्याय वरिष्ठाय श्रीवराय नमो नमः ।
प्रह्लादवरदायैव प्रत्यक्षवरदाय च ॥३॥

परात्परपरेशाय पवित्राय पिनाकिने ।
पावनायप्रसन्नाय पाशिने पापहारिणे ॥४॥

पुरुष्टुताय पुण्याय पुरुहूताय ते नमः ।
तत्पुरुषाय तथ्याय पुराणपुरुषाय च ॥५॥
पुरोधसे पूर्वजाय पुष्कराक्षाय ते नमः ।
पुष्पहासाय हासाय महाहासाय शार्ङ्गिणे ॥६॥
सिंहाय सिंहराजाय जगद्वश्याय ते नमः ।
अट्टहासाय रोषाय जलवासाय ते नमः ॥७॥
भूतावासाय भासाय श्रीनिवासाय खड्गिने ।
खड्गजिह्वाय सिंहाय खड्गवासाय ते नमः ॥८॥
नमो मूलाधिवासाय धर्मवासाय धन्विने ।
धनंजयाय धन्याय नमो मृत्युंजयाय च ॥९॥
शुभंजयाय सूत्राय नमश्शत्रुंजयाय च ।
निरंजनाय नीराय निर्गुणाय गुणाय च ॥१०॥
निष्प्रपंचाय निर्वाणपदाय निबिडाय च ।
निरालंबाय नीलाय निष्कळाय कळाय च ॥११॥
निमेषाय निबंधाय निमेषगमनाय च ।
निर्द्वंद्वाय निराशाय निश्चयाय निराय च ॥१२॥
निर्मलाय निबंधाय निर्मोहाय निराकृते ।
नमो नित्याय सत्याय सत्कर्मनिरताय च ॥१३॥
सत्यध्वजाय मुंजाय मुंजकेशाय केशिने ।
हरीशाय च शेषाय गुडाकेशाय वै नमः ॥१४॥

सुकेशायोर्ध्वकेशाय केशिसंहारकाय च ।
जलेशाय स्थलेशाय पद्मेशायोग्ररूपिणे ॥१५॥

कुशेशयाय कूलाय केशवाय नमो नमः ।
सूक्तिकर्णाय सूक्ताय रक्तजिह्वाय रागिणे ॥१६॥

दीप्तरूपाय दीप्ताय प्रदीप्ताय प्रलोभिने ।
प्रच्छिन्नाय प्रबोधाय प्रभवे विभवे नमः ॥१७॥

प्रभंजनाय पांथाय प्रमायाप्रमिताय च ।
प्रकाशाय प्रतापाय प्रज्वलायोज्वलाय च ॥१८॥

ज्वालामालास्वरूपाय ज्वलज्जिह्वाय ज्वालिने ।
महोज्ज्वलाय कालाय कालमूर्तिधराय च ॥१९॥

कालांतकाय कल्पाय कलनाय कृते नमः ।
कालचक्राय शक्राय वषट्चक्राय चक्रिणे ॥२०॥

अक्रूराय कृतांताय विक्रमाय क्रमाय च ।
कृत्तिने कृत्तिवासाय कृतघ्नाय कृतात्मने ॥२१॥

संक्रमाय च क्रुद्धाय क्रांतलोकत्रयाय च ।
अरूपाय स्वरूपाय हरये परमात्मने ॥२२॥

अजयायादिदेवाय अक्षयाय क्षयाय च ।
अघोराय सुघोराय घोरघोरतराय च ॥२३॥

नमोऽस्त्वघोरवीर्याय लसद्घोराय ते नमः ।
घोराध्यक्षाय दक्षाय दक्षिणार्याय शम्भवे ॥२४॥

अमोघाय गुणौघाय अनघायाघहारिणे ।
मेघनादाय नादाय तुभ्यं मेघात्मने नमः ॥२५॥

मेघवाहनरूपाय मेघश्यामाय मालिने ।
व्यालयज्ञोपवीताय व्याघ्र देहाय वै नमः ॥२६॥

व्याघ्रपादाय च व्याघ्रकर्मिणे व्यापकाय च ।
विकटास्याय वीराय विष्टरश्रवसे नमः ॥२७॥

विकीर्णनखदंष्ट्राय नखदंष्ट्रायुधाय च ।
विष्वक्सेनाय सेनाय विह्वलाय बलाय च ॥२८॥

विरूपाक्षाय वीराय विशेषाक्षाय साक्षिणे ।
वीतशोकाय विस्तीर्णवदनाय नमो नमः ॥२९॥

विधानाय विधेयाय विजयाय जयाय च ।
विबुधाय विभावाय नमो विश्वंभराय च ॥३०॥

वीतरागाय विप्राय विटङ्कनयनाय च ।
विपुलाय विनीताय विश्वयोने नमो नमः ॥३१॥

चिदम्बराय वित्ताय विश्रुताय वियोनये ।
विह्वलाय विकल्पाय कल्पातीताय शिल्पिने ॥३२॥

कल्पनाय स्वरूपाय फणितल्पाय वै नमः ।
तटित्प्रभाय तार्याय तरुणाय तरस्विने ॥३३॥

तपनाय तरक्षाय तापक्षयहराय च ।
तारकाय तमोघ्नाय तत्त्वाय च तपस्विने ॥३४॥

तक्षकाय तनुत्राय तटिने तरलाय च ।
शतरूपाय शान्ताय शतधाराय ते नमः ॥३५॥

शतपत्राय तार्क्ष्याय स्थितये शतमूर्तये ।
शतक्रतुस्वरूपाय शाश्वताय शतात्मने ॥३६॥

नमस्सहस्रशिरसे सहस्रवदनाय च ।
सहस्राक्षाय देवाय दिशश्रोत्राय ते नमः ॥३७॥

नमः सहस्रजिह्वाय महाजिह्वाय ते नमः ।
सहस्रनामधेयाय सहस्राक्षिधराय च ॥३८॥

सहस्रबाहवे तुभ्यं सहस्रचरणाय च ।
सहस्रार्कप्रकाशाय सहस्रायुधधारिणे ॥३९॥

नमः स्थूलाय सूक्ष्माय सुसूक्ष्माय नमो नमः ।
सुक्षुण्याय सुभिक्षाय सुराध्यक्षाय शौरिणे ॥४०॥

धर्माध्यक्षाय धर्माय लोकाध्यक्षाय वै नमः ।
प्रजाध्यक्षाय शिक्षाय विपक्षक्षयमूर्तये ॥४१॥

कालाध्यक्षाय तीक्ष्णाय मूलाध्यक्षाय ते नमः ।
अधोक्षजाय मित्राय सुमित्रवरुणाय च ॥४२॥

शत्रुघ्नाय अविघ्नाय विघ्नकोटिहराय च ।
रक्षोघ्नाय तमोघ्नाय भूतघ्नाय नमो नमः ॥४३॥

भूतपालाय भूताय भूतवासाय भूतिने ।
भूतबेताळघाताय भूताधिपतये नमः ॥४४॥

भूतग्रहविनाशाय भूतसंयमते नमः ।
महाभूताय भृगवे सर्वभूतात्मने नमः ॥४५॥
सर्वारिष्टविनाशाय सर्वसंपत्कराय च ।
सर्वाधाराय शर्वाय सर्वार्तिहरये नमः ॥४६॥
सर्वदुःखप्रशान्ताय सर्वसौभाग्यदायिने ।
सर्वज्ञायाप्यनन्ताय सर्वशक्तिधराय च ॥४७॥
सर्वैश्वर्यप्रदात्रे च सर्वकार्यविधायिने ।
सर्वज्वरविनाशाय सर्वरोगापहारिणे ॥४८॥
सर्वाभिचारहन्त्रे च सर्वैश्वर्यविधायिने ।
पिङ्गाक्षायैकशृङ्गाय द्विशृङ्गाय मरीचये ॥४९॥
बहुशृङ्गाय लिङ्गाय महाशृङ्गाय ते नमः ।
माङ्गल्याय मनोज्ञाय मन्तव्याय महात्मने ॥५०॥
महादेवाय देवाय मातुर्लिंगधराय च ।
महामायाप्रसूताय प्रस्तुताय च मायिने ॥५१॥
अनंतानंतरूपाय मायिने जलशायिने ।
महोदराय मंदाय मददाय मदाय च ॥५२॥
मधुकैटभहंत्रे च माधवाय मुरारये ।
महावीर्याय धैर्याय चित्रवार्याय ते नमः ॥५३॥
चित्रकूर्माय चित्राय नमस्ते चित्रभानवे ।
मायातीताय मायाय महावीराय ते नमः ॥५४॥

महातेजाय बीजाय तेजोधाम्ने च बीजिने ।
तेजोमयनृसिंहाय नमस्ते चित्रभानवे ॥५५॥

महादंष्ट्राय तुष्टाय नमः पुष्टिकराय च ।
शिपिविष्टाय हृष्टाय पुष्टाय परमेष्ठिने ॥५६॥

विशिष्टाय च शिष्टाय गरिष्ठायेष्टदायिने ।
नमो ज्येष्ठाय श्रेष्ठाय तुष्टायामिततेजसे ॥५७॥

अष्टांगन्यस्तरूपाय सर्वदुष्टांतकाय च ।
वैकुंठाय विकुंठाय केशिकंठाय ते नमः ॥५८॥

कंठीरवाय लुंठाय निश्शठाय हठाय च ।
सत्वोद्रिक्ताय रुद्राय ऋग्यजुस्सामगाय च ॥५९॥

ऋतुध्वजाय वज्राय मंत्रराजाय मंत्रिणे ।
त्रिनेत्राय त्रिवर्गाय त्रिधाम्ने च त्रिशूलिने ॥६०॥

त्रिकालज्ञानरूपाय त्रिदेहाय त्रिधात्मने ।
नमस्त्रिमूर्तिविद्याय त्रितत्वज्ञानिने नमः ॥६१॥

अक्षोभ्यायानिरुद्धाय अप्रमेयाय भानवे ।
अमृताय अनंताय अमितायामितौजसे ॥६२॥

अपमृत्युविनाशाय अपस्मारविघातिने ।
अन्नदायान्नरूपाय अन्नायान्नभुजे नमः ॥६३॥

नाद्याय निरवद्याय विद्यायाद्भुतकर्मणे ।
सद्योजाताय संघाय वैद्युताय नमो नमः ॥६४॥

अध्वातीताय सत्वाय वागतीताय वाग्मिने ।
वागीश्वराय गोपाय गोहितायगवांपते ॥६५॥

गंधर्वाय गभीराय गर्जितायोर्जिताय च ।
पर्जन्याय प्रबुद्धाय प्रधानपुरुषाय च ॥६६॥

पद्माभाय सुनाभाय पद्मनाभाय मानिने ।
पद्मनेत्राय पद्माय पद्मायाः पतये नमः ॥६७॥

पद्मोदराय पूताय पद्मकल्पोद्भवाय च ।
नमो हृत्पद्मवासाय भूपद्मोद्धरणाय च ॥६८॥

शब्दब्रह्मस्वरूपाय ब्रह्मरूपधराय च ।
ब्रह्मणे ब्रह्मरूपाय पद्मनेत्रायते नमः ॥६९॥

ब्रह्मदाय ब्राह्मणाय ब्रह्मब्रह्मात्मने नमः ।
सुब्रह्मण्याय देवाय ब्रह्मण्याय त्रिवेदिने ॥७०॥

परब्रह्मस्वरूपाय पंचब्रह्मात्मने नमः ।
नमस्ते ब्रह्मशिरसे तदाऽश्वशिरसे नमः ॥७१॥

अथर्वशिरसे नित्यमशनिप्रमिताय च ।
नमस्ते तीक्ष्णदंष्ट्राय लोलाय ललिताय च ॥७२॥

लावण्याय लवित्राय नमस्ते भासकाय च ।
लक्षणज्ञाय लक्षाय लक्षणाय नमो नमः ॥७३॥

लसद्दीप्ताय लिप्ताय विष्णवे प्रभविष्णवे ।
वृष्णिमूलाय कृष्णाय श्रीमहाविष्णवे नमः ॥७४॥

पश्यामि त्वां महासिंहं हारिणं वनमालिनम् ।
किरीटिनं कुण्डलिनं सर्वाङ्गं सर्वतोमुखम् ॥७५॥
सर्वतः पाणिपादोरं सर्वतोऽक्षि शिरोमुखम् ।
सर्वेश्वरं सदातुष्टं समर्थं समरप्रियम् ॥७६॥
बहुयोजनविस्तीर्णं बहुयोजनमायतम् ।
बहुयोजनहस्ताङ्घ्रिं बहुयोजननासिकम् ॥७७॥
महारूपं महावक्त्रं महादंष्ट्रं महाभुजम् ।
महानादं महारौद्रं महाकायं महाबलम् ॥७८॥
आनाभेर्ब्रह्मणो रूपमागलाद्वैष्णवं तथा ।
आशीर्षाद्रुद्रमीशानं तदग्रे सर्वतश्शिवम् ॥७९॥
नमोऽस्तु नारायण नारसिंह नमोऽस्तु नारायण वीरसिंह ।
नमोऽस्तु नारायण क्रूरसिंह नमोऽस्तु नारायण दिव्यसिंह ॥८०॥
नमोऽस्तु नारायण व्याघ्रसिंह नमोऽस्तु नारायण पुच्छसिंह ।
नमोऽस्तु नारायण पूर्णसिंह नमोऽस्तु नारायण रौद्रसिंह ॥८१॥
नमो नमो भीषण भद्रसिंह नमो नमो विह्वलनेत्रसिंह ।
नमो नमो बृंहितभूतसिंह नमो नमो निर्मलचित्रसिंह ॥८२॥
नमो नमो निर्जितकालसिंह नमो नमः कल्पितकल्पसिंह ।
नमो नमः कामद कामसिंह नमो नमस्ते भुवनैकसिंह ॥८३॥
द्यावापृथिव्योरिदमन्तरं हि व्याप्तं त्वयैकेन दिशश्च सर्वाः ।
दृष्ट्वाद्भुतं रूपमुग्रन्तवेदं लोकत्रयं प्रव्यथितं महात्मन् ॥८४॥

अमीहित्वा सुरसङ्घा विशन्ति केचिद्भीताः प्राञ्जलयो गृणन्ति ।
स्वस्तीत्युक्त्वा मुनयसिद्धसङ्घाः स्तुवन्ति त्वां स्तुतिभिः पुष्कलाभिः ॥

रुद्रादित्यावसवो ये च साध्या विश्वे देवामरुतश्चोष्मपाश्च ।
गन्धर्वयक्षासुरसिद्धसङ्घावीक्षन्ति त्वां विस्मिताश्चैव सर्वे ॥८६॥

लेलिह्यसे ग्रसमानस्समन्ताल्लोकान्समग्रान्वदनैर्ज्वलाद्भिः ।
तेजोभिरापूर्य जगत्समग्रं भासस्तवोग्राः प्रतपन्ति विष्णो ॥८७॥

भविष्णुस्त्वं सहिष्णुस्त्वं भ्राजिष्णुर्जिष्णुरेव च ।
पृथिवीमन्तरिक्षं त्वं पर्वतारण्यमेव च ॥८८॥

कलाकाष्ठा विलिप्तस्त्वं मुहूर्तप्रहरादिकम् ।
अहोरात्रं त्रिसन्ध्या च पक्षमासर्तुवत्सराः ॥८९॥

युगादिर्युगभेदस्त्वं संयुगो युगसन्धयः ।
नित्यं नैमित्तिकं दैनं महाप्रळय मेव च ॥९०॥

करणं कारणं कर्ता भर्ता हर्ता त्वमीश्वरः ।
सत्कर्ता सत्कृतिर्गोप्ता सच्चिदानन्दविग्रहः ॥९१॥

प्राणस्त्वं प्राणिनां प्रत्यगात्मा त्वं सर्वदेहिनाम् ।
सुज्योतिस्त्वं परंज्योतिरात्मज्योतिस्सनातनः ॥९२॥

ज्योतिर्लोकस्वरूपस्त्वं ज्योतिर्ज्योतिषां पतिः ।
स्वाहाकारः स्वधाकारो वषट्कारः कृपाकरः ॥९३॥

हन्तकारो निराकारो वेगाकारश्च शङ्करः ।
अकारादिहकारान्त ओंकारो लोककारकः ॥९४॥

एकात्मा त्व मनेकात्मा चतुरात्मा चतुर्भुजः ।
तुर्मूर्तिश्चतुर्दंष्ट्रश्चतुर्वेदमयोत्तमः ॥९५॥

लोकप्रियो लोकगुरु र्लोकेशो लोकनायकः ।
लोक साक्षी लोकपतिर्लोकात्मा लोकलोचनः ॥९६॥

लोकाधारो बृहल्लोको लोकालोकमयो विभुः ।
लोककर्ता विश्वकर्ता कृतावर्तः कृतागमः ॥९७॥

अनादि स्त्वमनन्त॰स्त्व मभूतो भूतविग्रहः ।
तुति स्तुत्य स्तव प्रीतः स्तोता नेता नियामकः ॥९८॥

त्वं गति स्त्वं मति र्मह्यं पिता माता गुरु स्सखा ।
सुहृदश्चात्मरूप स्त्वं त्वां विना नास्ति मे गतिः ॥९९॥

नमस्ते मन्त्ररूपाय अस्त्ररूपाय ते नमः ।
बहुरूपाय रूपाय पञ्चरूपधराय च ॥१००॥

भद्ररूपाय रूढाय योगरूपाय योगिने ।
समरूपाय योगाय योगपीठस्थिताय च ॥१०१॥

योगगम्याय सौम्याम ध्यानगम्याय ध्यायिने ।
ध्येयगम्याय धाम्ने च धामाधिपतये नमः ॥१०२॥

धराधराय धर्माय धारणाभिरताय च ।
नमो धात्रे च सन्धात्रे विधात्रे च धराय च ॥१०३॥

दामोदराय दान्ताय दानवान्तकराय च ।
नम स्संसारवैद्याय भेषजाय नमो नमः ॥१०४॥

सीरध्वजाय शीताय वाताय।प्रमिताय च ।
सारस्वताय संसारनाशनायाक्षमालिने ॥१०५॥
असिधर्मधरायैव षट्कर्मनिरताय च ।
विकर्माय सुकर्माय परकर्मविधायिने ॥१०६॥
सुशर्मणे मन्मथाय नमो वर्माय वर्मिणे ।
करिचर्म वसानाय कराळवदनाय च ॥१०७॥
कवये पद्मगर्भाय भूतगर्भ घृणानिधे ।
ब्रह्मगर्भाय गर्भाय बृहद्गर्भाय धूर्जटे ॥१०८॥
नमस्ते विश्वगर्भाय श्रीगर्भाय जितारये ।
नमो हिरण्यगर्भाय हिरण्यकवचाय च ॥१०९॥
हिरण्यवर्ण देहाय हिरण्याक्षविनाशिने ।
हिरण्य काशिपो हंत्रे हिरण्यनयनाय च ॥११०॥
हिरण्यरेतसे तुभ्यं हिरण्यवदनाय च ।
नमो हिरण्यशृङ्गाय निश्शृङ्गाय च शृङ्गिणे ॥१११॥
भैरवाय सुकेशाय भीषणायांत्रिमालिने ।
चण्डाय रुण्डमालाय नमो दण्डधराय च ॥११२॥
अखण्डतत्वरूपाय कमण्डलुधराय च ।
नमस्ते खण्डसिंहाय सत्यसिंहाय ते नमः ॥११३॥
नमस्ते श्वेतसिंहाय पीतसिंहाय ते नमः ।
नीलसिंहाय नीलाय रक्तसिंहाय ते नमः ॥११४॥

नमो हारिद्रसिंहाय धूम्रसिंहाय ते नमः ।
मूलसिंहाय मूलाय बृहत्सिंहाय ते नमः ॥११५॥
पाताळस्थितसिंहाय नमः पर्वतवासिने ।
नमो जलस्थसिंहाय अन्तरिक्षस्थिताय च ॥११६॥
कालाग्निरुद्रसिंहाय चण्डसिंहाय ते नमः ।
अनन्तसिंहसिंहाय अनन्तगतये नमः ॥११७॥
नमो विचित्रसिंहाय बहुसिंहस्वरूपिणे ।
अभयङ्करसिंहाय नरसिंहाय ते नमः ॥११८॥
नमोऽस्तु सिंहराजाय नारसिंहाय ते नमः ।
सप्ताब्धिमेखलायैव सत्यसत्यस्वरूपिणे ॥११९॥
सप्तलोकांतरस्थाय सप्तस्वरमयाय च ।
सप्तार्चीरूपदंष्ट्राय सप्ताश्वरथरूपिणे ॥१२०॥
सप्तवायुस्वरूपाय सप्तच्छन्दोमयाय च ।
स्वच्छाय स्वच्छरूपाय स्वच्छंदाय च ते नमः ॥१२१॥
श्रीवत्साय सुवेधाय श्रुतये श्रुतिमूर्तये ।
शुचिश्रवाय शूराय सुप्रभाय सुधन्विने ॥१२२॥
शुभ्राय सुरनाथाय सुप्रभाय शुभाय च ।
सुदर्शनाय सूक्ष्माय निरुक्ताय नमो नमः ॥१२३॥
सुप्रभाय स्वभावाय भवाय विभवाय च ।
सुशाखाय विशाखाय सुमुखाय मुखाय च ॥१२४॥

सुनखाय सुदंष्ट्राय सुरथाय सुधाय च ।
सांख्याय सुरमुख्याय प्रख्याताय प्रभाय च ॥१२५॥

नमः खट्वाङ्गहस्ताय खेटमुद्गरपाणये ।
खगेन्द्राय मृगेन्द्राय नागेन्द्राय दृढाय च ॥१२६॥

नागकेयूरहाराय नागेन्द्रायाघमर्दिने ।
नदीवासाय नग्नाय नानारूपधराय च ॥१२७॥

नागेश्वराय नागाय नमिताय नराय च ।
नागान्तकरथायैव नरनारायणाय च ॥१२८॥

नमो मत्स्यस्वरूपाय कच्छपाय नमो नमः ।
नमो यज्ञवराहाय नरसिंहाय ते नमः ॥१२९॥

विक्रमाक्रांतलोकाय वामनाय महौजसे ।
नमो भार्गवरामाय रावणान्तकराय च ॥१३०॥

नमस्ते बलरामाय कंसप्रध्वंसकारिणे ।
बुद्धाय बुद्धरूपाय तीक्ष्णरूपाय कल्किने ॥१३१॥

आत्रेयायाग्निनेत्राय कपिलाय द्विजाय च ।
क्षेत्राय पशुपालाय पशुवक्त्राय ते नमः ॥१३२॥

गृहस्थाय वनस्थाय यतये ब्रह्मचारिणे ।
स्वर्गापवर्गदात्रे च तद्भोक्त्रे च मुमुक्षवे ॥१३३॥

सालग्रामनिवासाय क्षीराब्धिशयनाय च ।
श्रीशैलाद्रिनिवासाय शिलावासाय ते नमः ॥१३४॥

योगिहृत्पद्मवासाय महाहासाय ते नमः ।
गुहावासाय गुह्याय गुप्ताय गुरवे नमः ॥१३५॥
नमो मूलाधिवासाय नीलवस्त्रधराय च ।
पीतवस्त्राय शस्त्राय रक्तवस्त्रधराय च ॥१३६॥
रक्तमालाविभूषाय रक्तगन्धानुलेपिने ।
धुरन्धराय धूर्ताय दुर्धराय धराय च ॥१३७॥
दुर्मदाय दुरन्ताय दुर्धराय नमो नमः ।
दुर्निरीक्ष्याय निष्ठाय दुर्दर्शाय द्रुमाय च ॥१३८॥
दुर्भेदाय दुराशाय दुर्लभाय नमो नमः ।
दृप्ताय दृप्तवक्त्राय अदृप्तनयनाय च ॥१३९॥
उन्मत्ताय प्रमत्ताय नमो दैत्यारये नमः ।
रसज्ञाय रसेशाय अरक्तरसनाय च ॥१४०॥
पथ्याय परितोषाय रथ्याय रसिकाय च ।
ऊर्ध्वकेशोर्ध्वरूपाय नमस्ते चोर्ध्वरेतसे ॥१४१॥
ऊर्ध्वसिंहाय सिंहाय नमस्ते चोर्ध्वबाहवे ।
परप्रध्वंसकायैव शङ्खचक्रधराय च ॥१४२॥
गदापद्मधरायैव पञ्चबाणधराय च ।
कामेश्वराय कामाय कामपालाय कामिने ॥१४३॥
नमः कामविहाराय कामरूपधराय च ।
सोमसूर्याग्निनेत्राय सोमपाय नमो नमः ॥१४४॥

नम स्सोमाय वामाय वामदेवाय ते नमः ।
सामस्वनाय सौम्याय भक्तिगम्याय वै नमः ॥१४५॥
कूश्माण्डगणनाथाय सर्वश्रेयस्कराय च ।
भीष्माय भीषदायैव भीमाविक्रमणाय च ॥१४६॥
मृगग्रीवाय जीवाय जितायाजितकारिणे ।
जटिने जामदग्न्याय नमस्ते जातवेदसे ॥१४७॥
जपाकुसुमवर्णाय जप्याय जपिताय च ।
जरायुजायाण्डजाय स्वेदजायोद्भिजाय च ॥१४८॥
जनार्दनाय रामाय जाह्नवीजनकाय च ।
जराजन्मादिदूराय प्रद्युम्नाय प्रमोदिने ॥१४९॥
जिह्वारौद्राय रुद्राय वीरभद्राय ते नमः ।
चिद्रूपाय समुद्राय कद्रुद्राय प्रचेतसे ॥१५०॥
इंद्रियायेंद्रियज्ञाय नमोऽस्त्विन्द्रानुजाय च
अतींद्रियाय साराय इन्दिरापतये नमः ॥१५१॥
ईशानाय च ईड्याय ईशिताय इनाय च ।
व्योमात्मने च व्योम्ने च नमस्ते व्योमकेशिने ॥१५२॥
व्योमाधाराय च व्योमवक्त्रायासुरघातिने ।
नमस्ते व्योमदंष्ट्राय व्योमवासाय ते नमः ॥१५३॥
सुकुमाराय रामाय शुभचाराय वै नमः ।
विश्वाय विश्वरूपाय नमो विश्वात्मकाय च ॥१५४॥

ज्ञानात्मकाय ज्ञानाय विश्वेशाय परात्मने ।
एकात्मने नमस्तुभ्यं नमस्ते द्वादशात्मने ॥१५५॥

चतुर्विंशतिरूपाय पञ्चविंशतिमूर्तये ।
षड्विंशकात्मने नित्यं सप्तविंशतिकात्मने ॥१५६॥

धर्मार्थकाममोक्षाय विरक्ताय नमो नमः ।
भावशुद्धाय सिद्धाय साध्याय शरभाय च ॥१५७॥

प्रबोधाय सुबोधाय नमो बुद्धिप्रियाय च ।
स्निग्धाय च विदग्धाय मुग्धाय मुनये नमः ॥१५८॥

प्रियंवदाय श्रव्याय स्रुक्स्रुवाय श्रिताय च ।
गृहेशाय महेशाय ब्रह्मेशाय नमो नमः ॥१५९॥

श्रीधराय सुतीर्थाय हयग्रीवाय ते नमः ।
उग्राय उग्रवेगाय उग्रकर्मरताय च ॥१६०॥

उग्रनेत्राय व्यग्राय समग्रगुणशालिने ।
बालग्रहविनाशाय पिशाचग्रहघातिने ॥१६१॥

दुष्टग्रहनिहन्त्रे च निग्रहानुग्रहाय च ।
वृषध्वजाय वृष्ण्याय वृषाय वृषभाय च ॥१६२॥

उग्रश्रवाय शान्ताय नमः श्रुतिधराय च ।
नमस्ते देवदेवेश नमस्ते मधुसूदन ॥१६३॥

नमस्ते पुण्डरीकाक्ष नमस्ते दुरितक्षय ।
नमस्ते करुणासिन्धो नमस्ते समितिंजय ॥१६४॥

नमस्ते नरसिंहाय नमस्ते गरुडध्वज ।
यज्ञनेत्र नमस्तेऽस्तु कालध्वज जयध्वज ॥१६५॥
अग्निनेत्र नमस्तेऽस्तु नमस्ते ह्यमरप्रिय।
महानेत्र नमस्तेऽस्तु नमस्ते भक्तवत्सल ॥१६६॥
धर्मनेत्र नमस्तेऽस्तु नमस्ते करुणाकर ।
पुण्यनेत्र नमस्तेऽस्तु नमस्तेऽभीष्टदायक ॥१६७॥
नमो नमस्ते जयसिंहरूप नमो नमस्ते नरसिंहरूप ।
नमो नमस्ते रणसिंहरूप नमो नमस्ते नरसिंहरूप ॥१६८॥
उद्धृत्य गर्वितं दैत्यं निहत्याजौ सुरद्विषम् ।
देवकार्यं महत्कृत्वा गर्जसे स्वात्मतेजसा ॥१६९॥
अतिरुद्रमिदं रूपं दुस्सहं दुरतिक्रमम् ।
दृष्ट्वा तु शङ्कितास्सर्वा देवतास्त्वामुपागताः ॥१७०॥
एतान्पश्य महेशानं ब्रह्माणं मां शचीपतिम् ।
दिक्पालान् द्वादशादित्यान् रुद्रानुरगराक्षसान् ॥१७१॥
सर्वान् ऋषिगणान्सप्तमातृगौरीं सरस्वतीम् ।
लक्ष्मीं नदीश्च तीर्थानि रतिं भूतगणान्यपि ॥१७२॥
प्रसीद त्वं महासिंह उग्रभावमिमं त्यज ।
प्रकृतिस्थो भव त्वं हि शान्तिभावं च धारय ॥१७३॥
इत्युक्त्वा दण्डवद्भूमौ पपात स पितामहः ।
प्रसीद त्वं प्रसीद त्वं प्रसीदेति पुनः पुनः ॥१७४॥

मार्कण्डेय उवाच—

दृष्ट्वा तु देवताः सर्वाः श्रुत्वा तां ब्रह्मणो गिरम् ।
स्तोत्रेणापि च संहृष्टः सौम्यभावमधारयत् ॥१७५॥

अब्रवीन्नारसिंहस्तु वीक्ष्य सर्वान्सुरोत्तमान् ।
संत्रस्तान् भयसंविग्नान् शरणं समुपागतान् ॥१७६॥

श्रीनृसिंह उवाचः—

भो भो देववरा स्सर्वे पितामहपुरोगमाः
शृणुध्वं मम वाक्यं च भवंतु विगतज्वराः ॥१७७॥

य द्धितं भवतां नूनं तत्करिष्यामि सांप्रतम् ।
एवं नामसहस्रं मे त्रिसन्ध्यं यः पठेत् शुचिः ॥१७८॥

शृणोति वाश्रावयति पूजां ते भक्तिसंयुतः ।
सर्वान्कामानवाप्नोति जीवेच्च शरदां शतम ॥१७९॥

यो नामभिर्नृसिंहाद्यैरर्चयेत्क्रमशो मम ।
सर्वतीर्थेषु यत्पुण्यं सर्वतीर्थेषु यत्फलम ॥१८०॥

सर्व पूजासु यत्प्रोक्तं तत्सर्वं लभते भृशम्
जातिस्मरत्वं लभते ब्रह्मज्ञानं सनातनम् ॥१८१॥

सर्वपापविनिर्मुक्तः तद्विष्णोः परमं पदम् ।
मन्नामकवचं बध्वा विचरेद्विगतज्वरः ॥१८२॥

भूतभेतालकूष्माण्ड पिशाचब्रह्मराक्षसाः ।
शाकिनीडाकिनीज्येष्ठा नीली बालग्रहादिकाः ॥१८३॥

दुष्टग्रहाश्च नश्यन्ति यक्षराक्षसपन्नगाः ।
ये च सन्ध्याग्रहाः सर्वे चाण्डालग्रहसंज्ञिकाः ॥१८४॥
निशाचरग्रहा स्सर्वे प्रणश्यंति च दूरतः ।
कुक्षिरोगं च हृद्रोगं शूलापस्मार मेव च ॥१८५॥
ऐकाहिकं द्व्याहिकं चातुर्थिक मथ ज्वरम् ।
आधये व्याधय स्सर्वे रोगा रोगाधिदेवताः ॥१८६॥
शीघ्रं नश्यंतिते सर्वे न्नृसिंहस्मरणा त्सुराः ।
राजानो दासतां यांति शत्रवो यांति मित्रताम् ॥१८७॥
जलानि स्थलतां यान्ति वह्नयो यान्ति शीतलाम् ।
विषा अप्यमृता यान्ति नृसिंहस्मरणात्सुराः ॥१८८॥
राज्यकामो लभेद्राज्यं धनकामो लभेद्धनम् ।
विद्याकामो लभेद्विद्यां बद्धो मुच्येत बन्धनात् ॥१८९॥
व्याळव्याघ्रभयं नास्ति चोरसर्पादिकं तथा ।
अनुकूला भवेद्भार्या लोकैश्च प्रतिपूज्यते ॥१९०॥
सुपुत्रं धनधान्यं च भवन्ति विगतज्वराः ।
एतत्सर्वं समाप्नोति नृसिंहस्य प्रसादतः ॥१९१॥
जलसन्तरणेचैव पर्वतारण्यमेव च ।
वनेऽपि विचिरन्मर्त्यो दुर्गमे विषमे पथि ॥१९२॥
कलिप्रवेशनेचापि नारसिंहं न विस्मरेत् ।
ब्रह्मघ्नश्च पशुघ्नश्च भ्रूणहा गुरुतल्पगः ॥१९३॥

मुच्यते सर्वपापेभ्यः कृतघ्न स्त्रीविघातकः ।
वेदानां दूषकश्चापि मातापितृ विनिंदकः ॥१९४॥
असत्यस्तु तथा यज्ञ निन्दको लोकनिन्दकः ।
स्मृत्वा सकृन्नृसिंहं तु मुच्यते सर्वकिल्बिषैः ॥१९५॥
बहुनात्र किं मुक्तेन स्मृत्वा मां शुद्धमानसः ।
यत्र यत्र चरे न्मर्त्यो नृसिंहस्तत्र,रक्षति ॥१९६॥
गच्छन् तिष्ठनश्वपनभुञ्जन जाग्रन्नपि हसन्नपि ।
नृसिंहेति नृसिंहेति नृसिंहेति सदा स्मरन् ॥१९७॥
पुमा न्नलिप्यते पापै भुक्तिं मुक्तिं च विंदति ।
नारी सुभगता मेति सौभाग्यं च स्वरूपताम् ॥१९८॥
भर्तुः प्रियत्वं लभते न वैधव्यं च विंदति ।
न सपत्नीं च जन्मांते सम्यक् ज्ञानी भवेद्द्विजः ॥१९९॥
भूमिप्रदक्षिणा न्मर्त्यो यत्फलं लभते चिरात् ।
तत्फलं लभते नारासिंहमूर्तिप्रदक्षिणात् ॥२००॥

मार्कण्डेय उवाचः—

इत्युक्त्वा देवदेवेशो लक्ष्मी मालिंग्य लीलया ।
प्रह्लादस्याभिषेकं तु ब्रह्मणे चोपदिष्टवान् ॥२०१॥
श्रीशैलस्य प्रदासे तु लोकानां च हिताय वै ।
स्वरूपं स्थापयामास प्रकृतिस्थोऽभवत्तदा ॥२०२॥
ब्रह्मापि दैत्यराजानं प्रह्लाद मभ्यषेचयत् ।
दैवतै स्सह सुप्रीतो ह्यात्मलोकं ययौ स्वयम् ॥२०३॥

हिरण्यकशिपोर्भीत्या प्रपलाय शचीपतिः ।
स्वर्गराज्यपरिभ्रष्टो युगाना मेकविंशतिः ॥२०४॥
नृसिंहेन हते दैत्ये स्वर्गलोक मवाप सः ।
दिक्पालश्च सुसंप्राप्तः स्वस्वस्थान मनुत्तमम् ॥२०५॥
धर्मे मति स्समस्तानां प्रजाना मभवत्तदा ।
एवं नामसहस्रं मे ब्रह्मणा निर्मितं पुरा ॥२०६॥
पुत्रानध्यापयामास सनकादीन्महामतिः ।
ऊचुस्ते च ततः सर्वलोकानां हितकाम्यया ॥२०७॥
देवता ऋषयः सिद्धा यक्षविद्याधरोरगाः ।
गन्धर्वाश्च मनुष्याश्च इहा मुत्रफलैषिणः ॥२०८॥
यस्य स्तोत्रस्य पाठा द्विशुद्ध मनसो भवन् ।
सनत्कुमारः संप्राप्तो भारद्वाजो महामतिः ॥२०९॥
तस्मादांगिरसः प्राप्त स्तस्मात्प्राप्तो महाक्रतुः ।
जैगीषव्याय सप्राह सोऽब्रवीच्छ्यवनाय च ॥२१०॥
तस्मा उवाच शाण्डिल्यो गर्गाय प्राह वै मुनिः ।
क्रतुंजयाय स प्राह जतुकर्ण्याय संयमी ॥२११॥
विष्णुवृद्धाय सोऽप्याह सोऽपि बोधायनाय च ।
क्रमात्स विष्णवे प्राह स प्राहो द्धामकुक्षये ॥२१२॥
सिंह तेजा श्च तस्मा च्च श्रीप्रियाय ददौ च नः ।
उपदिष्टोऽस्मि तेनाह मिदं नामसहस्रकम् ॥२१३॥

तत्प्रसादा दमृत्युर्मे यस्मात्कस्माद्भयं न हि ।
मया च कथितं नारसिंहस्तोत्रामिदं तव ॥२१४॥

त्वं हि नित्यं शुचि र्भूत्वा त माराधय शाश्वतम् ।
सर्वभूताश्रयं देवं नृसिंहं भक्तवत्सलम् ॥२१५॥

पूजयित्वा स्तवं जप्त्वा हुत्वा निश्चलमानसः ।
प्राप्यसे महतीं सिद्धिं सर्वा न्कामा न्वरोत्तमान् ॥२१६॥

अय मेव परोधर्म स्त्विद मेव परं तपः ।
इद मेव परं ज्ञान मिद मेव महद्व्रतम् ॥२१७॥

अय मेव सदाचार स्त्वयमेव सदा मखः ।
इद मेव त्रयो वेदाः सच्छस्त्राण्यागमानि च ॥२१८॥

नृसिंहमन्त्रा दन्य च्च वैदिकं तु नविद्यते ।
य दिहास्ति त दन्यत्र यन्ने हास्ति न तत्कचिन ॥२१९॥

कथितं ते नृसिंहस्य चरितं पापनाशनम् ।
सर्वमन्त्रमयं तापत्रयोपशमनं परम् ॥२२०॥

सर्वार्थसाधनं दिव्यं किं भूयः श्रोतु मिच्छसि ॥२२१॥

इति श्रीनृसिंहपुराणे नृसिंहप्रादुर्भावे सर्वार्थ साधनं दिव्यं
श्रीमाद्दिव्यलक्ष्मीनृसिंहसहस्रनामस्तोत्रं संपूर्णम् ॥

---

## ॥ लक्ष्मीनृसिंहस्तोत्रम् ॥

श्रीमत्पयोनिधिनिकेतन चक्रपाणे
भोगींद्रभोगमणिरंजितपुण्यमूर्ते ।
योगीश शाश्वत शरण्य भवाब्धिपोत
लक्ष्मीनृसिंह मम देहि करावलंबम् ॥१॥
ब्रह्मेंद्ररुद्रमरुदर्ककिरीटकोटिसंघट्टिताङ्घ्रिकमलामलकांतिकान्त ।
लक्ष्मीलसत्कुचसरोरुहराजहंस लक्ष्मीनृसिंह० ॥२॥
संसारघोरगहने चरतो मुरारे मारोग्रभीकरमृगप्रचरार्दितस्य ।
आर्तस्य मत्सरनिदाघनिपीडितस्य लक्ष्मीनृसिंह० ॥३॥
संसारकूपमतिघोरमगाधमूलं संप्राप्य दुःखशतसर्पसमाकुलस्य ।
दीनस्य देव कृपणापदमागतस्य लक्ष्मीनृसिंह० ॥४॥
संसारसागरविशालकरालकालनक्रग्रहग्रसननिग्रहविग्रहस्य ।
व्यग्रस्य रागरसनोर्मिनिपीडितस्य लक्ष्मीनृसिंह० ॥५॥
संसारवृक्षमघबीजमनन्तकर्मशाखाशतं करणपत्रमनंगपुष्पम् ।
आरुह्य दुःखफलितं पततो दयालो लक्ष्मीनृसिंह० ॥६॥
संसारसर्पघनवक्त्रभयोग्रतीव्रदंष्ट्राकरालविषदग्धविनष्टमूर्तेः ।
नागारिवाहन सुधाब्धिनिवास शौरे लक्ष्मीनृसिंह० ॥७॥
संसारदावदहनातुरभीकरोरुज्वालावलीभिरतिदग्धतनूरुहस्य ।
त्वत्पादपद्मसरसीशरणागतस्य लक्ष्मीनृसिंह० ॥८॥
संसारजालपतितस्य जगन्निवास सर्वेंद्रियार्थ बडिशार्थझषोपमस्य ।
प्रोत्खंडितप्रचुरतालुकमस्तकस्य लक्ष्मीनृसिंह० ॥९॥

संसारभीकरकरींद्रकराभिघातनिष्पिष्टमर्मवपुषः सकलार्तिनाश
प्राणप्रयाणभवभीतिसमाकुलस्य लक्ष्मीनृसिंह० ॥१०॥

अंधस्य मे हृतविवेकमहाधनस्य चोरैः प्रभो बलिभिरिंद्रियनामधेयैः।
मोहांधकूपकुहरे विनिपातितस्य लक्ष्मीनृसिंह० ॥११॥

लक्ष्मीपते कमलनाभ सुरेश विष्णो वैकुण्ठ कृष्ण मधुसूदन पुष्कराक्ष ।
ब्रह्मण्य केशव जनार्दन वासुदेव देवेश देहि कृपणस्य कराम् ॥

यन्माययोर्जितवपुःप्रचुरप्रवाहमग्नार्थमत्र निवहोरुकरावलंबम् ।
लक्ष्मीनृसिंहचरणाब्जमधुव्रतेन स्तोत्रं कृतं सुखकरं भुवि शङ्करेण ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य भगवतः कृतौ
श्रीमच्छंकर संकष्टनाशनं लक्ष्मीनृसिंहस्तोत्रं संपूर्णम् ॥

---

## ॥ श्रीलक्ष्मीनृसिंहपञ्चरत्नम् ॥

त्वत्प्रभुजीवप्रियमिच्छासि चेन्नरहरिपूजां कुरुसततं
प्रतिबिम्बालङ्कृति धृतिकुशलो बिम्बालङ्कृतिमातनुते ।
चेतोभृङ्ग भ्रमसि वृथा भवमरुभूमौ विरसायां
भज भज लक्ष्मी नरसिंहानघपदसरसिजमकरन्दम् ॥१॥

शुक्तौ रजतप्रतिभा जाता कटकाद्यर्थ समर्थाचे-
दुःखमयीते संसृतिरेषानिर्वृतिदाने निपुणा स्यात् ।
चेतो भृङ्ग भ्रमासि वृथा भवमरुभूमौ विरसायां
भज भज लक्ष्मी नरसिंहानघपदसरसिजमकरन्दम् ॥२॥

आकृतिसाम्याच्छाल्मलिकुसुमे स्थलनलिनत्व भ्रममकरोः ।
गन्धरसाविह किमुविद्येत विफलं भ्राम्यासि भृशविरसेऽस्मिन् ।
चेतो भृङ्ग भ्रमसिवृथा भवमरुभूमौ विरसायां
भज भज लक्ष्मी नरसिंहानघपदसरसिजमकरन्दम् ॥३॥

स्रक्चन्दनवानितादीन् विषयान् सुखदान् मत्वा तत्र विहरसे ।
गन्धफलीसदृशा ननुतेऽमी भोगानन्तरदुःखकृतस्स्युः ।
चेतो भृङ्ग भ्रमसिवृथा भवमरुभूमौ विरसायां
भज भज लक्ष्मी नरसिंहानघपदसरसिजमकरन्दम् ॥४॥

तव हितमेकं वचनं वक्ष्ये शृणु सुखकामो यदि सततं
स्वप्ने दृष्टं सकलंहिमृषा जाग्रतिच स्मर तद्वदिति ।
चेतो भृङ्ग भ्रमसिवृथा भवमरुभूमौ विरसायां
भज भज लक्ष्मी नरसिंहानघपदसरसिजमकरन्दम् ॥५॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपाद शिष्यस्य श्रीमच्छङ्करभगवतः कृतौ
लक्ष्मीनृसिंह पञ्चरत्नं सम्पूर्णम् ॥

---

## ॥ कामासिकाष्टकम् ॥

श्रीमान्वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥

श्रुतीनामुत्तरं भागं वेगवत्याश्च दक्षिणम् ।
कामादधिवसञ्जीयात्कश्चिदद्भुतकेसरी ॥१॥

तपनेन्द्वग्निनयनस्तापानपाचिनोतु नः ।
तापनीयरहस्यानां सारः कामासिकाहरिः ॥२॥

आकण्ठमादिपुरुषं कण्ठीरवमुपरि कुण्ठितारातिम् ।
वेगोपकण्ठसङ्गाद्विमुक्तवैकुण्ठबहुमतिमुपासे ॥३॥

बन्धुमखिलस्य जन्तोर्बन्धुरपर्यङ्कबन्धरमणीयम् ।
विषमविलोचनमीडे वेगवतीपुलिनकेळिनरसिंहम् ॥४॥

स्वस्थानेषु मरुद्गणान्नियमयन्स्वाधीनसर्वेन्द्रियः
पर्यङ्कस्थिरधारणाप्रकटितप्रत्यङ्मुखावस्थितिः ।
प्रायेण प्रणिपेदुषः प्रभुरसौ योगं निजं शिक्षयन्
कामानातनुतादशेषजगतां कामासिकाकेसरी ॥५॥

विकस्वरनखस्वरुक्षतहिरण्यवक्षःस्थली-
निरर्गळविनिर्गळद्रुधिरसिन्धुसंध्यायिताः ।
अवन्तु मदनासिकामनुजपञ्चवक्त्रस्य मा-
महंप्रथमिकामिथः प्रकटिताहवा बाहवः ॥६॥

सटापटलभीषणे सरभसाट्टहासोद्भटे
स्फुरत्क्रुधि परिस्फुटभ्रुकुटिकेऽपि वक्त्रे कृते ।
कृपा कपटकेसरिन्दनुजडिम्भदत्तस्तना
सरोजसदृशा दृशा व्यतिविषज्य ते व्यज्यते ॥७॥

त्वयि रक्षति रक्षकैः किमन्यैस्त्वयि चारक्षति रक्षकैः किमन्यैः ।
इति निश्चितधीः श्रयामि नित्यं नृहरे वेगवतीतटाश्रयं त्वाम् ॥८॥

इत्थं स्तुतः सकृदिहाष्टभिरेष पद्यैः
श्रीवेङ्कटेशरचितैस्त्रिदशेन्द्रवन्द्यः ।
दुर्दान्तघोरदुरितद्विरदेन्द्रभेदी
कामासिकानरहरिर्वितनोतु कामान् ॥९॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य-
वेदान्ताचार्यस्य कृतिषु कामासिकाष्टकं संपूर्णम् ॥

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥

## ॥ अष्टभुजाष्टकम् ॥

श्रीमान्वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥

गजेन्द्ररक्षात्वरितं भवन्तं ग्राहैरिवाहं विषयैर्विकृष्टः ।
अपारविज्ञानदयानुभावमाप्तं सतामष्टभुजं प्रपद्ये ॥१॥

त्वदेकशेषोऽहमनात्मतन्त्रस्त्वत्पादलिप्सां दिशता त्वयैव ।
असत्समोऽप्यष्टभुजास्पदेश सत्तामिदानीमुपलम्भितोऽस्मि ॥२॥

स्वरूपरूपास्त्रविभूषणाद्यैः परत्वचिन्तां त्वयि दुर्निवाराम् ।
भोगे मृदूपक्रमतामभीप्सञ्छीलादिभिर्वारयसीव पुंसाम् ॥३॥

शक्तिं शरण्यान्तरशब्दभाजां सारं च संतोल्य फलान्तराणाम् ।
त्वद्दास्यहेतोस्त्वयि निर्विशङ्कं न्यस्तात्मनां नाथ बिभर्षि भारम् ॥

अभीतिहेतोरनुवर्तनीयं नाथ त्वदन्यं न विभावयामि ।
भयं कुतः स्यात्त्वयि सानुकम्पे रक्षा कुतः स्यात्त्वयि जातरोषे॥

त्वदेकतन्त्रं कमलासहाय स्वेनैव मां रक्षितुमर्हसि त्वम् ।
त्वयि प्रवृत्ते मम किं प्रयासैस्त्वय्यप्रवृत्ते मम किं प्रयासैः ? ॥६॥

समाधिभङ्गेष्वपि संपतत्सु शरण्यभूते त्वयि बद्धकक्ष्ये ।
अपत्रपे सोढुमकिञ्चनोऽहं दूराधिरोहं पतनं च नाथ ॥७॥

प्राप्ताभिलाषं त्वदनुग्रहान्मां पद्मानिषेव्ये तव पादपद्मे ।
आदेहपातादपराधदूरमात्मान्तकैङ्कर्यरसं विधेयाः ॥८॥

प्रपन्नजनपाथेयं प्रपित्सूनां रसायनम् ।
श्रेयसे जगतामेतच्छ्रीमदष्टभुजाष्टकम् ॥९॥

शरणागतसंत्राणत्वराद्विगुणबाहुना ।
हरिणा वेङ्कटेशीया स्तुतिः स्वीक्रियतामियम् ॥१०॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु अष्टभुजाष्टकं संपूर्णम् ॥

---

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥

---

## ॥ वामनस्तुतिः ॥

अदितिरुवाचः—

यज्ञेश यज्ञपुरुषाच्युत तीर्थपाद तीर्थश्रवः श्रवणमङ्गलनामधेय ।
आपन्नलोकवृजिनोपशमोदयाऽऽद्य शं नः कृधीश भगवन्नसि दीननाथः॥

विश्वाय विश्वभवनस्थितिसंयमाय स्वैरं गृहीतपुरुशक्तिगुणाय भून्ने।
स्वस्थाय शश्वदुपबृंहितपूर्णबोधव्यापादितात्मतमसे हरये नमस्ते ॥
आयुः परं वपुरभीष्टमतुल्यलक्ष्मीर्द्यौभूरसाः सकलयोगगुणास्त्रिवर्गः॥
ज्ञानं च केवलमनंत भवंति तुष्टात्त्वत्तो नृणां किमु सपत्नजयादिराशिः॥

इति श्रीमद्भागवतांतर्गता वामनस्तुतिः सम्पूर्णा ॥

## ॥ वामनस्तोत्रम् ॥

अदितिरुवाचः—

नमस्ते देवदेवेश सर्वव्यापिन् जनार्दन ।
सत्वादिगुणभेदेन लोकव्यापारकारण ॥१॥

नमस्ते बहुरूपाय अरूपाय नमो नमः ।
सर्वैकाद्भुतरूपाय निर्गुणाय गुणात्मने ॥२॥

नमस्ते लोकनाथाय परमज्ञानरूपिणे ।
सद्भक्तजनवात्सल्यशीलिने मङ्गलात्मने ॥३॥

यस्यावताररूपाणि ह्यर्चयंति मुनीश्वराः ।
तमादिपुरुषं देवं नमामीष्टार्थसिद्धये ॥४॥

यं न जानंति श्रुतयो यं न जानंति सूरयः ।
तं नमामि जगद्धेतुं मायिनं तममायिनम् ॥५॥

यस्यावलोकनं चित्रं मायोपद्रववारणम् ।
जगद्रूपं जगत्पालं तं वन्दे पद्मजाधवम् ॥६॥

यो देवस्त्यक्तसंगानां शांतानां करुणार्णवः ।
करोति ह्यात्मना संगं तं वन्दे संगवर्जितम् ॥७॥

यत्पादाब्जजलक्लिन्नसेवारंजितमस्तकाः ।
अवापुः परमां सिद्धिं तं वन्दे सर्ववंदितम् ॥८॥

यज्ञेश्वरं यज्ञभुजं यज्ञकर्मसु निष्ठितम् ।
नमामि यज्ञफलदं यज्ञकर्मप्रबोधकम् ॥९॥

अजामिलोऽपि पापात्मा यन्नामोच्चारणादनु ।
प्राप्तवान्परमं धाम तं वन्दे लोकसाक्षिणम् ॥१०॥

ब्रह्माद्या अपि ये देवा यन्मायापाशयंत्रिताः ।
न जानंति परं भावं तं वन्दे सर्वनायकम् ॥११॥

हृत्पद्मनिलयोऽज्ञानां दूरस्थ इव भाति यः ।
प्रमाणातीतसद्भावं तं वन्दे ज्ञानसाक्षिणम् ॥१२॥

यन्मुखाद्ब्राह्मणो जातो बाहुभ्यां क्षत्रियोऽजनि ।
तथैव ऊरुतो वैश्य पद्भ्यां शूद्रो अजायत ॥१३॥

मनसश्चंद्रमा जातो जातः सूर्यश्च चक्षुषः ।
मुखादिंद्रस्तथाग्निश्च प्राणाद्वायुरजायत ॥१४॥

त्वमिंद्रः पवनः सोमस्त्वमीशानस्त्वमंतकः ।
त्वमग्निर्निर्ऋतिश्चैव वरुणस्त्वं दिवाकरः ॥१५॥

देवाश्च स्थावराश्चैव पिशाचाश्चैव राक्षसाः ।
गिरयः सिद्धगन्धर्वा नद्यो भूमिश्च सागरः ॥१६॥

त्वमेव जगतामीशो यन्नामास्ति परात्परः ।
त्वद्रूपमखिलं तस्मात्पुत्रान्मे पाहि श्रीहरे ॥१७॥
इति स्तुत्वा देवधात्री देवं नत्वा पुनः पुनः ।
उवाच प्रांजलिर्भूत्वा हर्षाश्रुक्षालितस्तनी ॥१८॥
अनुग्राह्यास्मि देवेश हरे सर्वादिकारण ।
अकंटकश्रियं देहि मत्सुतानां दिवौकसाम् ॥१९॥
अन्तर्यामिन् जगद्रूप सर्वभूतपरेश्वर ।
तवाज्ञातं किमस्तीह किं मां मोहयसि प्रभो ? ॥२०॥
तथापि तव वक्ष्यामि यन्मे मनसि वर्तते ।
वृथापुत्रास्मि देवेश रक्षोभिः परिपीडिता ॥२१॥
एतान्न हंतुमिच्छामि मत्सुता दितिजा यतः ।
तानहत्वा श्रियं देहि मत्सुतानामुवाच सा ॥२२॥
इत्युक्तो देवदेवस्तु पुनः प्रीतिमुपागतः ।
उवाच हर्षयन्साध्वीं कृपयाभिपरिप्लुतः ॥२३॥

श्रीभगवानुवाचः—

प्रीतोऽस्मि देवि भद्रं ते भविष्यामि सुतस्तव ।
यतः सपत्नीतनयेष्वपि वात्सल्यशालिनी ॥२४॥
त्वया च मे कृतं स्तोत्रं पठंति भुवि मानवाः ।
तेषां पुत्रा धनं संपन्न हीयंते कदाचन ॥२५॥
अन्ते मत्पदमाप्नोति यद्विष्णोः परमं शुभम् ॥२६॥

इति श्रीपद्मपुराणे वामनस्तोत्रं समाप्तम् ॥

# ॥ श्रीरामाष्टोत्तरशतनामस्तोत्रम् ॥

श्रीराघवं दशरथात्मजमप्रमेयं सीतापतिं रघुकुलान्वयरत्नदीपम् ।
आजानुबाहुमरविन्ददळायताक्षं रामं निशाचरविनाशकरं नमामि ॥

वैदेहीसहितं सुरद्रुमतले हैमे महामण्डपे
मध्ये पुष्पकमासने मणिमये वीरासने सुस्थितम् ।
अग्रे वाचयति प्रभञ्जनसुते तत्त्वं मुनिभ्यः
परं व्याख्यान्तं भरतादिभिः परिवृतं रामं भजे श्यामलम् ॥

श्रीरामो रामभद्रश्च रामचन्द्रश्च शाश्वतः ।
राजीवलोचनः श्रीमान् राजेन्द्रो रघुपुङ्गवः ॥१॥

जानकीवल्लभो जैत्रो जितामित्रो जनार्दनः ।
विश्वामित्रप्रियो दान्तश्शरणत्राणतत्परः ॥२॥

वालिप्रमथनो वाग्मी सत्यवाक्सत्यविक्रमः ।
सत्यव्रतो व्रतधरस्सदा हनुमदाश्रितः ॥३॥

कौसलेयः खरध्वंसी विराधवधपण्डितः ।
विभीषणपरित्राता हरकोदण्डखण्डनः ॥४॥

सप्तसालप्रभेत्ता च दशग्रीवशिरोहरः ।
जामदग्न्यमहादर्पदळनस्ताटकान्तकः ॥५॥

वेदान्तसारो वेदात्मा भवरोगस्यभेषजम् ।
दूषणत्रिशिरोहन्ता त्रिमूर्तिस्त्रिगुणात्मकः ॥६॥

त्रिविक्रमस्त्रिलोकात्मा पुण्यचारित्रकीर्तनः ।
त्रिलोकरक्षको धन्वी दण्डकारण्यकर्तनः ॥७॥

अहल्याशापशमनः पितृभक्तो वरप्रदः ।
जितेन्द्रियो जितक्रोधो जितामित्रो जगद्गुरुः ॥८॥

ऋक्षवानरसंघातीचित्रकूटसमाश्रयः ।
जयन्तत्राणवरदस्सुमित्रापुत्रसेवितः ॥९॥

सर्वदेवादिदेवश्च मृतवानरजीवनः ।
मायामारीचहन्ता च महादेवो महाभुजः ॥१०॥

सर्वदेवस्तुतस्सौम्यो ब्रह्मण्यो मुनिसंस्तुतः ।
महायोगी महोदारस्सुग्रीवेप्सितराज्यदः ॥११॥

सर्वपुण्याधिकफलः स्मृतसर्वाघनाशनः ।
आदिपुरुषः परमपुरुषो महापूरुष एव च ॥१२॥

पुण्योदयो दयासारः पुराणपुरुषोत्तमः ।
स्मितवक्त्रो मिताभाषी पूर्वभाषी च राघवः ॥१३॥

अनन्तगुणगम्भीरो धीरोदात्तगुणोत्तमः ।
मायामानुषचारित्रो महादेवादिपूजितः ॥१४॥

सेतुकृज्जितवाराशिस्सर्वतीर्थमयो हरिः ।
श्यामाङ्गस्सुन्दरश्शूरः पीतवासाधनुर्धरः ॥१५॥

सर्वयज्ञाधिपो यज्वा जरामरणवर्जितः ।
शिवलिङ्गप्रतिष्ठाता सर्वापगुणवर्जितः ॥१६॥

परमात्मा परंब्रह्म सच्चिदानन्दविग्रहः ।
परं ज्योतिः परन्धाम पराकाशः परात्परः ॥१७॥
परेशः पारगः पारस्सर्वदेवात्मकः परः ॥

श्रीरामाष्टोत्तरशतनामस्तोत्रम् संपूर्णम् ॥

---

## ॥ श्रीरामसहस्रनामस्तोत्रम् ॥

राजीवलोचनः श्रीमान्श्रीरामो रघुपुंगवः ।
रामभद्रस्सदाचारो राजेंद्रो जानकीपतिः ॥१॥

अग्रगण्यो वरेण्यश्च वरदः परमेश्वरः ।
जनार्दनो जितामित्रः परार्थैकप्रयोजनः ॥२॥

विश्वामित्रप्रियो दांतश्शत्रुजिच्छत्रुतापनः ।
सर्वज्ञस्सर्वदेवादिशरण्यो वालिमर्दनः ॥३॥

ज्ञानभाव्योऽपरिच्छेद्यो वाग्मी सत्यव्रतश्शुचिः ।
ज्ञानगम्यो दृढप्रज्ञः खरध्वंसी प्रतापवान् ॥४॥

धृतिमानात्मवान्वीरो जितक्रोधोऽरिमर्दनः ।
विश्वरूपो विशालाक्षः प्रभुः परिवृढो दृढः ॥५॥

ईशः खड्गधरः श्रीमान्कौसलेयोऽनसूयकः ।
विपुलांसो महोरस्कः परमेष्ठी परायणः ॥६॥

सत्यव्रतस्सत्यसंधो गुरुः परमधार्मिकः ।
लोकज्ञो लोकवंद्यश्च लोकात्मा लोककृत्परः ॥७॥

अनादिर्भगवान् सेव्यो जितमायो रघूद्वहः ।
रामो दयाकरो दक्षस्सर्वज्ञस्सर्वपावनः ॥८॥
ब्रह्मण्यो नीतिमान्गोप्ता सर्वदेवमयो हरिः ।
सुंदरः पीतवासाश्च सूत्रकारः पुरातनः ॥९॥
सौम्यो महर्षिः कोदंडी सर्वज्ञः सर्वगोचरः ।
कविस्सुग्रीववरदः सर्वपुण्याधिकप्रदः ॥१०॥
भव्यो जितारिषड्वर्गो महोदारोऽघनाशनः ।
सुकीर्तिरादिपुरुषः कांतः पुण्यकृतागमः ॥११॥
अकल्मषश्चतुर्बाहुस्सर्वावासो दुरासदः ।
स्मितभाषी निवृत्तात्मा स्मृतिमान्वीर्यवानप्रभुः ॥१२॥
धीरोदात्तो घनश्यामः सर्वायुधविशारदः ।
अध्यात्मयोगनिलयस्सुमना लक्ष्मणाग्रजः ॥१३॥
सर्वतीर्थमय श्शूरः सर्वयज्ञ फलप्रदः ।
यज्ञस्वरूपी यज्ञेशो जरामरणवर्जितः ॥१४॥
वर्णाश्रमकरो वर्णी शत्रुजित्पुरुषोत्तमः ।
विभीषणप्रतिष्ठाता परमात्मा परात्परः ॥१५॥
प्रमाणभूतो दुर्ज्ञेयः पूर्णः परपुरंजयः ।
अनन्तदृष्टिरानन्दो धनुर्वेदो धनुर्धरः ॥१६॥
गुणाकरो गुणश्रेष्ठस्सच्चिदानन्दविग्रहः ।
अभिवन्द्यो महाकायो विश्वकर्मा विशारदः ॥१७॥

विनीतात्मा वीतरागस्तपस्वीशो जनेश्वरः ।
कल्याणप्रकृतिः कल्यस्सर्वेशस्सर्वकामदः ॥१८॥
अक्षरः पुरुषस्साक्षी केशवः पुरुषोत्तमः ।
लोकाध्यक्षो महामायो विभीषणवरप्रदः ॥१९॥
आनन्दविग्रहो ज्योतिर्हनूमत्प्रभुरक्षयः ।
भ्राजिष्णु स्सहनो भोक्ता सत्यवादी बहुश्रुतः ॥२०॥
सुखदः कारणं कर्ता भयबन्धविमोचनः ।
देवचूडामणिर्नेता ब्रह्मण्यो ब्रह्मवर्धनः ॥२१॥
संसारोत्तारको रामस्सर्वदुःखविमोक्षकृत् ।
विद्वत्तमो विश्वभर्ता विश्वहर्ता च विश्वकृत् ॥२२॥
नित्योनियतकल्याणस्सीताशोकविनाशकृत् ।
काकुत्स्थः पुण्डरीकाक्षो विश्वामित्रभयापहः ॥२३॥
मारीचमथनो रामो विराधवधपंडितः ।
दुस्स्वप्ननाशनो दम्यः किरीटी त्रिदशाधिपः ॥२४॥
महाधनुर्महाकायो भीमो भीमपराक्रमः ।
तत्त्वस्वरूपी तत्त्वज्ञस्तत्त्ववादी सुविक्रमः ॥२५॥
भूतात्मा भूतकृत्स्वामी कालज्ञानी महावटुः ।
अनिर्विण्णो गुणग्राही निष्कळङ्कः कळङ्कहा ॥२६॥
स्वभावभद्रश्शत्रुघ्नः केशवः स्थाणुरीश्वरः ।
भूतादिश्शम्भुरादित्य स्स्थविष्ठश्शाश्वतो ध्रुवः ॥२७॥

कवची कुण्डली चक्री खड्गी भक्तजनप्रियः ।
अमृत्युर्जन्मरहितस्सर्वजित्सर्वतापसः ॥२८॥

अनुत्तमोऽप्रमेयात्मा सर्वादिर्गुणसागरः ।
समस्समात्मा समगो जटामकुटमण्डितः ॥२९॥

अजेयः सर्वभूतात्मा विष्वक्सेनो महातपाः ।
लोकाध्यक्षो महाबाहुरमृतो वेदवित्तमः ॥३०॥

सहिष्णुः सद्गतिश्शास्ता विश्वयोनिर्महाद्युतिः ।
अतीन्द्र ऊर्जितः प्रांशुरुपेंद्रो वामनो बली ॥३१॥

धनुर्वेदविधाता च ब्रह्मा विष्णुश्च शङ्करः ।
हंसो मरीचि र्गोविंदो रत्नगर्भो महामतिः ॥३२॥

व्यासो वाचस्पतिस्सर्वदर्पितासुरमर्दनः ।
जानकीवल्लभः पूज्यः प्रकटः प्रीतिवर्धनः ॥३३॥

सम्भवोऽतींद्रियो वैद्योऽनिर्देशो जांबवत्प्रभुः ।
दमनो मथनो व्यापी विश्वरूपी निरंजनः ॥३४॥

नारायणोऽग्रणीस्साधु र्जटायुः प्रीतिवर्धनः ।
नैकरूपो जगन्नाथस्सुरकार्यहितः स्वभूः ॥३५॥

जितक्रोधो जिताराति: प्लवगाधिप राज्यदः ।
वसुदस्सुभुजो नैकमायो भव्यप्रमोदनः ॥३६॥

चण्डांशुस्सिद्धसङ्कल्पश्शरणागतवत्सलः ।
अगदो रोगहर्ता च मन्त्रविन्मन्त्रभावनः ॥३७॥

सौमित्रिवत्सलो धुर्यो व्यक्ताव्यक्तस्वरूपधृत् ।
विशिष्टो ग्रामणीः श्रीमान्अनुकूलप्रियं वदः ॥३८॥

अतुलस्सात्त्विको धीरश्शरासनविशारदः ।
ज्येष्ठस्सर्वगुणोपेतश्शक्तिमांस्ताटकान्तकः ॥३९॥

वैकुण्ठः प्राणिनां प्राणः कमठः कमलापतिः ।
गोवर्धनधरो मत्स्यरूपः कारुण्यसागरः ॥४०॥

कुम्भकर्णप्रभेत्ता च गोपीगोपालसंवृतः ।
मायावी स्वापनो व्यापी रैणुकेय बलापहः ॥४१॥

पिनाकमथनो वंद्यस्सम्मतो गरुडध्वजः ।
लोकत्रयाश्रयो लोकचरितो भरताग्रजः ॥४२॥

श्रीधरस्सद्गतिर्लोकसाक्षी नारायणो बुधः ।
मनोवेगी मनोरूपी पूर्णः पुरुषपुंगवः ॥४३॥

यदुश्रेष्ठो यदुपतिर्भूतावासस्सुविक्रमः ।
तेजोधरो धरोऽव्यग्रश्चतुर्मूर्तिर्महानिधिः ॥४४॥

चाणूरमर्दनो दिव्यश्शांतो भरतवंदितः ।
शब्दातिगो गभीरात्मा कोमलांगः प्रजागरः ॥४५॥

लोकगर्भश्शेषशायी क्षीराब्धिनिलयोऽमलः ।
आत्मयोनिरदीनात्मा सहस्राक्षस्सहस्रपात् ॥४६॥

अमृतांशुर्महागर्भो निवृत्तविषयस्पृहः ।
त्रिकालज्ञो मुनिस्साक्षी वैहायसगतिः कृती ॥४७॥

पर्जन्यः कुमुदो भूतावासः कमललोचनः ।
श्रीवत्सवक्षा श्श्रीरामो वीरहा लक्ष्मणाग्रजः ॥४८॥

लोकाभिरामो लोकारिमर्दनस्सेवकप्रियः ।
सनातनतमो मेघश्यामलो राक्षसांतकृत् ॥४९॥

दिव्यायुधधरश्श्रीमानप्रमेयो जितेंद्रियः ।
भूदेववंद्यो जनकप्रियकृत्प्रपितामहः ॥५०॥

उत्तमस्सात्त्विकस्सत्यस्सत्यसंधस्त्रिविक्रमः ।
सुव्रतस्सुलभस्सूक्ष्म स्सुघोष स्सुखदस्सुधीः ॥५१॥

दामोदरोऽच्युतश्शार्ङ्गी वामनो मधुराधिपः ।
देवकीनंदनश्शौरिश्शूरः कैटभमर्दनः ॥५२॥

सप्तताळप्रभेत्ता च मित्रवंशप्रवर्धनः ।
कालस्वरूपीकालात्मा कालः कल्याणदः कविः ॥५३॥

संवत्सरो ऋतुः पक्षः अयनो दिवसो युगः ।
स्तव्यो विविक्तो निर्लेपस्सर्वव्यापी निराकुलः ॥५४॥

रसो रसज्ञ स्सारज्ञो लोकसारो रसात्मकः ।
सर्वदुःखातिगो विद्याराशिः परमगोचरः ॥५५॥

शेषो विशेषो विगतकल्मषो रघुनायकः ।
वर्णश्रेष्ठो वर्णवाह्यो वर्ण्यो वर्ण्यगुणोज्ज्वलः ॥५६॥

कर्मसाक्ष्यमरश्रेष्ठो देवासुरनमस्कृतः ।
देवादिदेवो देवर्षिर्देवासुरवरप्रदः ॥५७॥

सर्वदेवमयश्चक्री शार्ङ्गपाणिरनुत्तमः ।
मनो बुद्धिरहंकारः प्रकृतिः पुरुषोऽव्ययः ॥५८॥

अहल्यापावनस्स्वामी पितृभक्तो वरप्रदः ।
न्यायो नयधरश्श्रीमान्नयो नगधरो ध्रुवः ॥५९॥

लक्ष्मी विश्वंभराभर्ता देवेंद्रो बलिमर्दनः ।
बाणारिमर्दनो यज्वाऽनुत्तमो मुनिसेवितः ॥६०॥

देवाग्रणीः परध्यानतत्परः परमःपरः ।
सामगानप्रियोऽक्रूरः पुण्यकीर्तिःसुलोचनः ॥६१॥

पुण्यः पुण्याधिकः पूर्वः पूर्णः पूरयिता रविः ।
जटिलः कल्मषध्वांतप्रभंजनविभावसुः ॥६२॥

अव्यक्तलक्षणोऽव्यक्तो दशास्यद्विपकेसरी ।
कलानिधिः कलारूपो कमलानंदवर्धनः ॥६३॥

जयो जरारि स्सर्वाघशमनो भवभंजनः ।
अलंकरिष्णु रचलो रोचिष्णु र्विक्रमोत्तमः ॥६४॥

अंशुश्शब्दपतिश्शब्दगोचरो रंजनो रघुः ।
निश्शब्दः प्रणवो माली स्थूलस्सूक्ष्मो विचक्षणः ॥६५॥

आत्मयोनिरयोनिश्च सप्तजिह्वस्सहस्रपात् ।
सनातनतमस्स्रग्वी पेशलो जविनांवरः ॥६६॥

शक्तिमान् शंखभृन्नाथः गदापद्मरथांगभृत् ।
निरीहो निर्विकल्पश्च चिद्रूपो जितसाध्वसः ॥६७॥

शताननस्सहस्राक्षः शतमूर्तिर्घनप्रभः ।
हृत्पुंडरीकशयनो कठिनो द्रव एव च ॥६८॥
उग्रो ग्रहपतिः कृष्णस्समर्थोऽनर्थनाशनः ।
अधर्म शत्रुरक्षोघ्नः पुरुहूतः पुरुष्टुतः ॥६९॥
ब्रह्मगर्भो बृहद्गर्भो धर्मधेनुर्धनागमः ।
हिरण्यगर्भो ज्योतिष्मान् सुललाटस्सुविक्रमः ॥७०॥
पितृपूजारतश्चैव भवानीप्रियकृद्वशी ।
नरो नारायणो रामः कपर्दी नीललोहितः ॥७१॥
उग्रः पशुपतिस्स्थाणुर्विश्वामित्रो द्विजेश्वरः ।
मातामहो मातरिश्वाविरिंचो विष्टरश्रवाः ॥७२॥
अक्षोभ्यस्सर्वभूतानां चण्डस्सर्वपराक्रमः ।
वालखिल्यो महाकल्पः कल्पवृक्षः कळाधरः ॥७३॥
निदाघस्तपनोऽमोघः श्लक्ष्णः परबलापहन् ।
कबन्धमथनो दिव्यः कम्बुग्रीवश्शिवप्रियः ॥७४॥
शङ्खोऽनिलस्सुनिष्पन्नस्सुरभिश्शिशिरात्मकः ।
असंस्पृष्टोऽतिथिश्शूरः परार्धिः पापनाशकृत् ॥७५॥
वसुश्रवाः कव्यवाहो प्रतपा विश्वभोजनः ।
रामो नीलोत्पलश्यामो ज्ञानस्कन्धो महाद्युतिः ॥७६॥
पवित्रपादः पापारिर्मणिपूरो नभोगतिः ।
उत्तारणो दुष्कृतिहादुर्धर्षो दुस्सहोऽभयः ॥७७॥

अमृतांशोऽमृतवपुर्धर्मश्चापि कृपाकरः ।
भर्गो विवस्वानादित्योयोगाचार्यो दिवस्पतिः ॥७८॥

उदारकीर्तिरुद्योगी वाङ्मयस्सदसन्मयः ।
नक्षत्रमाले नाकेशस्स्वाधिष्ठानष्षडाश्रयः ॥७९॥

चतुर्वर्गफलो वर्गी शक्तित्रयफलांनिधिः ।
निधानगर्भो निर्व्याजो गिरीशो व्याजमर्दनः ॥८०॥

श्रीवल्लभश्शिवारम्भ श्शांतिर्भद्र समञ्जसः ।
भूशयोभूतिकृद्भूतिः भूषणो भूतवाहनः ॥८१॥

अकायो भक्तकायस्थो कालज्ञानी महावटुः ।
परार्थवृत्तिरचलो विविक्तश्श्रुतिसागरः ॥८२॥

स्वभावभद्रो मध्यस्थस्संसारभयनाशनः ।
वेद्यो वैद्यो वियद्गोप्ता सर्वामरमुनीश्वरः ॥८३॥

सुरेंद्रः करणं कर्म कर्मकृत्कर्म्यधोक्षजः ।
धैर्योऽग्रधुर्यो धात्रीशस्सङ्कल्पश्शर्वरीपतिः ॥८४॥

परमार्थगुरुर्वृद्धश्शुचिराश्रितवत्सलः ।
विष्णुर्जिष्णु र्विभुर्वन्द्यो यज्ञेशो यज्ञपालकः ॥८५॥

प्रभविष्णुर्ग्रसिष्णुश्च लोकात्मा लोकभावनः ।
केशवः केशिहाकाव्यः कविः कारणकारणम् ॥८६॥

काव्यकर्ताकळाशेषो वासुदेवः पुरुष्टुतः ।
आदिकर्ता वराहश्च माधवो मधुसूदनः ॥८७॥

नारायणो नरो हंसो विष्वक्सेनो जनार्दनः ।
विश्वकर्ता महायज्ञो ज्योतिष्मान् पुरुषोत्तमः ॥८८॥
वैकुण्ठः पुण्डरीकाक्षः कृष्णस्सूर्यस्सुरार्चितः ।
नारसिंहो महाभीमो वक्रदंष्ट्रो नखायुधः ॥८९॥
आदिदेवो जगत्कर्ता योगीशो गरुडध्वजः ।
गोविंदो गोपतिर्गोप्ता भूपतिर्भुवनेश्वरः ॥९०॥
पद्मनाभो हृषीकेशो धाता दामोदरः प्रभुः ।
त्रिविक्रमस्त्रिलोकेशो ब्रह्मेशः प्रीतिवर्धनः ॥९१॥
वामनो दुष्टदमनो गोविन्दो गोपवल्लभः ।
भक्तप्रियोऽच्युतस्सत्यस्सत्यकीर्तिर्धृतिस्स्मृतिः ॥९२॥
कारुण्यं करुणो व्यासः पापहा शांतिवर्धनः ।
सन्यासीशास्त्रतत्त्वज्ञो मन्दराद्रिनिकेतनः ॥९३॥
बदरीनिलयश्शान्तस्तपस्वीवैद्युतप्रभः ।
भूतावासो गुहावासश्श्रीनिवासश्श्रियः पतिः ॥९४॥
तपोवासो मुदावासस्सत्यावासस्सनातनः ।
पुरुषः पुष्करः पुण्यः पुष्कराक्षोमहेश्वरः ॥९५॥
पूर्णमूर्तिः पुराणज्ञः पुण्यदः पुण्यवर्धनः ।
शङ्खी चक्रीगदी शार्ङ्गीलाङ्गली मुसलीहली ॥९६॥
किरीटकुण्डली हारीमेखलीकवची ध्वजी ।
योद्धा जेता महावीर्योशत्रुजिच्छत्रुतापनः ॥९७॥

शास्ता शास्त्रकरश्शास्त्रं सततं शङ्करस्तुतः ।
सारथिस्सात्त्विकः स्वामी सामवेदप्रियस्समः ॥९८॥

हवनस्साहसश्शक्तिस्संपूर्णांगस्समृद्धिमान् ।
स्वर्गदः कामदं श्रीदः कीर्तिदोऽकीर्तिनाशनः ॥९९॥

मोक्षदः पुंडरीकाक्षः क्षीराब्धिकृतकेतनः ।
सर्वात्मासर्वलोकेशः प्रेरकः पापनाशनः ॥१००॥

सर्वदेवो जगन्नाथः सर्वलोकमहेश्वरः ।
सर्गस्थित्यंतकृद्देवः सर्वलोकसुखावहः ॥१०१॥

अक्षय्यश्शाश्वतोऽनंतः क्षयवृद्धिविवर्जितः ।
निर्लेपो निर्गुणस्सूक्ष्मो निर्विकारो निरंजनः ॥१०२॥

सर्वोपाधिविनिर्मुक्तस्सत्तामात्रव्यवस्थितः ।
अधिकारी विभुर्नित्यः परमात्मा सनातनः ॥१०३॥

अचलो निर्मलो व्यापी नित्यतृप्तो निराश्रयः ।
श्यामो युवा लोहिताक्षो दीप्तास्यो मितभाषणः ॥१०४॥

आजानुबाहुस्सुमुखस्सिंहस्कन्धोमहाभुजः ।
सत्यवान् गुणसंपन्नस्स्वयंतेजास्सुदीप्तिमान् ॥१०५॥

कालात्मा भगवान्कालः कालचक्रप्रवर्तकः ।
नारायणः परंज्योतिः परमात्मा सनातनः ॥१०६॥

विश्वसृड्विश्वगोप्ता च विश्वभोक्ता च शाश्वतः ।
विश्वेश्वरो विश्वमूर्तिर्विश्वात्मा विश्वभावनः ॥१०७॥

सर्वभूतसुहृच्छान्तस्सर्वभूतानुकम्पनः ।
सर्वेश्वरेश्वरस्सर्वश्श्रीमानाश्रितवत्सलः ॥१०८॥

सर्वगस्सर्वभूतेशः सर्वभूताशयस्थितः ।
आभ्यन्तरस्य तमसश्छेत्ता नारायणः परः ॥१०९॥

अनादिनिधनः स्रष्टा प्रजापतिपति र्हरिः
नारसिंहो हृषीकेश स्सर्वात्मा सर्वदृग्वशी ॥११०॥

जगत स्तस्थुष श्चैव प्रभुर्नेता सनातनः
कर्ता धाता विधाता च सर्वेषांप्रभुरीश्वरः ॥१११॥

सहस्रमूर्ति र्विश्वात्मा विष्णुर्विश्वदृगव्ययः
पुराणपुरुषस्स्रष्टा सहस्राक्ष स्सहस्रपात् ॥११२॥

तत्त्वं नारायणो विष्णु र्वासुदेवस्सनातनः
परमात्मा परंब्रह्म सच्चिदानंदविग्रहः ॥११३॥

परंज्योतिः परंधाम पराकाशः परात्परः ।
अच्युतः पुरुषः कृष्णश्शाश्वतश्शिव ईश्वरः ॥११४॥

नित्यस्सर्वगतस्स्थाणु रुग्रस्साक्षी प्रजापतिः ।
हिरण्यगर्भस्सविता लोककृल्लोकभृद्विभुः ॥११५॥

रामश्श्रीमान्महाविष्णु र्जिष्णुर्देव हितावहः ।
तत्त्वात्मा तारकब्रह्म शाश्वतस्सर्वसिद्धिदः ॥११६॥

अकारवाच्यो भगवान् श्रीपतिर्भूपतिः पुमान् ।
सर्वलोकेश्वरश्श्रीमान् सर्वज्ञस्सर्वतोमुखः ॥११७॥

स्वामीसुशीलस्सुलभ स्सर्वज्ञस्सर्वशक्तिमान् ।
नित्यसंपूर्ण कामश्चनैसर्गिकसुहृत्सुखी ॥११८॥

कृपापीयूषजलधिश्शरण्य स्सर्वदेहिनां ।
नारायणश्च स्वामी च जगतांपतिरीश्वरः ॥११९॥

श्रीशश्शरण्यो भूतानां संश्रिताभीष्टदायकः ।
अनंतश्श्रीपतीरामो गुणभृन्निर्गुणो महान् ॥११९॥

॥ श्रीरामसहस्रनामस्तोत्रं समाप्तम् ॥

॥ श्रीरामस्तुतिः ॥

ततो हि दुर्मना रामः श्रुत्वैव वदतां गिरः ।
दध्यौ मुहूर्तं धर्मात्मा बाष्पव्याकुललोचनः ॥१॥

ततो वैश्रवणो राजा यमश्चामित्रकर्शनः ।
सहस्राक्षो महेन्द्रश्च वरुणश्च परंतपः ॥२॥

षडर्धनयन श्श्रीमान् महादेवो वृषध्वजः ।
कर्ता सर्वस्य लोकस्य ब्रह्मा ब्रह्मविदां वरः ॥३॥

एते सर्वे समागम्य विमानै स्सूर्यसन्निभैः ।
आगम्य नगरीं लङ्का मभिजग्मुश्च राघवम् ॥४॥

तत स्सहस्ताभरणान् प्रगृह्य विपुलान्भुजान् ।
अब्रुवं स्त्रिदशश्रेष्ठाः प्रांञ्जलिं राघवं स्थितम् ॥५॥

कर्ता सर्वस्य लोकस्य श्रेष्ठो ज्ञानवतां वरः ।
उपेक्षसे कथं सीतां पतन्तीं हव्यवाहने ॥६॥

कथं देवगणश्रेष्ठ मात्मानं नावबुध्यसे ।
ऋतुधामा वसुःपूर्वं वसूनां त्वं प्रजापतिः ॥७॥
त्रयाणां हि त्वं लोकाना मादिकर्ता स्वयंप्रभुः ।
रुद्राणा मष्टमो रुद्र स्साध्यानामपि पञ्चमः ॥८॥
अश्विनौ चापि ते कर्णौ चन्द्रसूर्यौ च चक्षुषी ।
अन्ते चादौ च लोकानां दृश्यसे त्वं परन्तप ॥९॥
उपेक्षसे च वैदेहीं मानुषः प्राकृतो यथा ।
इत्युक्तो लोकपालै स्तै स्स्वामी लोकस्य राघवः ॥१०॥
अब्रवीत्त्रिदशश्रेष्ठान्रामो धर्मभृतां वरः ।
नाहं विष्णु र्नरुद्रश्च नदेवा न पितामहः ॥११॥
आत्मानं मानुषं मन्ये रामं दशरथात्मजम् ।
योऽहं यस्य यतश्चाहं भगवां स्तद्ब्रवीतुमे ॥१२॥
इति ब्रुवाणं काकुत्स्थं ब्रह्मा ब्रह्मविदां वरः ।
अब्रवीच्छृणु मे राम सत्यं सत्यपराक्रम ॥१३॥
भवा न्नारायणो देव श्श्रीमां श्चक्रायुधो विभुः ।
एकश्रृङ्गो वराहस्त्वं भूतभव्यसपत्नजित् ॥१४॥
अक्षरं ब्रह्म सत्यं च मध्ये चान्तेच राघव ।
लोकानां त्वं परो धर्मो विष्वक्सेनश्चतुर्भुजः ॥१५॥
शार्ङ्गधन्वा हृषीकेशः पुरुषः पुरुषोत्तमः ।
अजितः खड्गधृद्विष्णुः कृष्णश्चैव बृहद्बलः ॥१६॥

सेनानी ग्रामणीश्च त्वं बुद्धिस्सत्वं क्षमा दमः ।
प्रभवश्चाप्ययश्चत्व मुपेन्द्रो मधुसूदनः ॥१७॥
इन्द्रकर्मा महेन्द्रस्त्वं पद्मनाभो रणान्तकृत् ।
शरण्यं शरणं चत्वामाहु र्दिव्या महर्षयः ॥१८॥
सहस्रशृङ्गो वेदात्मा शतजिह्वो महर्षभः ।
त्वंत्रयाणां हि लोकानामादिकर्ता स्वयंप्रभुः ॥१९॥
सिद्धानामपि साध्याना माश्रयश्चासिपूर्वजः ।
त्वं यज्ञस्त्वं वषट्कार स्त्वमोङ्कारः परन्तपः ॥२०॥
प्रभवं निधनंवा तेन विदुः को भवानिति ।
दृश्यसे सर्वभूतेषु ब्राह्मणेषु च गोषुच ॥२१॥
दिक्षु सर्वासु गगने पर्वतेषु वनेषुच ।
सहस्रचरण श्श्रीमन् शतशीर्ष स्सहस्रदृक् ॥२२॥
त्वं धारयसि भूतानि वसुधां च सपर्वताम् ।
अन्ते पृथिव्यास्सलिले दृश्यसे त्वं महोरगः ॥२३॥
त्रीन् लोकान्धारयन्राम देवगन्धर्वदानवान् ।
अहं ते हृदयं राम जिह्वा देवी सरस्वती ॥२४॥
देवा गात्रेषु रोमाणि स्थितास्ते ब्रह्मणः प्रभो ।
निमेषस्ते भवेद्रात्रिरुन्मेषस्ते भवेद्दिवा ॥२५॥
संस्कारास्तेऽभवन्वेदा न तदस्ति त्वया विना ।
जगत्सर्वं शरीरं ते स्थैर्यं ते वसुधातलम् ॥२६॥

अग्निः कोपः प्रसादस्ते सोमश्श्रीवत्सलक्षणः ।
त्वया लोकास्त्रयः क्रान्ताः पुराणे विक्रमै स्त्रिभिः ॥२७॥

महेन्द्रश्चकृतो राजा बलिं वध्वा महासुरम् ।
सीता लक्ष्मी र्भवान् विष्णु र्देवः कृष्णः प्रजापतिः ॥२८॥

वधार्थं रावणस्येह प्रविष्टो मानुर्षी तनुम् ।
तदिदं नः कृतं कार्यं त्वया धर्मभृतांवर ॥२९॥

निहतो रावणो राम प्रहृष्टो दिव माक्रम ।
अमोघं बलवीर्यं ते अमोघस्ते पराक्रमः ॥३०॥

अमोघं दर्शनं राम नच मोघस्तवस्तवः ।
अमोघा स्ते भविष्यन्ति भक्तिमन्तश्चयेनराः ॥३१॥

येत्वां देवं ध्रुवं भक्ताः पुराणं पुरुषोत्तमम् ।
प्राप्नुवन्ति सदा कामानिह लोके परत्र च ॥३२॥

इममार्षं स्तवं नित्य मितिहासं पुरातनम् ।
ये नराः कीर्तयिष्यन्ति नास्ति तेषां पराभवः ॥३३॥

इति श्रीमद्रामायणे युद्धकाण्डे विंशत्युत्तरशततमे
सर्गे ब्रह्मादिदेवकृता श्रीरामस्तुतिः ॥

---

## ॥ श्रीरामभुजङ्गप्रयातस्तोत्रम् ॥

विशुद्धं परं सच्चिदानन्दरूपं गुणाधारमाधारहीनं वरेण्यम् ।
महान्तं विभान्तं गुहान्तं गुणान्तं सुखान्तं स्वयं धाम रामं प्रपद्ये ।

शिवं नित्यमेकं विभुं तारकाख्यं सुखाकार माकारशून्यं सुमान्यम् ।
महेशं कलेशं सुरेशं परेशं नरेशं निरीशं महीशं प्रपद्ये ॥२॥

यदा वर्णयत् कर्णमूलेऽन्तकाले शिवो राम रामेति काश्याम् ।
तदेकं परं तारक ब्रह्मरूपं भजेऽहं भजेऽहं भजेऽहं भजेऽहम् ॥३॥

महारत्नपीठे शुभे कल्पमूले सुखासीनमादित्यकोटिप्रकाशम् ।
सदा जानकीलक्ष्मणोपेतमेकं सदा रामचन्द्रं भजेऽहं भजेऽहम् ॥४॥

क्वणद्रत्न मञ्जीरपादारविन्दं लसन्मेखलाचारुपीताम्बराढ्यम् ।
महारत्नहारोल्लसत्कौस्तुभाङ्गं नदच्चञ्चरीमञ्जरी लोलमालम् ॥५॥

लसच्चन्द्रिकास्मेरशोणाधराभं समुद्यत्पतङ्गेन्दुकोटिप्रकाशम् ।
नमद्ब्रह्मरुद्रादिकोटीररत्न स्फुरत्कान्ति नीराजनाराजिताङ्घ्रिम् ॥६॥

पुरः प्राञ्जलीनाञ्जनेय भक्तान् स्वचिन्मुद्रया भद्रया बोधयन्तम् ।
भजेऽहं भजेऽहं सदा रामचन्द्रं त्वदन्यं न मन्ये नमन्ये नमन्ये॥७॥

यदा मत्समीपं कृतान्तः समेत्य प्रचण्डकोपै र्भटै र्भीषये न्माम् ।
तदाविष्करोषि त्वदीयं स्वरूपं सदापत्प्रणाशं सकोदण्डबाणम् ॥८॥

निजे मानसेमन्दिरे सन्निधेहि प्रसीद प्रभो रामचन्द्र ।
ससौमित्रिणा कैकयीनन्दनेन स्वशक्त्यानु भक्त्याच संसेव्यमान॥९॥

स्व भक्ताग्रगण्यैः कपीशैर्महीशै रनीकैरनेकैश्च राम प्रसीद ।
नमस्ते नमोऽस्त्वीश राम प्रसीद प्रशाधिप्रशाधि प्रकाशं प्रभोमाम् ॥

त्वमेवासिदैवं परं मे यदेकं सुचैतन्य मेतत्त्वदन्यं नमन्ये ।
यतोऽभूदमेयं वियद्वायुतेजो जलोर्व्यादिकार्यं चरं चाचरं च ॥११॥

नमस्सच्चिदानन्दरूपाय तस्मै नमोदेवदेवाय रामाय तुभ्यम् ।
नमो जानकीजीवितेशाय तुभ्यं नमः पुण्डरीकायताक्षाय तुभ्यम् ॥
नमो भक्तियुक्तानुरक्ताय तुभ्यं नमः पुण्यपुञ्जैक लभ्याय तुभ्यम् ।
नमोवेदवेद्याय चाद्याय पुंसे नमः सुन्दरायेन्दिरावल्लभाय ॥१३॥
नमो विश्वकर्त्रे नमो विश्वहर्त्रे नमो विश्वभोक्त्रे नमो विश्वमात्रे ।
नमो विश्वनेत्रे नमो विश्वजेत्रे नमो विश्वपित्रे नमो विश्वमात्रे ॥
नमस्ते नमस्ते समस्तप्रपञ्च प्रभोगप्रयोगप्रमाण प्रवीण ।
मदीयं मनस्त्वत्पदद्वन्द्वसेवां विधातुं प्रवृत्तं सुचैतन्यसिध्यै ॥१५॥
शिलापि त्वदङ्घ्रि क्षमासङ्गिरेणु प्रसादाद्धि चैतन्यमाधत्त राम ।
नरस्त्वत्पदद्वन्द्वसेवाविधानात् सुचैतन्यमेतीति किंचित्रमत्र ? ॥१६॥
पवित्रं चरित्रं विचित्रं त्वदीयं नराये स्मरन्त्यन्वहं रामचन्द्र ।
भवन्तं भवान्तं भरन्तं भजन्तो लभन्ते कृतान्तं न पश्यन्त्यतोऽन्ते॥
सपुण्यः सगण्यः शरण्यो ममायं नरो वेद यो देवचूडामणिं त्वाम् ।
सदाकारमेकं चिदानन्दरूपं मनोवागगम्यं परंधाम राम ॥१८॥
प्रचण्ड प्रतापप्रभावाभिभूत प्रभूतारिवीर प्रभो रामचन्द्र ।
बलंते कथं वर्ण्यतेऽतीव बाल्ये यतोऽखण्डि चण्डीशकोदण्डदण्डम् ॥
दशग्रीवमुग्रं सपुत्रं समित्रं सरिद्दुर्गमध्यस्थ रक्षोगणेशम् ।
भवन्तं विनाराम वीरो नरोवा सुरोवामरोवा जयेत् कस्त्रिलोक्याम्॥
सदा रामरामेति रामामृतं ते सदा राममानन्दनिष्यन्दम् ।
पिबन्तं नमन्तं सुदन्तं हसन्तं हनूमन्तमन्ते भजे नितान्तम् ॥२१॥

सदारामरामेति रामामृतं ते सदाराममानन्द निष्यन्दकन्दम् ।
पिबन्नन्वहं नन्वहंनैवमृत्यो र्बिभेमि प्रसादादसादात्तवैव ॥२२॥

असीतासमेतैरकोदण्डभूषै: रसौमित्रवन्द्यैरचण्डप्रतापै: ।
अलङ्केशकालैरसुग्रीवमित्रै ररामाभिधेयैरलं दैवतैर्नः ॥२३॥

अवीरासनस्थै रचिन्मुद्रिकाढ्यै रभक्ताञ्जनेयादितत्त्वप्रकाशैः ।
अमन्दारमूलैरमन्दारमालै ररामाभिधेयैरलंदैवतैर्नः ॥२४॥

असिन्धुप्रकोपै रवन्द्यप्रतापै रबन्धु प्रयाणैरमन्दस्मिताढ्यैः ।
अदण्डप्रवासैरखण्डप्रबोधै ररामाभिधेयैरलंदैवतैर्नः ॥२५॥

हरे राम सीतापते रावणारे खरारे मुरारेऽसुरारे परेति ।
लपन्तं नयन्तं सदाकालमेवं समालोकयालोकयाशेषबन्धो ॥२६॥

नमस्ते सुमित्रासुपुत्राभिवन्द्य नमस्ते सदा कैकेयीनन्दनेड्य ।
नमस्ते सदा वानराधीशवन्द्य नमस्ते नमस्ते सदारामचन्द्र॥ २७॥

प्रसीद प्रसीद प्रचण्डप्रताप प्रसीद प्रसीद प्रचण्डारिकाल ।
प्रसीद प्रसीद प्रपन्नानुकम्पिन् प्रसीद प्रसीद प्रभो रमचन्द्र ॥२८॥

भुजङ्गप्रयातं परं वेदसारं मुदारामचंद्रस्य भक्त्या च नित्यम् ।
पठन्सन्ततं चिन्तयन्स्वान्तरङ्गे स एव स्वयं रामचन्द्रः सधन्यः ॥

इति श्रीमत्परमहंस परिव्राजकाचार्यस्य
श्रीगोविन्द भगवत्पूज्यपादशिष्यस्य श्रीमच्छङ्कर भगवतः कृतौ
श्रीराम भुजङ्गप्रयातस्तोत्रम् सम्पूर्णम्

---

## ॥ रघुवीरगद्यम् ॥

श्रीमान्वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥

जयत्याश्रितसंत्रासध्वान्तविध्वंसनोदयः ।
प्रभावान्सीतया देव्या परमव्योमभास्करः ॥

जय जय महावीर, महाधीरधौरेय, देवासुरसमरसमयसमुदितनिखिलनिर्जरनिर्धारितनिरवधिकमाहात्म्य, दशवदनदमितदैवतपरिषदभ्यर्थितदाशरथिभाव, दिनकरकुलकमलदिवाकर, दिविषदधिपतिरणसहचरणचतुरदशरथचरमऋणविमोचन, कोसलसुताकुमारभावकञ्चुकितकारणाकार, कौमारकेळिगोपायितकौशिकाध्वर, रणाध्वरधुर्यभव्यदिव्यास्त्रबृन्दवंदित, प्रणतजनविमतविमथनदुर्ललितदोर्ललित, तनुतरविशिखवितानविघटितविशरारुशरारुताटकाताटकेय, जडकिरणशकलधरजटिलनटपतिमकुटतटनटनपटुविबुधसरिदतिबहुळमधुगळनललितपदनळिनरजउपमृदितनिजवृजिनजहदुपलतनुरुचिरपरममुनिवरयुवतिनुत, कुशिकसुतकथितविदितनवविविधकथ, मैथिलनगरसुलोचनालोचनचकोरचन्द्र, खण्डपरशुकोदण्डप्रकाण्डखण्डनशौण्डभुजदण्ड, चण्डकरकिरणमण्डलबोधितपुण्डरीकवनरुचिलुण्टाकलोचन, मोचितजनकहृदयशङ्कातङ्क, परिहृतनिखिलनरपतिवरणजनकदुहितृकुचतटविहरणसमुचितकरतल, शतकोटिशतगुणकठिनपरशुधरमुनिवरकरधृतदुरवनमितमनिजधनुराकर्षणप्रकाशितपारमेष्ठ्य, क्रतुहरशिखरिकन्तुकविहृत्युमुखजगदरुन्तुदजितहरिदन्तदन्तुरोदन्तदशवदनदमनकुशलदशशतभुजमुखनृपतिकुलरुधिरझरभरित, पृथुतरतटाकतर्पितपितृकभृगुपतिसुगतिविहतिकरनतपरुडिषुपरिघ -

अनृतभयमुषितहृदयपितृवचनपालनप्रतिज्ञावज्ञातयौवराज्य, निषादराजसौहृदसूचितसौशील्यसागर, भरद्वाजशासनपरिगृहीतविचित्रचित्रकूटगिरिकटकतटरम्यावसथ, अनन्यशासनीय, प्रणतभरतमकुटतटसुघटितपादुकाग्र्याभिषेकनिर्वर्तितसर्वलोकयोगक्षेम, पिशितरुचिविहितदुरितवलमथनतनयबलिभुगनुगतिसरभसशयनतृणशकलपरिपतनभयचकितसकलसुरमुनिवरबहुमतमहास्त्रसामर्थ्य, द्रुहिणहरवलमथनदुरारक्षशरलक्ष, दण्डकातपोवनजङ्गमपारिजात, विराधहरिणशार्दूल, विलुलितबहुफलमखकलमरजनिचरमृगमृगयारम्भसंभृतचीरभृदनुरोध, त्रिशिरःशिरस्त्रितयतिमिरनिरासवासरकर, दूषणजलनिधिशोषणतोषितऋषिगणघोषितविजयघोषण, खरतरखरतरुखण्डनचण्डपवन, द्विसप्तरक्षःसहस्रनलवनविलोलनमहाकलभ, असहायशूर, अनपायसाहस, महितमहामृधदर्शनमुदितमैथिलीदृढतरपरिरम्भणविभवविरोपितविकटवीरव्रण, मारीचमायामृगचर्मपरिकर्मितनिर्भरदर्भास्तरण, विक्रमयशोलाभविक्रीतगृध्रराजदेहदिधक्षालक्षितभक्तजनदाक्षिण्य, कल्पितविबुधभावकबन्धाभिनन्दित, अवन्ध्यमहिममुनिजनभजनमुषितहृदयकलुषशबरीमोक्षसाक्षीभूत, प्रभञ्जनतनयभावुकभाषितरञ्जितहृदय, तरणिसुतशरणागतिपरतन्त्रितस्वातन्त्र्य, दृढघटितकैलासकोटिविकटदुन्दुभिकङ्कालकूटदूरविक्षेपदक्षदक्षिणेतरपादाङ्गुष्ठदरचलनविश्वस्तसुहृदाशय, अतिपृथुलबहुविटपिगिरिधरणिविवरयुगपदुदयविवृतचित्रपुङ्खवैचित्र्य, विपुलभुजशैलमूलनिबिडनिपीडितरावणरणरणकजनकचतुरुदधिविहरणचतुरकपिकुलपतिहृदयविशालशिलातलदारणदारुणशिलीमुख, अपारपारावारपरिखापरिवृतपरपुरपरिसृतदवदहनजवनपवनभवकपिवरपरिष्वङ्गभावितसर्वस्व-

दान, अहितसहोदररक्षःपरिग्रहविसंवादिविविधसचिवविप्रलम्भसमयसंरम्भसमुज्जृम्भितसर्वेश्वरभाव, सकृत्प्रपन्नजनसंरक्षणदीक्षित, वीर, सत्यव्रत, प्रतिशयनभूमिकाभूषितपयोधिपुळिन, प्रळयशिखिपरुषविशिखशिखाशोषिताकूपारवारिपूर, प्रबलरिपुकलहकुतुकचटुलकपिकुलकरतलतुलितहृतगिरिनिकरसाधितसेतुपथसीमसीमन्तित-समुद्र, द्रुतगतितरुमृगवरूथिनीनिरुद्धलङ्कावरोधवेपथुलास्यलीलोपदेशदेशिकधनुर्ज्याघोष, गगनचरकनकगिरिगरिमधरनिगममयनिजगरुडगरुदनिलवगळितविषवदनशरकदन, अकृतचरवनचरणकरणवैलक्ष्यकूणिताक्षबहुविधरक्षोबलाध्यक्षवक्षःकवाटपाटनपटिमसाटोप-कोपावलेप, कटुरटदटनिटंकृतिचटुलकठोरकार्मुक, विशङ्कटविशिखविताडनविघटितमकुटविह्वलविश्रवस्तनयविश्रमसमयविश्राणनाविख्यात-विक्रम, कुंभकर्णकुलगिरिविदळनदम्भोळिभूतनिःशङ्ककङ्कपत्र, अभिचरणहुतवहपरिचरणविघटनसरभसपरिपतदपरिमितकपिबलजलधिल-हरिकलकलरवकुपितमघवजिदभिहननकृदनुजसाक्षिकराक्षसद्वन्द्वयुद्ध, अप्रतिद्वन्द्वपौरुष, त्र्यम्बकसमधिकघोरास्त्राडम्बर, सारथिहृतरथसत्रपशात्रवसत्यापितप्रताप, शितशरकृतलवनदशमुखमुखदशकनिपतन-पुनरुदयदरगळितजनितदरतरळहरिहयनयननळिनवनरुचिखचित-निपतितसुरतरुकुसुमवितातिसुरभितरथपथ, अखिलजगदधिकभुजबलवरबलदशलपनलपनदशकलवनजनितकदनपरवशरजनिचरयुवति-विलपनवचनसमविषयनिगमशिखरनिकरमुखरमुखमुनिवरपरिपणित अभिगतशतमखहुतवहपितृपतिनिर्ऋतिवरुणपवनधनदगिरिशमुखसु-रपतिनुतिमुदित, अमितमतिविधिविदितकथितनिजविभवजलधिपृषतलव, विगतभयविबुधविबोधितवीरशयनशायितवानरपृतनौघ, स्वस-

मयविघटितसुघटितसहृदयसहधर्मचारिणीक, विभीषणवशंवदीकृतलङ्कैश्वर्य, निष्पन्नकृत्य, खपुष्पितरिपुपक्ष, पुष्पकरभसगतिगोष्पदीकृतगगनार्णव, प्रतिज्ञार्णवतरणकृतक्षणभरतमनोरथसंहितसिंहासनाधिरूढ, स्वामिन्, राघवसिंह, हाटकगिरिकटकलडहपादपीठनिकटतटपरिलुठितनिखिलनृपतिकिरीटकोटिविविधमणिगणकिरणनिकरनीराजितचरणराजीव, दिव्यभौमायोध्याधिदैवत, पितृवधकुपितपरशुधरमुनिविहितनृपहननकदनपूर्वकालप्रभवशतगुणप्रतिष्ठापितधार्मिकराजवंश, शुभचरितभरतखर्वितगर्वगन्धर्वयूथगीतविजयगाथाशत, शासितमधुसुतशत्रुघ्नसेवित, कुशलवपरिगृहीतकुलगाथाविशेष, विधिवशपरिणमदमरभणितिकविवररचितनिजचरितनिबन्धननिशमननिर्वृत, सर्वजनसंमानित, पुनरुपस्थापितविमानवरविश्राणनप्रीणितवैश्रवणविश्रावितयशःप्रपञ्च, पञ्चतापन्नमुनिकुमारकसंजीवनामृत, त्रेतायुगप्रवर्तितकार्तयुगवृत्तान्त, अविकलबहुसुवर्णहयमखसहस्रनिर्वहणनिर्वर्तितनिजवर्णाश्रमधर्म, सर्वकर्मसमाराध्य, सनातनधर्म, साकेतजनपदजनिधनिकजंगमतदितरजन्तुजातदिव्यगतिदानदर्शितनित्यनिःसीमवैभव, भवतपनतापितभक्तजनभद्राराम, श्रीरामभद्र, नमस्ते पुनस्ते नमः ॥

चतुर्मुखेश्वरमुखैः पुत्रपौत्रादिशालिने ।
नमः सीतासमेताय रामाय गृहमेधिने ॥
कविकथकसिंहकथितं कठोरसुकुमारगुम्भगम्भीरम् ।
भवभयभेषजमेतत्पठत महावीरवैभवं सुधियः ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु रघुवीरगद्यं संपूर्णम् ॥

---

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥

## ।।परमार्थस्तुतिः।।

श्रीमान्वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ।।

श्रीमद्गृध्रसरस्तीरपारिजातमुपास्महे ।
यत्र तुङ्गैरतुङ्गैश्च प्रणतैर्गृह्यते फलम् ।।१।।

गुरुभिस्त्वदनन्यसर्वभावैर्गुणसिन्धो कृतसंप्लवस्त्वदीये ।
रणपुंगव वन्दिभावमिच्छन्नहमस्म्येकमनुग्रहास्पदं ते ।।२।।

भुवनाश्रयभूषणास्त्रवर्गं मनसि त्वन्मयतां ममातनोतु ।
वपुराहवपुंगव त्वदीयं महिषीणामनिमेषदर्शनीयम् ।।३।।

अभिरक्षितुमग्रतः स्थितं त्वां प्रणवे पार्थरथे च भावयन्तः ।
अहितप्रशमैरयत्नलभ्यैः कथयन्त्याहवपुंगवं गुणज्ञाः ।।४।।

कमला निरपायधर्मपत्नी करुणाद्याः स्वयमृत्विजो गुणास्ते ।
अवनं श्रयतामहीनमाद्यं स च धर्मस्त्वदनन्यसेवनीयः ।।५।।

कृपणाः सुधियः कृपासहायं शरणं त्वां रणपुंगव प्रपन्नाः ।
अपवर्गनयादनन्यभावा वरिवस्यारसमेकमाद्रियन्ते ।।६।।

अवधीर्य चतुर्विधं पुमर्थं भवदर्थे विनियुक्तजीवितः सन् ।
लभते भवतः फलानि जन्तुर्निखिलान्यत्र निदर्शनं जटायुः ।।७।।

शरणागतरक्षणव्रती मां न विहातुं रणपुंगवार्हसि त्वम् ।
विदितं भुवने विभीषणो वा यदि वा रावण इत्युदीरितं ते ।।८।।

भुजगेन्द्रगरुत्मदादिलभ्यैस्त्वदनुज्ञानुभवप्रवाहभेदैः ।
स्वपदे रणपुंगव स्वयं मां परिचर्याविभवैः परिष्क्रियेथाः ।।९।।

विमलाशयवेङ्कटेशजन्मा रमणीया रणपुंगवप्रसादात् ।
अनसूयुभिरादरेण भाव्या परमार्थस्तुतिरन्वहं प्रपन्नैः ॥१०॥

परमार्थस्तुतिः संपूर्णा

---

## ॥ श्रीकृष्णाष्टोत्तरशतनामस्तोत्रम् ॥

श्रीकृष्णः कमलानाथो वासुदेवस्सनातनः ।
वसुदेवात्मजः पुण्यो लीलामानुषविग्रहः ॥१॥

श्रीवत्सकौस्तुभधरो यशोदावत्सलो हरिः ।
चतुर्भुजात्तचक्रासिगदाशङ्खाद्युदायुधः ॥२॥

देवकीनन्दनश्श्रीशो नन्दगोपप्रियात्मजः ।
यमुनावेगसंहारी बलभद्रप्रियानुजः ॥३॥

पूतनाजीवितहरश्शकटासुरभञ्जनः ।
नन्दव्रजजनानन्दी सच्चिदानन्दविग्रहः ॥४॥

नवनीतविलिप्ताङ्गो नवनीतनटोऽनघः ।
नवनीतनवाहारो मुचिकुन्दप्रसादकः ॥५॥

षोडशस्त्रीसहस्रेशस्त्रिभङ्गीमधुराकृतिः ।
शुकवागमृताब्धीन्दुर्गोविन्दो योगिनां पतिः ॥६॥

वत्सवाटचरोऽनन्तो धेनुकासुरभञ्जनः ।
तृणीकृततृणावर्तो यमळार्जुनभञ्जनः ॥७॥

उत्तालतालभेत्ता च तमालश्यामलाकृतिः ।
गोपगोपीश्वरो योगी कोटिसूर्यसमप्रभः ॥८॥

इळापतिः परंज्योतिर्यादवेन्द्रो यदूद्वहः ।
वनमाली पीतवासाः पारिजातापहारकः ॥९॥
गोवर्धनाचलोद्धर्ता गोपालस्सर्वपालकः ।
अजो निरञ्जनः कामजनकः कञ्जलोचनः ॥१०॥
मधुहा मधुरानाथो द्वारकानायको बली ।
बृन्दावनान्तसञ्चारी तुलसीदामभूषणः ॥११॥
स्यमन्तकमणेर्हर्ता नरनारायणात्मकः ।
कुब्जाकृष्णाम्बरधरो मायी परमपूरुषः ॥१२॥
मुष्टिकासुरचाणूर मल्लयुद्धविशारदः ।
संसारवैरी कंसारिर्मुरारिर्नरकान्तकः ॥१३॥
अनादिब्रह्मचारी च कृष्णाऽव्यसनकर्शकः ।
शिशुपालशिरश्छेत्ता दुर्योधनकुलान्तकः ॥१४॥
विदुराक्रूरवरदो विश्वरूपप्रदर्शकः ।
सत्यवाक्सत्यसङ्कल्पस्सत्यभामारतो जयी ॥१५॥
सुभद्रापूर्वजो विष्णुर्भीष्ममुक्तिप्रदायकः ।
जगद्गुरुर्जगन्नाथो वेणुनादविशारदः ॥१६॥
वृषभासुरविध्वंसी बाणासुरकरान्तकः ।
युधिष्ठिरप्रतिष्ठाता बर्हिबर्हावतंसकः ॥१७॥
पार्थसारथिरव्यक्तो गीतामृतमहोदधिः ।
कालीयफणिमाणिक्यरञ्जितश्रीपदाम्बुजः ॥१८॥

दामोदरो यज्ञभोक्तादानवेन्द्रविनाशकः ।
नारायणः परं ब्रह्म पन्नगाशनवाहनः ॥१९॥
जलक्रीडासमासक्त गोपीवस्त्रापहारकः ।
पुण्यश्लोकस्तीर्थपादो वेदवेद्यो दयानिधिः ॥२०॥
सर्वतीर्थात्मकस्सर्वग्रहरूपी परात्परः ।
एवं श्रीकृष्णदेवस्य नाम्नामष्टोत्तरं शतम् ॥२१॥
कृष्णनामामृतं नाम परमानन्दकारकम् ।
अत्युपद्रवदोषघ्नं परमायुष्यवर्धनम् ॥२२॥

॥ श्रीकृष्णाष्टोत्तरशतनामस्तोत्रं संपूर्णम् ॥

---

## ॥ श्रीकृष्णसहस्रनामस्तोत्रम् ॥

श्रीमद्रुक्मिमहीपालवंशरक्षामणिः स्थिरः ।
राजा हरिहरः क्षोणीं रक्षत्यम्बुधिमेखलाम् ॥१॥
स राजा सर्वतन्त्रज्ञः समभ्यर्च्य वरप्रदम् ।
देवं श्रियः पतिं स्तुत्या समस्तौद्वेदवेदितम् ॥२॥
तस्यहृष्टाशयः स्तुत्या विष्णुर्गोपाङ्गनावृतः ।
स पिञ्छश्यामलं रूपं पिञ्छोत्तंसमदर्शयत् ॥३॥
स पुनः स्वात्मविन्यस्तचित्तं हरिहरं नृपम् ।
अभिषिच्य कृपावर्षैरभाषत कृताञ्जलिम् ॥४॥

आत्मापहाररसिकेन मयैव दत्तमन्यैरधार्यमधुना विबुधैकनाथ।
स्वीकृत्य धारयितुमर्हसि मां त्वदीयं चोरोपनीतनिजनूपुरवत्स्वपादे ॥
अज्ञानवारिधिमपायधुरंधरं मामाज्ञाविभञ्जनमकिंचनसार्वभौमम् ।
विन्दन्भवान्विबुधनाथ समस्तवेदी किं नाम पात्रमपरं मनुते कृपायाः॥
प्रह्लादगोकुलगजेन्द्रपरिक्षिदाद्यास्त्रातास्त्वया ननु विपत्तिषु तादृशीषु ।
सर्वं तदेकमपरं मम रक्षणं ते संतोल्यतां त्रिदशनायक किं गरीयः॥
वात्याशतैर्विषयरागतया विवृत्तैर्व्याघूर्णमानमनसं विबुधाधिराज ।
नित्योपतप्त इति मां निजकर्मघर्मैर्निर्वेशय स्वपदपद्ममधुप्रवाहम् ॥
जय विबुधपते त्वं दर्शिताभीष्टदानः
सह सरसिजवासामेदिनीभ्यां वशाभ्याम् ।
नळवनमिव मृद्नन्पापराशिं नतानां
गरुडसरिदनूपे गन्धहस्तीव दीव्यन् ॥५२॥
निरवधिगुणजातं नित्यनिर्दोषमाद्यं
नरकमथनदक्षं नाकिनामेकनाथम् ।
विनताविषयसत्यं वेङ्कटेशः कविस्त्वां
स्तुतिपदमधिगच्छञ्छोभते सत्यवादी ॥५३॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु देवनायकपञ्चाशत् संपूर्णा ॥

---

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥

## ॥ श्रीवरदराजस्तवः ॥

श्रीवत्सचिह्नमिश्रेभ्यो नम उक्तिमधीमहे
यदुक्तयस्त्रयीकण्ठे यान्ति मङ्गलसूत्रताम् ॥

स्वस्ति हस्तिगिरिमस्तशेखरस्सन्तनोतु मयि संततं हरिः ।
निस्समाभ्यधिकमभ्यधत्त यं देवमौपनिषदी सरस्वती ॥१॥

श्रीनिधिं निधिमपारमर्थिनामर्थितार्थपरिदानदीक्षितम् ।
सर्वभूतसुहृदं दयानिधिं देवराजमधिराजमाश्रये ॥२॥

नित्यमिन्द्रियपथातिगं महो योगिनामपि सुदूरगं धियः ।
अप्यनुश्रवशिरस्सु दुर्ग्रहं प्रादुरस्ति करिशैलमस्तके ॥३॥

वल्लिका श्रुतिमतल्लिकामयी येन पल्लवितविश्वशाखया ।
स्वाश्रिया करिगिरेरनुक्रियां वष्टि मृष्टवरदं तमाश्रये ॥४॥

यं परोक्षमुपदेशतस्त्रयी नेति नेति परपर्युदासतः ।
वक्ति यस्तमपरोक्षमीक्षयत्येष तं करिगिरिं समाश्रये ॥५॥

एष ईश इति निर्णयं त्रयी भागधेयरहितेषु नो दिशेत् ।
हस्तिधामनि न निर्णयेत को देवराजमयमीश्वरस्त्विति ॥६॥

है कुदृष्ट्यभिनिविष्टचेतसां निर्विशेषसविशेषताश्रयम् ।
संशयं करिगिरिर्नुदत्यसौ तुङ्गमङ्गळगुणास्पदे हरौ ॥७॥

न्यायतर्कमुनिमुख्यभाषितैश्शोधितस्सह कथंचन त्रयी ।
जोषयेद्धरिमनंहसो जनान् हस्तिधाम सकलं जनं स्वयम् ॥८॥

अद्भुतं महदसीमभूमकं किंचिदस्ति किल वस्तु निस्तुलम् ।
इत्यघोपि यदितं तदग्रतस्तथ्यमेव करिधाम्नि दृश्यते ॥९॥

सदधेत किलयत्प्रमांतर स्तत्प्रमाणमिति ये हि मेनिरे ।
तन्मते हि वत मानतां गता हस्तिनाद्य परवस्तुनि त्रयी ॥१०॥

गुणायत्तं लोके गुणिषु हि मतं मंगळपदं
विपर्यस्तं हस्तिक्षितिधरपते तत्त्वयि पुनः ।
गुणास्सत्वज्ञान प्रभृतय उत त्वद्गततया
शुभीभूयं याता इति हि निरणैष्म श्रुतिवशात् ॥११॥

निराबाधं नित्यं निरवधि निरंहो निरुपमं
सदा शान्तं शुद्धं प्रतिभटमवद्यस्य सततम् ।
परब्रह्माम्नातं श्रुतिशिरसि यत्तद्वरद ते
परं रूपं साक्षात्तदिदमपदं वाङ्मनसयोः ॥१२॥

प्रशान्तानंतात्मानुभवज महानंदमहिम
प्रसक्तस्थैमित्यानुकृतवितरंगार्णवदशम् ।
परं यत्ते रूपं स्वसदृशदरिद्रं वरद तत्
त्रयी विस्पृक्षंती परनिरसने श्राम्यति परम् ॥१३॥

न वक्तुं न श्रोतुं न मनितुमथोपासिषियितुं
न च द्रष्टुं प्रेम्णा तदनु न च भोक्तुं हि सुगतम् ।
परं यद्वस्तूक्तं ननु वरद साक्षात्तदसि भो
कथं विश्वस्मै त्वं करिगिरिपुरस्तिष्ठस इह ॥१४॥

प्रकृष्टं विज्ञानं बलमतुलमैश्वर्यमखिलं
विमर्यादं वीर्यं वरद परमाशक्तिरपि च ।

परं तेजश्चेति प्रवरगुणषट्कं प्रथमजं
गुणानां निस्सीम्नां गणनविगुणानांप्रसवभूः ॥१५

गुणैष्षड्भिस्त्वैतैः प्रथमतरमूर्तिस्तव बभौ
ततस्तिस्नस्तेषां त्रियुगयुगळैर्हि त्रिभिरभुः ।
व्यवस्था या चैषां ननु वरद साविष्कृतिवशा-
द्भवान् सर्वत्रैव त्वगणितमहामङ्गळ गुणः ॥१६॥

इयं वैयूही वै स्थितिरथ किलेच्छाविहृतये
विभूतीनां मध्ये सुरनरतिरश्चामवतरन् ।
सजातीयस्तेषामिति तु विभवाख्यामपि भजन्
करीश त्वं पूर्णो वरगुणगणैस्तां स्थगयसि ॥१७॥

परो वा व्यूहो वा विभव उत वा चावतरणो
भवान्वांतर्यामी वरवरद यो यो भवसि वै ।
स स त्वं सन्नैशान्वरगुणगणानबिभ्रदखिलान्
भजद्भ्यो भास्यव सततमितरेभ्य स्त्वितरधा ॥१८॥

दयाक्षांत्यौदार्य प्रादिम समतासौहृदधृति
प्रसाद प्रेमाज्ञाऽऽश्रितसुलभताद्या वरगुणाः ।
तथा सौंदर्याद्यास्तव वरदराजोत्तमगुणा
निसीमानोऽसंख्याः प्रणतजनभोगं प्रसुवते ॥१९॥

अनन्याधीनत्वं तव किल जगु वैदिकगिरः
पराधीनं त्वां तु प्रणतपरतंत्रं मनुमहे ।

उपालंभोऽयं भो श्रयति बत सार्वज्ञमपि ते
यतो दोषं भक्तेष्विह वरद नैवाकलयसि ॥२०॥

पाणिपादवदनेक्षणशब्दैरम्बुजान्य पदिशन्वरद त्वम् ।
बाहुभिस्त्वति विशालतमालानांजनं करिगिरेरसिश्रृंगम ॥२१॥

त्वामुदारभुजमुन्नस मायतकर्णपाशपरिकर्मसदंसम् ।
आयताक्षमभिजात कपोलं पारणीयति वरप्रद दृङ्मे ॥२२॥

नीलमेघनिभ मञ्जनपुञ्जश्यामकुंतलमनंतशयं त्वाम् ।
अब्जपाणिपदमम्बुजनेत्रं नेत्रसात्कुरु करीश सदा त्वम् ॥२३॥

त्वक्च दृक्च निपिपासति जिह्वा विह्वला श्रवणवत्परवृत्तौ ।
नासिका त्वयि करीश तथेति प्राप्नुयां कथमिमां स्विदवस्थाम् ॥२४॥

आधिराज्यमधिकं भुवनानामीश ते पिशुनयन्किल मौलिः ।
चूळिकामणिसहस्रमरीचेर्हस्तिभूषण भवत्युदयाद्रिः ॥२५॥

उद्धरत्युपरि भक्तजनानित्यूर्ध्वताश्रयणसूचितशक्तिम् ।
ऊर्ध्वपुण्ड्रतिलकं बहुमानात्किं भिभर्षि वरद स्वललाटे ॥२६॥

कर्णिका तव करीश किमेषा कर्णभूषणमुतांसविभूषा ।
अंसलब्यलक भूषणमाहो मानसस्य मम वा परिकर्म ॥२७॥

पारिजात विटपा नभितो या पुष्पसम्पदुदियात्करिनाथ ।
तां विडम्बयति तावकबाहुष्वातता तु कटकांगदलक्ष्मीः ॥२८॥

मथ्यमानचलफेनिलसिन्धुप्रोदितक्षणदशां गमितौ ते ।
वक्षसि स्फुरितमौक्तिकहारे कौस्तुभश्च कमला च करीश ॥२९॥

अञ्जनक्षितिभृतो यदि नामोपत्यका वरद हेममयी स्यात् ।
तादृशी तव विभाति तु लक्ष्मी शांवरी बत विडम्बितविद्युत् ॥३०॥

परभागमिया द्रवे स्तमिस्रा वरदाद्य त्वयि तन्निशामयामः ।
गमिता तव वक्त्र चित्रभानोः परभागं ननु कौन्तली तमिस्रा ॥

उभयोरपि पक्षयोस्तिथिर्या विषमीभावनिरासदाऽष्टमीति ।
उपमानज सम्पदे हि सेन्दोर्वरदाभू द्भवतो ललाटलक्ष्म्याः ॥

अळकाळिचिकीर्षया किलात्ता सुपरीचिक्षिषया ललाटपट्टे ।
सुमषीनिकषीकृता भ्रुवौ ते वरद स्यादकृतत्वतस्तु नैवम् ॥३३॥

श्रवसश्च दृशश्च शब्दरूपग्रहणे तेन हि जीवद्व्यवस्था ।
उभयोरखिलेक्षणक्षमत्वाद्वरदातश्श्रवणाश्रयौ दृशौ ते ॥३४॥

करुणारसवाहिवीक्षणोर्मे वरद प्रेममयप्रवाहभाजः ।
ततत्तीरवनावली भ्रुवौ दृक्चलसिंधोस्तव नासिकैव सेतुः ॥३५॥

विभवं विवृणोति विस्तृणीते रुचमाविष्कुरुते कृपामपाराम् ।
अभिवर्षति हर्षमार्द्रभावं तनुते ते वरदैष दृष्टिपातः ॥३६॥

अरुणाधरपल्लवे लसन्ती वरदासौ द्विजचन्द्रचन्द्रिका ते ।
अधिविद्रुममस्तनिस्तुलाळी रुचमाविष्कुरुते हि पुष्कराक्ष ॥३७॥

स्मितनिर्झरिका विनिष्पतंती तव वक्षस्स्थलभूतले विकीर्णा ।
वरद प्रविभर्ति हारलक्ष्मीमपि मुक्तावळिका नदीव तज्ञा ॥३८॥

परिमंडितरासमंडलाभिर्वरदाघ्रातमभीष्टगोपिकाभिः ।
अनुवृत्ततदातनप्रहर्षा दिव फुल्लं हि कपोलयोर्युगं ते ॥३९॥

मुखमुन्नसमायताक्षमुद्य त्स्मितदन्तं रुचिराधरं नतभ्रु ।
लसदंसविलम्बिकर्णपाशं मयि ते निश्चलमस्तु हस्तिनाथ ॥४०॥
पद्मायाः प्रणयरसा त्समासजंत्यास्स्वं बाहुं सुबहुमतोभुजेन तेन ।
कां नामान्वभवदहो दशां तदात्वे कंठस्ते करिगिरिनाथ कम्बुकान्तः ॥
सायामा धृतपरिणद्धयोऽब्धयो वा तादृश्यस्स्फुटमथवा दिशश्चतस्रः ।
चत्वारो वरद वरप्रदास्त्वदीया भासन्ते भुजपरिघास्तमालनीलाः ॥
आश्लेषे वरद भुजास्तवेन्दिराया गोपीनामभिमतरासबन्धने वा ।
बन्धेवा मुदमधिकां यशोदयाहो संप्राप्तास्तव नवनीतमोषदोषात् ॥
सालीया इव विटपा स्सपल्लवाग्राः कल्लोला इव जलधे स्सविद्रुमाग्राः ।
भोगींद्राइव च फणामणीद्धवक्त्रा भासंते वरद भुजास्तवारुणाग्राः ॥
अंभोधेस्स्वयमभि मन्थनं चकर्थ क्षोणीध्रं पुन रबिभश्च सप्तरात्रम् ।
सप्तानां व्यवलयसि स्म कण्ठ मुक्ष्णामम्लाना वरद तदापि पाणयस्ते ॥
रिंखातो व्रज सदनाङ्गणेषु किं ते गोयष्टिग्रहणवशान्नु गोपगोष्ठ्याम् ।
आलंबाद्धयनय सूत्र तोत्रयो र्वा पाणीनां वरद तवारुणत्वमासीत् ॥
सर्वज्ञा स्समुचितशक्तयस्सदैव त्वत्सेवानियमजुषस्त्वदेकभोगाः ।
हेतीनामधिपतयस्सदा किमेतान् शोभार्थं वरद बिभर्षि हर्षतो वा ॥
किं धातुर्गगनविधानमातृकाभूद्वक्षस्ते वरद वरेण्य यत्र नाम ।
पद्मायां मुखमथ कौस्तुभश्च जातौ चन्द्रार्कावुडुनिकरायते तु हारः ॥
अण्डानां त्वदुदरमामनन्ति सन्तस्स्थानं तद्वरद कथन्नु कार्श्यमस्य ।
माहात्म्यं स्वत इह येषु मानमेषामृद्धिस्स्यान्महिमकरी नहीतरेषाम् ॥

सौन्दर्यामृतरसवाहवेगजस्स्यादावर्तस्तव किल पद्मनाभ नाभिः ।
तत्पद्मं वरद विभाति कान्तिमय्या लक्ष्म्या स्ते सकलवपुर्जुषोनु सद्म ॥
या दामोदर इति नामदा तवासीत्सा दामा किल किणकारिणी बभूव ।
तन्नूनं वरद वलित्रयच्छलेन त्वन्मध्य प्रथम विभूषणी बभूव ॥

यादृग्बीजाध्युषितभुवि यद्वस्तु हस्तीश जातं
तत्तादृक्षं फलति हि फलं त्वय्यपीक्षामहे तत् ।
यस्मादण्डाध्युषित उदरे तावके जायमानं
पद्मं पद्मानन किल फलत्यण्डषण्डानखण्डान् ॥५२॥

अज्ञे यज्ञेश्वर किल जने काप्यदर्शि विमर्शे
विश्वाधीशः कतम इति तं निर्णयं वर्णयामः ।
व्यावक्रोशी नृपु समुदिता यानुपाश्रित्य तेऽपि
ब्रह्माद्यास्ते वरद जनितास्तुन्दकन्दारविन्दे ॥५३॥

मुष्णन् कृष्ण प्रियनिजजनैर्जग्यहव्यङ्गवीनं
दाम्ना भूम्ना वरद हि यया त्वं यशोदाकराभ्याम् ।
बद्धो बन्धक्षपणकारिणीं तां किलाद्यापि मातुः
प्रेम्णा गात्राभरणमुदराबन्धनाख्यं बिभर्षि ॥५४॥

सौन्दर्याख्या सरिदुरसिविस्तीर्य मध्यावरुद्धा
स्थानाल्पत्वाद्विषमगतिजाऽऽवर्तगर्ताभनाभिः ।
प्राप्य प्राप्तप्रथिमजघनं विस्मृता हस्तिनाथ
स्रोतोभेदं भजति भवतः पाददेशापदेशात् ॥५५॥

रम्भास्तम्भाः करिवरकराः कारभास्सारभाजो
वेषाश्लेषा अपि मरतकस्तम्भमुख्यास्तुलाख्याः ।
साम्यं सम्यग्वरद न दधुस्सर्वमुर्वोस्त्वदूर्वो-
र्न ह्यैश्वर्यं दधति न तथा यौवनारम्भजृंभाः ॥५६॥

या ते गात्रे वरद जनिता कान्तिमय्यापगाऽभू-
त्तस्यास्स्रोतो युगळमिह यद्याति पादप्रवादम् ।
तज्जातोर्ध्वभ्रमियुगमिवोद्भानुनी जानुनी ते
स्यादुक्ष्णोर्वा ककुदयुगळं यौवनैश्वर्यनाम्नोः ॥५७॥

प्रेम्णाघ्रातं करिगिरिशिरोऽधोमुखीभावभाजो-
रङ्घ्रिद्वन्द्वाह्वयकमलयोर्दण्डकाण्डायमाने ।
अद्रिस्पर्शोद्भवसुखत उत्कण्टके रोमहर्षा-
द्दृष्टुर्दृष्टिर्वरद किमलं लङ्घितुं जङ्घिके ते ॥५८॥

भक्तानां यद्वपुषि दहरं पण्डितं पुण्डरीकं
यच्चाम्लानं वरद सतताध्यासनादासनाब्जम् ।
आम्नायानां यदपि च शिरो यच्च मूर्धा शठारे-
र्हस्त्यद्रेर्वा किमपि सुखदं तेषु पादाब्जयोस्ते ॥५९॥

पद्यास्वद्याङ्गुळिषु वरद प्रान्ततः क्षांतिसिन्धो-
र्वीचीवीधीविभवमुभयीष्वम्भसां लम्भितासु ।
विन्दन्निन्दुः प्रतिफलनजां सम्पदं किम्पदं ते
छायाछद्मा नखवितितितां लम्भितश्शुम्भितस्सन् ॥६०॥

शंभोरंभोरुहमुखसखा सन्सहाङ्कश्शशाङ्कः
कुर्वन् सेवां वरद विकलो वृत्तिहीनस्सुवक्रः ।
त्वत्पादाब्जे प्रियमख नखच्छद्मनाऽऽश्रित्य नित्यं
सद्वृत्तोभूत्स तु दशगुणः पुष्कलो निष्कलङ्कः ॥६१॥
त्वत्पादाब्जे प्रजाता सुरसरिदभवत्प्राक्चतुर्धा ततस्ता-
स्त्वेकां धत्ते ध्रुवस्सा त्रिभुवनमपुनात्त्रीन्पथो भावयन्ती ।
तत्रैका खं व्रजन्ती शिवयति तु शिवं सा पुनस्सप्तधाभू-
त्तास्त्वेकां गां पुनाना वरद सगरजस्वर्गसर्गं चकार ॥६२॥
परिजनपरिबर्हा भूषणान्युधानि
प्रवरगुणगणाश्च ज्ञानशक्त्यादयस्ते ।
परमपदमथाण्डान्यात्मदेहस्तथात्मा
वरद सकलमेतत्संश्रितार्थं चकर्थम् ॥६३॥
अनाप्तं ह्याप्तव्यं न तव किल किञ्चिद्वरद ते
जगज्जन्मस्थेषु प्रळयविधयोर्धीविलसितम् ।
तथापि क्षोदीयस्सुरनरकुलेष्वाश्रितजनान्
समाश्लेष्टुं पेष्टुं तदसुखकृतां चावतरासि ॥६४॥
विवेकधियमेकतो ह्यभिनिवेशलेशो हरे-
न्महत्स्वभिनिवेशनं किमुत तन्महिम्नस्तव ।
अहो विसदृशे जगत्यवततर्थ पार्थादिकं
निजं जनमुदञ्चयन्वरद तं समाश्लेषकः ॥६५॥

संश्लेषे भजतां त्वरापरवशः कालेन संशोध्य ता-
नानीय स्वपदे स्वसङ्गमकृतं सोढुं विलंबं बत ।
अक्षाम्यन् क्षमिणां वरो वरद सन्नत्रावतीर्णो भवेः
किन्नाम त्वमसंश्रितेषु वितरन्वेषं वृणीषे तु तान्　　॥६६॥

वरद यदि नमुष्यवातरिष्य श्रुतिविहितास्त्वदुपासनार्चनाद्याः ।
करणपथविदूरगे सति त्वय्य विषयतानिकृताः किलाभविष्यन् ॥

यदपराधसहस्रमजस्रजं त्वयि शरण्य हिरण्य उपावहत् ।
वरद तेन चिरं त्वमविक्रियो विकृतिमर्भकनिर्भजनादगाः　　॥६८॥

त्वामामनन्ति कवयः करुणामृताब्धे
ज्ञानक्रियाभजनलभ्यमलभ्यमन्यैः ।
एतेषु केन वरदोत्तरकोसलस्थाः
पूर्वं सदूर्वं मभजन्त हि जन्तवस्त्वाम्　　॥६९॥

भजत्सु वात्सल्यवशात्समुत्सकः प्रकाममत्रावतरेर्वरप्रद ।
भवेश्च तेषां सुलभोऽथ किंत्विदं यदङ्गदाम्ना नियतः पुराऽरुदः ॥

नरसिंह्यतनुरगौणी समसमयसमुद्भवश्च भक्तगिरः ।
स्तंभे च संभवस्ते पिशुनयति परेशतां वरद　　॥७१॥

तापत्रयीमयदवानलदह्यमानं मुह्यन्तमन्तमवयन्तमनन्त नैव ।
स्थातुं प्रयातुमुपयातुमनीशमीश हस्तीश दृष्ट्यमृतवृष्टिभिराभजेथाः॥

नानाविरुद्धविदिशासु दिशासु चाहो
वन्ध्यैर्मनोरथशतैर्युगपद्विकृष्टः ।

त्वत्पादयोरनुदितस्पृह एष सोऽहं
नस्वस्ति हस्तिगिरिनाथ निशामयामि ॥७३॥

हे निर्भयोऽस्म्यविनयोऽस्मि यतस्त्वदंघ्रौ
लिप्सामलंधवति चेतासि दुर्विनीते ।
दुष्कर्मवर्मपरिकर्मितएष सोऽह-
मग्रे वरप्रद तव प्रलपामि किंचित् ॥७४॥

स व्याधिराधिरवितुष्टिरनिष्टयोग-
स्स्वाभीष्टभञ्जनममर्षकरो निकर्षः ।
कृन्तन्ति सन्ततमिमानि मनो मदीयं
हस्तीश न त्वदभिलाषनिधि प्रहाणिः ॥७५॥

विद्वेषमानमदरागविलोभमोहा द्याजानभूमिरहमत्र भवे निमज्जन् ।
निर्द्वंद्वनित्यनिरवद्यमहागुणं त्वां हस्तीश कश्श्रयितुमीक्षितुमीप्सितुं वा॥

पुत्रादयः कथममी मयि संस्थिते स्यु-
रित्यप्रतिक्रियनिरर्थकचिंतनेन ।
दूये म तु स्वयमहं भवितास्मि कीदृ-
गित्यस्ति हस्तिगिरिनाथ विमर्शलेशः ॥७७॥

शंपाचलं बहुळदुःखमनर्थहेतुमल्पीयइत्यपि विमृष्टिषु दृष्टदोषम् ।
दुर्वासनाद्दृढिमतस्सुखमिन्द्रियोत्थं हातुं न मे मतिरलं वरदाधिराज॥

बुध्वा च नो च विहिताकरणैर्निषिद्धसंसेवनैस्त्वदपचारशतैरसह्यैः ।
भक्तारासामपि शतैर्भवताप्यगण्यैर्हस्तीश वाक्तनुमनोजनितैर्हतोऽस्मि॥

त्वद्दास्यमस्य हि मम स्वरसप्रसक्तं
तद्घोरयन्नयमहं किल चस्खलं प्राक् ।
त्वं मामकीन इति मामभि मन्यसे स्म
हस्तीश संशमय नस्तमिमं विवादम् ॥८०॥

भोगा इमे विधिशिवादिपदं च किंच
स्वात्मानुभूतिरिति या किल मुक्तिरुक्ता ।
सर्वं तदूषजलजोषमहं जुषेय
हस्त्यद्रिनाथ तव दास्यमहारसज्ञः ॥८१॥

विषयविषधरव्रजव्याकुले जननमरणचक्रनक्रास्पदे ।
अगतिरशरणो भवाब्धौ लुठन्वरद शरणमित्यहं त्वां वृणे ॥८२॥

अकृतसुकृतकस्सुदुष्कृत्तरश्शुभगुणलवलेशदेशातिगः ।
अशुभगुणपरस्सहस्रावृतो वरद उरुदय गतिं त्वां वृणे ॥८३॥

शरणवरणवागियं योदिता न भवति बत सापि धीपूर्विका ।
इति यदि दयनीयता मय्यहो वरद तव भवेत्ततः प्राणिमि ॥८४॥

निरवधिषु कृतेषु चागस्स्वहो मतिरनुशयिनी यदिस्यात्ततः ।
वरद हि दयसे नसंशेमहे निरनुशयधियो हता है वयम् ॥८५॥

शरणवरणवागियं याद्य मे वरद तदधिकं न किंचिन्मम ।
सुलभमभिमतार्थदं साधनं तदयमवसरो दयायास्तव ॥८६।

विषयविषयिणी स्पृहा भूयसी तव तु चरणयोर्न साऽल्पाऽपि मे ।
वरद ननु भरस्तवैव त्वहं यदुत तव पदस्पृहाजन्म मे ॥८७।

इयमिह मतिरस्मदुज्जीवनी वरद तव खलु प्रसादादृते ।
शरणमिति वचोऽपि मे नोदियांस्त्वमपि मयि ततः प्रसादोन्मुखः ॥

वरद यदिह वस्तु वाञ्छाम्यहं तव चरणलाभाविरोधस्ततः ।
यदि न भवति तच्च देहि प्रभो झडिति वितर पादमेवान्यथा॥८९॥

तदपि किमपि हन्त दुर्वासनाशतविवशतया यदभ्यर्थये ।
तदतुलदय सार्व सर्वप्रद प्रवितर वरद क्षमाम्भोनिधे ॥९०॥

प्रियमितरदथापि वा यद्यथा वितरसि वरद प्रभो त्वं हि मे ।
तदनुभवनमेव युक्तं हि मे त्वयि निहितभरोऽस्मि सोऽहं यतः ॥

यथासि यावानपि योऽसि यद्गुणः करीश यादृग्विभवो यदिङ्गितः ।
तथाविधं त्वामपि भक्तिदुर्ग्रहं प्रपत्तिनाचैव निरीक्षितुं वृणे ॥९२॥

अये दयालो वरद क्षमानिधे विशेषतो विश्वजनीन विश्वद ।
हितज्ञ सर्वज्ञ समग्रशक्तिक प्रसह्य मां प्रापय दास्यमेव ते ॥९३॥

स्वकैर्गुणैस्स्वैश्चरितैस्स्ववेदनाद्भजन्ति ये त्वां त्वयि भक्तितोऽथवा ।
करीश तेषामपि तावकी दया तथा त्वकृतस्यैव तु मे बलं मतम् ॥

यदि त्वभक्तोऽप्यगुणोऽपि निष्क्रियो निरुद्यमो निष्कृतदुष्कृतो न च ।
लभेय पादौ वरद स्फुटास्ततः क्षमादयाद्यास्तव मङ्गला गुणाः ॥

विलोकनैर्विभ्रमणैरपि भ्रुवोः स्मितामृतैरिङ्गितमङ्गलैरपि ।
प्रचोदितस्ते वरद प्रहृष्टधीः कदा विधास्ये वरिवस्यनं तव ?॥९६॥

विविश्य विश्वेन्द्रियतर्षकर्षणी मनस्थले नित्यनिखातनिश्चलाः ।
सुधासखीर्हस्तिपते सुशीतला गिरश्श्रवस्याश्श्रृणुयाम तावकीः ॥

अशेषदेशाखिलकालयोगिनीष्वहं त्ववस्थास्वखिलास्वनन्यधीः ।
अशेषदास्यैकरतिस्तवाचरन् करीश वर्तेय सदा त्वदन्तिके ॥९८॥

इमं जनं हन्त कदाभिषेक्ष्यते त्वदक्षिनद्योर्वरद श्रमापहा ।
अकृत्रिमप्रेमरसप्रवाहजा विसृत्वरी वीक्षणवीचिसन्ततिः ॥९९॥

सदातनत्वेऽपि तदातनत्ववन्नवीभवत्प्रेमरसप्रवाहया ।
निषेवितं त्वां सततोत्कया श्रिया करीश पश्येम परश्शतं समाः ॥

समाहितैस्साधु सनन्दनादिभिस्सुदुर्लभं भक्तजनैरदुर्लभम् ।
अचिन्त्यमत्यद्भुतमप्रतर्कणं वरप्रद त्वत्पदमाप्नुयां कथम् ? ॥१०१॥

रामानुजांघ्रिशरणोऽस्मि कुलप्रदीप-
स्त्वासीत्सयामुनमुनेस्सचनाथवंश्यः ।
वंश्यः पराङ्कुशमुनेस्स च सोऽपि देव्याः
दासस्तवेति वरदास्मि तवेक्षणीयः ॥१०२॥

इति हरितकुलतिलक श्रीवत्साङ्कमिश्रकृतिषु श्रीवरदराजस्तवः समाप्तः ॥

---

## ॥ वरदराजपञ्चाशत् ॥

श्रीमान्वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥

द्विरदशिखरिसीम्ना सद्मवान्पद्मयोने-
स्तुरगसवनवेद्यां श्यामळो हव्यवाहः ।
कलशजलधिकन्यावल्लरीकल्पशाखी
कलयतु कुशलं नः कोऽपि कारुण्यराशिः ॥१॥

यस्यानुभावमधिगन्तुमशक्नुवन्तो
मुह्यन्त्यभङ्गुरधियो मुनिसार्वभौमाः ।
तस्यैव ते स्तुतिषु साहसमश्नुवानः
क्षन्तव्य एष भवता करिशैलनाथ ॥२॥

जानन्ननादिविहितानपराधवर्गान्
स्वामिन्भयात्किमपि वक्तुमहं न शक्तः ।
अव्याजवत्सल तथापि निरङ्कुशं मां
वात्सल्यमेव भवतो मुखरीकरोति ॥३॥

किं व्याहरामि वरद स्तुतये कथं वा खद्योतवत्प्रलघुसंकुचितप्रकाशः?।
तन्मे समर्पय मतिं च सरस्वतीं च त्वामञ्जसा स्तुतिपदैर्यदहं धिनोमि॥

मच्छक्तिमात्रगणने किमिहास्ति शक्य
शक्येन वा तव करीश किमस्ति साध्यम् ।
यद्यस्ति साध्य मया तदपि त्वया वा
किं वा भवेद्भवति किंचिदनीहमाने? ॥५॥

स्तोत्रं मया विरचितं त्वदधीनवाचा
त्वत्प्रीतये वरद यत्तदिदं न चित्रम् ।
आवर्जयन्ति हृदयं खलु शिक्षकाणां
मञ्जूनि पञ्जरशकुन्तविजल्पितानि ॥६॥

यं चक्षुषामविषयं हयमेधयज्वा
द्राघीयसा सुचरितेन ददर्श वेधाः ।

तं त्वां करीश करुणापरिणामतस्ते
भूतानि हन्त निखिलानि निशामयन्ति ॥७॥

तत्तत्पदैरुपहितेऽपि तुरङ्गमेधे शक्रादयो वरद पूर्वमलब्धभागाः ।
अध्यक्षिते मखपतौ त्वयि चक्षुषैव हैरण्यगर्भहविषां रसमन्वभूवन् ॥

सर्गस्थितिप्रळयविभ्रमनाटिकायां शैलूषवद्विविधवेषपरिग्रहं त्वाम् ।
संभावयन्ति हृदयेन करीश धन्याः संसारवारिनिधिसंतरणैकपोतम् ॥

प्राप्तोदयेषु वरद त्वदनुप्रवेशात्पद्मासनादिषु शिवादिषु कञ्चुकेषु ।
तन्मात्रदर्शनविलोभितशेमुषीकास्तादात्म्यमूढमतयो निपतन्त्यधीराः ॥

मध्ये विरिञ्चिशिवयोर्विहितावतारः
ख्यातोऽसि तत्समतया तदिदं न चित्रम् ।
मायावशेन मकरादिशरीरिणं त्वां
तानेव पश्यति करीश यदेष लोकः ॥११॥

ब्रह्मेति शंकर इतीन्द्र इति स्वराडि-
त्यात्मेति सर्वमिति सर्वचराचरात्मन् ।
हस्तीश सर्ववचसामवसानसीमां
त्वां सर्वकारणमुशन्त्यनपायवाचः ॥१२॥

आशाधिपेषु गिरिशेषु चतुर्मुखेष्वप्यव्याहता विधिनिषेधमयी तवाज्ञा ।
हस्तीश नित्यमनुपालनलङ्घनाभ्यां पुंसां शुभाशुभमयानि फलानि सूते॥

त्रातापदि स्थितिपदं भरणं प्ररोह-
च्छाया करीश सरसानि फलानि च त्वम् ।

शाखागतत्रिदशबृन्दशकुन्तकानां
किं नाम नासि महतां निगमद्रुमाणाम् ?                    ॥१४॥

सामान्यबुद्धिजनकाश्च सदादिशब्दा-
स्तत्त्वान्तरभ्रमकृतश्च शिवादिवाचः ।
नारायणे त्वयि करीश वहन्त्यनन्य-
मन्वर्थवृत्तिपरिकल्पितमैककण्ठ्यम्                    ॥१५॥

संचिन्तयन्त्यखिलहेयविपक्षभूतं शान्तोदितं शमवता हृदयेन धन्याः ।
नित्यं परं वरद सर्वगतं सुसूक्ष्मं निष्पन्दनन्दथुमयं भवतः स्वरूपम् ॥

विश्वातिशायिसुखरूप यदात्मकस्त्वं
व्यक्तिं करीश कथयन्ति तदात्मिकां ते ।
येनाधिरोहति मतिस्त्वदुपासकानां
सा किं त्वमेव तव वेति वितर्कडोलाम्                    ॥१७॥

मोहान्धकारविनिवर्तनजागरूके दोषा दिवापि निरवग्रहमेधमाने ।
त्वत्तेजसि द्विरदशैलपते विमृष्टे श्लाघ्येत संतमसपर्व सहस्रभानोः ॥

रूढस्य चिन्मयतया हृदये करीश
स्तम्बानुकारिपरिणामविशेषभाजः ।
स्थानेषु जाग्रति जघुर्ष्वपि सत्त्ववन्तः
शाखाविभागचतुरे तव चातुरात्म्ये                    ॥१९॥

नागाचलेश निखिलोपनिषन्मनीषा-
मञ्जूषिकामरकतं परिचिन्वतां त्वाम् ।

तन्वी हृदि स्फुरति कापि शिखा मुनीनां
सौदामनीव निभृता नवमेघगर्भा ॥२०॥

औदन्वते महति सद्मनि भासमाने
श्लाघ्ये च दिव्यसदने तमसः परस्मिन् ।
अन्तःकलेबरमिदं सुषिरं सुसूक्ष्मं
जातं करीश कथमादरणास्पदं ते ? ॥२१॥

बालाकृतेर्वटपलाशमितस्य यस्य ब्रह्माण्डमण्डलमभूदुदरैकदेशे ।
तस्यैव तद्वरद हन्त कथं प्रभूतं वाराहमास्थितवतो वपुरद्भुतं ते ? ॥२२॥

भक्तस्य दानवशिशोः परिपालनाय भद्रां नृसिंहकुहनामधिजग्मुषस्ते ।
स्तम्भैकवर्जमधुनापि करीश नूनं त्रैलोक्यमेतदखिलं नरसिंहगर्भम् ॥

क्रामन्जगत्कपटवामनतामुपेत त्रेधा करीश स भवान्निदधे पदानि ।
अद्यापि जन्तव इमे विमलेन यस्य पादोदकेन विधृतेन शिवा भवन्ति ।

येनाचलप्रकृतिना रिपुसंक्षयार्थं वारां निधिं वरद पूर्वमलङ्घयस्त्वम् ।
तं वीक्ष्य सेतुमधुनापि शरीरवन्तः सर्वे षडूर्मिबहुळं जलधिं तरन्ति ।

इत्थं करीश दुरपह्नवदिव्यभव्य-
रूपान्वितस्य विबुधादिविभूतिसाम्यात् ।
केचिद्विचित्रचरितान्भवतोऽवतारान्
सत्यान्दयापरवशस्य विदन्ति सन्तः ॥२६॥

सौशील्यभावितधिया भवता कथंचि-
त्संछादितानपि गुणान्वरद त्वदीयान् ।

प्रत्यक्षयन्त्यविकलं तव सन्निकृष्टाः
पत्युस्त्विषामिव पयोदवृतान्मयूखान् ॥२७॥

नित्यं करीश तिमिराविलदृष्टयोऽपि
सिद्धाञ्जनेन भवतैव विभूषिताक्षाः ।
पश्यन्त्युपर्युपरि संचरतामदृश्यं
मायानिगूढमनपायमहानिधिं त्वाम् ॥२८॥

सद्यस्त्यजन्ति वरद त्वयि बद्धभावाः
पैतामहादिषु पदेष्वपि भावबन्धम् ।
कस्मै स्वदेत सुखसंचरणोत्सुकाय
कारागृहे कनकशृङ्खलयापि बन्धः ॥२९॥

हस्तीश दुःखविषदिग्धफलानुबन्धिन्याब्रह्मकीटमपराहतसंप्रयोगे ।
दुष्कर्मसंचयवशाद्दुरतिक्रमे नः प्रत्यस्त्रमञ्जलिरसौ तव निग्रहास्त्रे ॥

त्वद्भक्तिपोतमवलम्बितुमक्षमाणां पारं परं वरद गन्तुमनीश्वराणाम् ।
स्वैरं लिलङ्घयिषतां भववारिराशिं त्वामेव गन्तुमसि सेतुरभङ्गुरस्त्वम् ॥

अश्रान्तसंसरणघर्मनिपीडितस्य भ्रान्तस्य मे वरद भोगमरीचिकासु ।
जीवातुरस्तु निरवग्रहमेधमानो देव त्वदीयकरुणामृतदृष्टिपातः ॥

अन्तः प्रविश्य भगवन्नखिलस्य जन्तो-
रासेदुषस्तव करीश भृशं दवीयान् ।
सत्यं भवेयमधुनापि स एव भूयः
स्वाभाविकी तव दया यदि नान्तरायः ॥३३॥

अज्ञातनिर्गममनागमवेदिनं मामन्धं न किंचिदवलम्बनमश्नुवानम् ।
एतावतीं गमयितुं पदवीं दयाळोः शेषाध्वलेशनयने क इवातिभारः?॥ ३५॥
भूयोऽपि हन्त वसतिर्यदि मे भवित्री याम्यासु दुर्विषहवृत्तिषु यातनासु ।
सम्यग्भविष्यति ततः शरणागतानां संरक्षितेति बिरुदं वरद त्वदीयम्॥
पर्याकुलं महति दुःखपयोनिधौ मां
पश्यन्करीश यदि जोषमवस्थितस्त्वम् ।
स्फारेक्षणेऽपि मिषति त्वयि निर्निमेषं
पारे करिष्यति दया तव दुर्निवारा ॥३६॥
किं वा करीश कृपणे मयि रक्षणीये धर्मादिबाह्यसहकारिगवेषणेन?।
नन्वस्ति विश्वपरिपालनजागरूकः संकल्प एव भवतो निपुणः सहायः॥
निर्यन्त्रणं परिणमन्ति न यावदेते
नीरन्ध्रदुष्कृतभवा दुरितप्ररोहाः ।
तावन्न चेत्त्वमुपगच्छसि शार्ङ्गधन्वा
शक्यं त्वयापि न हि वारयितुं करीश ॥३८॥
यावन्न पश्यति निकाममनर्षणो मां
भ्रूभङ्गभीषणकराळमुखः कृतान्तः ।
तावत्पतन्तु मयि ते भगवन्दयाळो-
रुन्निद्रपद्मकलिकामधुराः कटाक्षाः ॥३९॥
स त्वं स एव रभसो भवदौपवाह्यश्चक्रं तदेव शितधारमहं च पाल्यः
साधारणे त्वयि करीश समस्तजन्तोर्मातङ्गमानुषभिदा न विशेषहेतुः

निर्वापयिष्यति कदा करिशैलधामन् दुर्वारकर्मपरिपाकमहादवाग्निम् ।
प्राचीनदुःखमपि मे सुखयन्निव त्वत्पादारविन्दपरिचाररसप्रवाहः ?॥

मुक्तः स्वयं सुकृतदुष्कृतशृङ्खलाभ्या-
मर्चिर्मुखैरधिकृतैरतिवाहिताध्वा ।
स्वच्छन्दकिंकरतया भवतः करीश
स्वाभाविकं प्रतिलभेय महाधिकारम्                ॥४२॥

त्वं चेत्प्रसीदसि तवास्मि समीपतश्चे-
त्त्वय्यस्ति भक्तिरनघा करिशैलनाथ ।
संसृज्यते यदि च दासजनस्त्वदीयः
संसार एष भगवन्नपवर्ग एव                ॥४३॥

आहूयमानमनपायिविभूतिकामैरालोकलुप्तजगदान्ध्यमनुस्मरेयम् ।
आलोहितांशुकमनाकुलहेतिजालं हैरण्यगर्भहयमेधहविर्भुजं त्वाम् ॥

भूयो भूयः पुलकनिचितैरङ्गकैरेधमानाः
स्थूलस्थूलान्नयनमुकुलैर्बिभ्रतो बाष्पबिन्दून् ।
धन्याः केचिद्वरद भवतः संसदं भूषयन्तः
स्वान्तैरन्तर्विनयनिभृतैः स्वादयन्ते पदं ते                ॥४५॥

वरद तव विलोकयन्ति धन्या मरकतभूधरमातृकायमाणम् ।
व्यपगतपरिकर्मवारवाणं मृगमदपङ्कविशेषनीलमङ्गम्                ॥४६॥

अनिभृतपरिरम्भैराहितामिन्दिरायाः
कनकवलयमुद्रां कण्ठदेशे दधानः ।

फणिपतिशयनीयादुत्थितस्त्वं प्रभाते
वरद सततमन्तर्मानसं संनिधेयाः ॥४७॥

तुरगविहगराजस्यन्दनान्दोलिकादि-
ष्वधिकमधिकमन्यामात्मशोभां दधानम् ।
अनवधिकविभूतिं हस्तिशैलेश्वरं त्वा-
मनुदिनमनिमेषैर्लोचनैर्निर्विशेयम् ॥४८॥

निरन्तरं निर्विशतस्त्वदीयमस्पृष्टचिन्तापदमाभिरूप्यम् ।
सत्यं शपे वारणशैलनाथ वैकुण्ठवासेऽपि न मेऽभिलाषः ॥४९॥

व्यातन्वाना तरुणतुलसीदामभिः स्वामभिख्यां
मातङ्गाद्रौ मरकतरुचिं पुष्णती मानसे नः ।
भोगैश्वर्यप्रियसहचरैः कापि लक्ष्मीकटाक्षै-
र्भूयः श्यामा भुवनजननी देवता सन्निधत्ताम् ॥५०॥

इति विहितमुदारं वेङ्कटेशेन भक्त्या
श्रुतिसुभगमिदं यः स्तोत्रमङ्गीकरोति ।
करिशिखरिविटङ्कस्थायिनः कल्पवृक्षा-
द्भवति फलमशेषं तस्य हस्तापचेयम् ॥५१॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु वरदराजपञ्चाशत् संपूर्णा ॥

---

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥

# ॥ अभीतिस्तवः ॥

श्रीमान्वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥

अभीतिरिह यज्जुषां यदवधीरितानां भयं
भयाभयविधायिनो जगति यन्निदेशे स्थिताः ।
तदेतदतिलङ्घितद्रुहिणशंभुशक्रादिकं
रमासखमधीमहे किमपि रङ्गधुर्यं महः ॥१॥

दयाशिशिरिताशया मनसि मे सदा जागृयुः
श्रियाध्युषितवक्षसः श्रितमरुद्वृधासैकताः ।
जगद्दुरितघस्मरा जलधिडिम्भडम्भस्पृशः
सकृत्प्रणतरक्षणप्रथितसंविदः संविदः ॥२॥

यदद्य मितबुद्धिना बहुळमोहभाजा मया
गुणग्रथितकायवाङ्मनसवृत्तिवैचित्र्यतः ।
अतर्कितहिताहितक्रमविशेषमारभ्यते
तदप्युचितमर्चनं परिगृहाण रङ्गेश्वर ॥३॥

मरुत्तरणिपावकत्रिदशनाथकालादयः
स्वकृत्यमधिकुर्वते त्वदपराधतो बिभ्यतः ।
महत्किमपि वज्रमुद्यतमिवेति यच्छ्रूयते
तरत्यनघ यद्भयं य इह तावकः स्तावकः ॥४॥

भवन्तमिह यः स्वधीनियतचेतनाचेतनं
धनायति नमस्यति स्मरति वक्ति पर्येति वा ।

गुणं कमपि वेत्ति वा तव गुणेश गोपायितुः
कदाचन कुतश्चन क्वचन तस्य न स्याद्भयम् ॥५॥

स्थिते मनसि विग्रहे गुणिनि धातुसाम्ये सति
स्मरेदखिलदेहिनं य इह जातुचित्त्वामजम् ।
तथैव खलु संधया तमथ दीर्घनिद्रावशं
स्वयं विहितसंस्मृतिर्नयसि धाम नैःश्रेयसम् ॥६॥

रमादयित रङ्गभूरमण कृष्ण विष्णो हरे
त्रिविक्रम जनार्दन त्रियुगनाथ नारायण ।
इतीव शुभदानि यः पठति नामधेयानि ते
न तस्य यमवश्यता नरकपातभीतिः कुतः ? ॥७॥

तदाचिदपि रङ्गभूरसिक यत्र देशे वशी
त्वदेकनियताशयस्त्रिदशवन्दितो वर्तते ।
तदक्षततपोवनं तव च राजधानी स्थिरा
सुखस्य सुखमास्पदं सुचरितस्य दुर्गं महत् ॥८॥

त्रिवर्गपथवर्तिनां त्रिगुणलङ्घनोद्योगिनां
द्विषत्प्रमथनार्थिनामपि च रङ्गदृश्योदयाः ।
स्खलत्समयकातरीहरणजागरूकाः प्रभो
करग्रहणदीक्षिताः क इव ते न दिव्या गुणाः ? ॥९॥

बिभेति भवभृत्प्रभो त्वदुपदेशतीव्रौषधा-
त्कदध्वरसदुर्विषे बळिशभक्ष्वत्प्रीयते ।

अपथ्यपरिहारधीविमुखमित्थमाकस्मिकी
तमप्यवसरे क्रमाद्भवति वत्सला त्वद्दया ॥१०॥

अपार्थ इति निश्चितः प्रहरणादियोगस्तव
स्वयं वहसि निर्भयस्तदपि रङ्गपृथ्वीपते ।
स्वरक्षणमिवाभवत्प्रणतरक्षणं तावकं
यदात्थ परमार्थविन्नियतमन्तरात्मेति ते ॥११॥

लघिष्ठसुखसङ्गतैः स्वकृतकर्मनिर्वर्तितैः
कळत्रसुतसोदरानुचरबन्धुसंबन्धिभिः ।
धनप्रभृतिकैरपि प्रचुरभीतिभेदोत्तरै-
र्न बिभ्रति धृतिं प्रभो त्वदनुभूतिभोगार्थिनः ॥१२॥

न वक्तुमपि शक्यते नरकगर्भवासादिकं
वपुश्च बहुधातुकं निपुणचिन्तने तादृशम् ।
त्रिविष्टपमुखं तथा तव पदस्य देदीप्यतः
किमत्र न भयास्पदं भवति रङ्गपृथ्वीपते ? ॥१३॥

भवन्ति सुखभेदतो भयनिदानमेव प्रभो
शुभाशुभविकल्पिता जगति देशकालादयः ।
इति प्रचुरसाध्वसे मयि दयिष्यसे त्वं न चे-
त्क इत्थमनुकम्पिता त्वदनुकम्पनीयश्च कः ? ॥१४॥

सकृत्प्रपदनस्पृशामभयदाननित्यव्रती
न च द्विरभिभाषसे त्वमिति विश्रुतः स्वोक्तितः ।

यथोक्तकरणं विदुस्तव तु यातुधानादयः
कथं वितथमस्तु तत्कृपणसार्वभौमे मयि ? ॥१५॥

अनुक्षणसमुत्थिते दुरितवारिधौ दुस्तरे
यदि क्वचन निष्कृतिर्भवति सापि दोषाविला ।
तदित्थमगतौ मयि प्रतिविधानमाधीयतां
स्वबुद्धिपरिकल्पितं किमपि रङ्गधुर्य त्वया- ॥१६॥

विषादबहुळाददं विषयवर्गतो दुर्जया-
द्बिभेमि वृजिनोत्तरस्त्वदनुभूतिविच्छेदतः ।
मया नियतनाथवानयमिति त्वमर्थापयन्
दयाधन जगत्पते दयितरङ्ग संरक्ष माम् ॥१७॥

निसर्गनिरनिष्टता तव निरंहसः श्रूयते
ततस्त्रियुगसृष्टिवद्भवति संहृतिः क्रीडितम् ।
तथापि शरणागतप्रणयभङ्गभीतो भवा-
न्मदिष्टमिह यद्भवेत्किमपि मा स्म तज्जीहपत् ॥१८॥

कयाधुसुतवायसद्विरदपुंगवद्रौपदी-
विभीषणभुजंगमव्रजगणाम्बरीषादयः ।
भवत्पदसमाश्रिता भयविमुक्तिमापुर्यथा
लभेमहि तथा वयं सपदि रङ्गधुर्य त्वया ॥१९॥

भयं शमय रङ्गधाम्न्यनितराभिलाषस्पृशां
श्रियं बहुळय प्रभो श्रितविपक्षमुन्मूलय ।

स्वयं समुदितं वपुस्तव निशामयन्तः सदा
वयं त्रिदशनिर्वृतिं भुवि मुकुन्द विन्देमहि ॥२०॥

श्रियः परिबृढे त्वयि श्रितजनस्य संरक्षके
सदद्भुतगुणोदधाविति समर्पितोऽयं भरः
प्रतिक्षणमतः परं प्रथय रङ्गधामादिषु
प्रभुत्वमनुपाधिकं प्रथितहेतिभिर्हेतिभिः ॥२१॥

कलिप्रणिधिलक्षणैः कलितशाक्यलोकायतै-
स्तुरुष्कयवनादिभिर्जगति जृम्भमाणं भयम् ।
प्रकृष्टनिजशक्तिभिः प्रसभमायुधैः पञ्चभिः
क्षितित्रिदशरक्षकैः क्षपय रङ्गनाथ क्षणात् ॥२२॥

दितिप्रभवदेहभिद्दहनसोमसूर्यात्मकं
तमःप्रमथनं प्रभो समुदितास्त्रबृन्दं स्वतः ।
स्ववृत्तिवशवर्तितात्रिदशवृत्ति चक्रं पुनः
प्रवर्तयतु धाम्नि ते महति धर्मचक्रस्थितिम् ॥२३॥

मनुप्रभृतिमानिते महति रङ्गधामादिके
दनुप्रभवदारुणैर्दरमुदीर्यमाणं परैः ।
प्रकृष्टगुणक श्रिया वसुधया च संधुक्षितः
प्रयुक्तकरुणोदधिः प्रशमय स्वशक्त्या स्वयम् ॥२४॥

भुजंगमविहंगमप्रवरसैन्यनाथाः प्रभो
तथैव कुमुदादयो नगरगोपुरद्वारपाः ।

अचिन्त्यबलविक्रमास्त्वमिव रङ्ग संरक्षका
जितं त इति वादिनो जगदनुग्रहे जाग्रतु ॥२५॥

विधिस्त्रिपुरमर्दनस्त्रिदशपुंगवः पावको
यमप्रभृतयोऽपि यद्विमतरक्षणे न क्षमाः ।
रिरक्षिषति यत्र च प्रतिभयं न किंचित् क्वचित्
स नः प्रतिभटान्प्रभो शमय रङ्गधामादिषु ॥२६॥

स कैटभतमोरविर्मधुपरागझञ्झामरु-
द्धिरण्यगिरिदारणस्त्रुटितकालनेमिद्रुमः ।
किमत्र बहुना भजद्भवपयोधिमुष्टिंधय-
स्त्रिविक्रम भवत्क्रमः क्षिपतु मङ्क्षु रङ्गद्विषः ॥२७॥

यतिप्रवरभारतीरसभरेण नीतं वयः
प्रफुल्लपलितं शिरः परमिह क्षमं प्रार्थये ।
निरस्तरिपुसंभवे क्वचन रङ्गमुख्ये विभो
परस्परहितैषिणां परिसरेषु मां वर्तय ॥२८॥

प्रबुद्धगुरुवीक्षणप्रथितवेङ्कटेशोद्भवा-
मिमामभयसिद्धये पठत रङ्गभर्तुः स्तुतिम् ।
भयं त्यजत भद्रमित्यभिदधत्सवः केशवः
स्वयं घनघृणानिधिर्गुणगणेन गोपायति ॥२९॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु अभीतिस्तवस्सम्पूर्णः ॥

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥

# श्रीरङ्गराजस्तवे

## पूर्वशतकम्

श्रीपराशरभट्टार्य श्श्रीरङ्गेशपुरोहितः ।
श्रीवत्सांकसुतश्श्रीमान् श्रेयसेमेऽस्तुभूयसे ॥

श्रीवत्सचिह्नमिश्रेभ्यो नमउक्ति मधीमहि ।
यदुक्तयस्त्रयीकंठे यान्तिमंगलसूत्रताम् ॥१॥

रामानुजपदच्छाया गोविंदाह्वाऽनपायिनी ।
तदायत्तस्वरूपासा जीयान्मद्विश्रमस्थली ॥२॥

रामानुजमुनिर्जीया द्योहरेर्भक्तियन्त्रितात् ।
कलिकोलाहलक्रीडामुधाग्रह मपाहरत ॥३॥

विधायवैदिकंमार्ग मकौतस्कुतकंटकम् ।
नतार भगवद्भक्ते यामुनं मनवामहे ॥४॥

नौमिनाथंमुनिंनाम जीमूतंभक्त्यवग्रहे ।
वैराग्य भगवत्तत्त्व ज्ञान भक्त्यभिवर्षुकम् ॥५॥

ऋषिंजुषामहे कृष्णतृष्णातत्वमिवोदितम् ।
सहस्रशाखां योऽद्राक्षी द्द्रामिडीं ब्रह्मसंहिताम् ॥६॥

नमःश्रीरंगनायक्यै यद्भ्रूविभ्रमभेदतः ।
ईशेशितव्यवैषम्य निम्नोन्नतमिदंजगत् ॥७॥

श्रीस्तनाभरणंतेज श्श्रीरंगेशय माश्रये ।
चिंतामणिमिवोद्वांत मुत्संगेऽनंतभोगिनः ॥८॥

अस्तिवस्त्विदमित्थंत्वप्रसंख्यानपराङ्मुखम् ।
श्रीमत्यायतने लक्ष्मीपदलाक्षैकलक्षणम् ॥९॥

लक्ष्मीकल्पलतोत्तुंगस्तनस्तबकचंचलः ।
श्रीरंगराजभृंगो मे रमतां मानसांबुजे ॥१०॥

स्वास्ति श्रीस्तनकस्तूरी मकरीमुद्रितोरसः ।
श्रीरंगराजाच्छरदश्शत माशास्महेतराम् ॥११॥

पातु प्रणतरक्षायां विलंबमसहन्निव ।
सदापञ्चायुधींबिभ्रत्सनश्श्रीरंगनायकः

अमतंमतं मतमधाम तंस्तुतं परिनिंदितं भवति निंदितं स्तुतम् ।
इतिरंगराज मुदजूघुषत्त्रयी स्तुमहे वयं किमितितन्न शक्नुमः॥१३॥

यदिमे सहस्रवदनादि वैभवं निजमर्पये त्सकिल रंगचन्द्रमाः ।
अथशेषवन्ममच तद्वदेववा स्तुतिशक्त्यभावविभवेऽपि भागिता ॥

सोंऽगवेद यदिवा नकिलेतिवेद स्संदेग्ध्यनर्घ्यविद मात्मनि रंगनाथम् ।
स्थाने यदेषखलु दोषमलीमसाभि मेंद्वाग्भि रेश मतिशायिनमावृणोति ॥

स्वसंस्कृत द्राविडवेदसूक्तै र्भातं मदुक्तै र्मलिनीकरोति ।
श्रीरंगकन्नः कलभं कएव स्नात्वापि धूळीरसिकं निषेद्धा ॥१६॥

किन्तु प्रपत्तिबल तारितविष्णुमाया
मद्वंशराजकुल दुर्लालितं किलैवम् ।
श्रीरङ्गराज कमलापद लालितत्वं
यद्वाऽपराधयति भमस्तुतिसाहसेऽस्मिन् ॥१७॥

नाथस्यच स्वमहिमार्णवपारदृश्व
विज्ञानवाग्विलसितं सहते नवेदः ।
आपेक्षिकं यदितदस्ति ममापितेन
श्रीरङ्गिणः स्तुतिविधा वहमध्यकार्षम् ॥१८॥

अन्यत्रातद्गुणोक्ति र्भगवतिनतदुत्कर्षचौर्यैः परेषां
स्तुत्यत्वाद्यावदर्थाफणिति रवितथातस्यनिस्सीमकत्वान् ।
आम्नायाना मसीम्नामपि हरिविभवेवर्षबिंदोरिवाब्धौ
संबंधात्स्वात्मलाभो नतुकबळनतः स्तोतु रेवंनकिंमे ॥१९॥

कावेरी मवगाहिषीय भगवद्भोगांतरायीभव-
त्कर्मक्लेश फलाशय प्रशमनो द्वेलामलस्रोतसम् ।
जंतोस्संसरतोऽर्चिरादिसरणिव्यासंगभंगाय या
लोकेऽस्मिन्विरजेव वेल्लितजला श्रीरंगमालिंगति ॥२०॥

दुग्धाब्धिर्जनको जनन्यहमियं श्रीरेवपुत्रीवर-
श्श्रीरंगेश्वर एतदर्ह मिह किंकुर्यामितीवाकुला ।
चंचच्चामर चंद्रचंदनमहा माणिक्य मुक्तोत्करा-
न्कावेरी लहरीकरै र्विदधती पर्येतिसासेव्यताम् ॥२१॥

तीर्थंशुन्धति पातिनन्दनतरून रथ्यांगणान्युक्षति
स्नानीयार्हणपानवारिवहतिस्नातःपुनीतेजान् ।
श्यामं वेदरहोव्यवक्ति पुळिनेफेनैर्हसन्तीवत-
द्गंगांविष्णुपदीत्वमात्रमुखरांहेमापगा हंत्वघम् ॥२२॥

अगणितगुणावद्यं सर्वं स्थिरत्रसमर्पिते
क्रियमपिपयः पूरैराप्याययंत्यनुजाग्रती ।
प्रवहति जगद्धात्रीभूत्वेव रंगपते र्दया-
शिशिरमधुरा ऽगाधा सालः पुनातुमरुद्वधा ॥२३॥

तरळतनुतरंगै र्मंद मांदोळ्यमान-
स्वतट विटिपि राजीमंजरीसुप्रभृङ्गा ।
क्षिपतु कनकनाम्नी निम्नगा नारिकेळ-
क्रमुकज मकरन्दैर्मांसलापा मदंहः ॥२४॥

कदळ वकुळ जंबू पूग माकन्द कण्ठ
द्वयससरसनीरामन्तरासह्यकन्याम् ।
प्रबलजलपिपासा लम्बमानाम्बुदौघ-
भ्रमकरतरुबृन्दं वन्द्यतामन्तरीपम् ॥२५॥

यद्विष्णोःपदमतमः परोरजोऽग्र्यं मुक्ताना मनुविरजं विदीप्र माहुः ।
तत्पुण्यं पुलिनमिदं तयाद्यमध्ये कावेरीस्फुरति तदीक्षिषीय नित्यम् ॥

अत्यन्तप्रहति मतीषु वैष्णवानां प्राप्यासु प्रचुरभवश्रमापहासु ।
कावेरी परिचरितासु पावनीषु श्रीरङ्गोपवनतटीषु वर्तिषीय ॥२७॥

स्फुरितशफरदीर्घं त्रालिकेरीगुलुच्छ-
प्रसृमर मधुकुल्या वर्धितानोकहानि ।
रति मविरति रंगारामरम्यस्थलानि
क्रमुकपनसमोचा मेचकानि क्रियासुः ॥२८॥

अधिपरमपदं पुरीमयोध्या ममृतवृता मपराजिता मुशन्ति ।
पुळिनमुपरि रंग राजधानी पिशितदृशामपि सापुर श्चकास्ति ॥२९॥

भवपदमपि दिव्य धामकर्तुं तदुभयतन्विन हर्म्यमालिकेव ।
भवनमणितलै र्विजृंभमाणा जयतितरा मिह रङ्गराजधानी ॥३०॥

मणिमकररुची र्वितत्यपाशा न्विसृमर केतुकरै र्मृगंहिमांशोः ।
श्रिय इव नवकेळये जिघृक्षु स्सुखयतु रंगपुरी चकासती नः ॥३१॥

जनपद सरि दन्तरीप पुष्य त्पुरपरिपालन नित्यजागरूकान् ।
प्रहरण परिवारवाहनाढ्यान्कुमुदमुखान् गणनायका न्नमामि ॥३२॥

अहृतसहजदासा स्सूरयस्स्रस्तबन्धा
विमलचरमदेहा इत्यमीरंगधाम ।
महितमनुजतिर्यक्स्थावरत्वा इश्रयन्ते
सुनियतमितियेस्म प्राहु रेभ्योनमस्स्तात् ॥३३॥

श्रीरङ्गदिव्यभवनं भुवि गोपुराणां प्राकारितेन निकरेण गरुत्मतेव ।
पार्श्वप्रसारितपतत्रपुटेन भक्त्या नानातनूभि रुपगूढमुपन्नयामः ॥

प्राकारमध्याजिरमंडपोक्त्या सद्वीपरत्नाकररत्नशैला ।
सर्वंसहा रंगविमानसेवां प्राप्येव तन्मन्दिर माविरस्ति ॥३५॥

जितबाह्यजिनादिमणिप्रतिमा अपिवैदिकयन्निव रंगपुरे ।
मणिमण्डपवप्रगणान्विदधे परकालकविःप्रणमेमहितान् ॥३६॥

सेराननाक्षिकमलनेमतः पुनानान् दंष्ट्रागदाभ्रुकुटिभिर्द्विषतोधुनानान् ।
चंडप्रचंडमुखतः प्रणमामिरंगद्वारावलीपुचतसृष्वधिकारभाजः ॥

सर्वात्मसाधारणनाथगोष्ठी पूरेपिदुष्पूरमहावकाशम् ।
आस्थान मानन्दमयं सहस्र स्थूणादिनाम्ना तदवाप्रवानि ॥३८॥

विहरतिहरौ लक्ष्म्या लीलातपत्रपरिष्क्रिया
विनिमय त्रिधासूनासूनि क्रियासफलोत्पलाम् ।
अथ मुनिमनःपद्मेष्वब्जासहाय विहारज
श्रमहरतटीं याम स्तामैंदवी मरविन्दिनीम् ॥३९॥

तापत्रयी मैन्दव पुष्करिण्यां निमज्य निर्वापयितास्मि यस्याः ।
अभ्यासतोऽपामघमर्षिणीनां चन्द्र स्सुधादीधितिता मवाप ॥४०॥

पूर्वेणतांतद्वदुदारनिम्न प्रसन्न शीताशय मग्ननाथाः ।
पराङ्कुशाद्याः प्रथमेपुमांसो निषेदिवांसो दश मां दयेरन् ॥४१॥

आधारशक्ति मुपरिप्रकृतिं परेण तांकूर्म मत्रफणिनं पृथिवीं फणासु ।
पृथ्व्यां पयोधि मधितन्नलिनंनिधाय श्रीरङ्गधाम सुनिविष्ट मभिष्टवानि॥

परेणनाकं पुरि हेममय्यां योब्रह्मकोशोऽस्त्यपराजिताख्यः ।
श्रीरङ्गनाम्ना तमपौरुषेयं विमानराजं भुवि भावयानि ॥४३॥

अनाद्याम्नातत्वा त्पुरुषरचनादोषरहितं
जने तांस्तान्कामा न्विदधदपि सायुज्यहृदयम् ।
असंदेहाध्यासं भगवदुपलंभस्थलममी
प्रतीम श्श्रीरंगं श्रुतिशत समानार्धिशरणम् ॥४४॥

अपिफणिपतिभावा च्छुभ्रमन्त श्शयालो
र्मरतकसुकुमारै रंगभर्तुर्मयूखैः ।

सकलजलधिपान श्यामजीमूतजैत्रं
पुळकयति विमानं पावनंलोचने नः ॥४५॥

व्यापिरूपमपि गोष्पदयित्वा भक्तवत्सलतयोज्झितवेलम् ।
तद्विषंतपनृकेसरि रूपं गोपुरोपरि विजृम्भित मीडे ॥४६॥

अहमलमवलम्बस्सीदतामित्यजस्रं
निवसदुपरिभागे गोपुरं रंगधाम्नः ।
क्वचन नृपरिपाटीवासितं क्वापि सिंह-
क्रमसुरभितमेकं ज्योतिरग्रेचकास्ति ॥४७॥

संशोध्यपावनमनोहरदृष्टिपातै र्देवाय मामपि निवेदयतां गुरूणाम् ।
सव्योत्तरेभगवतोऽस्यकटाक्षवीक्षा पङ्क्तिप्रपद्य परितः परितोभवेयम्॥

श्रीरंगराजकरनम्रित शाखिकाभ्यो लक्ष्म्या स्वहस्तकलितश्रवणावतंसम्।
पुन्नागतल्लजमजस्रसहस्रगीति सेकोत्थदिव्यनिजसौरभ मामनामः॥

श्रीरंगचन्द्रमस मिन्दिरयाविहर्तुं
विन्यस्य विश्वचिदचिन्नयनाधिकारम् ।
योनिर्वहत्यनिश मंगुळिमुद्रयैव
सेनान्य मन्यविमुखास्तमशिश्रियाम ॥५०॥

सैन्यधुरीण प्राणसहायां सूत्रवती माशिश्रयमंबाम् ।
श्रीपदलाक्षा लांछितसेवा प्रोतलसद्दोर्वल्लि विलासाम् ॥५१॥

विदधतुसुखं विष्वक्सेनस्य ते प्रथमेभटाः
करिमुखजयत्सेनौ कालाह्वसिंहमुखौ च नः ।

जगतिभजतां तत्तत्प्रत्यूहतूलदवानला
दिशिदिशिदिवारात्रं श्रीरंगपालनकर्मठाः ॥५२॥

श्रितिमयमतिहर्षप्रश्रयस्मेरवक्त्रं
मणिमुकुरमिवाग्रे मङ्गळंरंगधाम्नः ।
शरणमभिगतास्स्मो यत्ररूप स्वरूप
स्वगुण महिमदर्शी मोदते रंगशायी ॥५३॥

तार्क्ष्यपक्षतिवदस्यवल्लभां रुद्रयासह सुकीर्तिमर्चये ।
हर्षबाष्पमपि कीर्तिमर्थिनां यन्मुखेन कमला कटाक्षयेत् ॥५४॥

स्वात्मरूप स्फुरन्मौळिमाशब्दइत्युद्रुनानान्सुरां स्तर्जनीमुद्रया ।
नाथनिद्रोचितोन्निद्र ताम्रेक्षणां संचरन्तीं स्तुम स्तांच पञ्चायुधीम् ॥

अस्त्रग्रामाग्रेसरं नाथवीक्षा सिन्धुक्षीबोद्वेलनृत्ताभिरामम् ।
चक्रं दैत्यच्छेदकलमाषिताङ्गं भ्राम्यज्ज्वालामालभारि प्रपद्ये ॥५६॥

हनुभूष विभीषणयोस्स्थां यतमाविह मोक्षमुपेक्ष्य ।
रघुनायकनिष्क्रयभूतं भुविरङ्गधनं रमयेते ॥५७॥

इतोबहिः पञ्चपराञ्चिखानि प्रत्यञ्चितानि स्युरितोंतरित्थम् ।
औपाधिकेभ्यो निरुपाधिभोग्ये प्रत्याहरद्वेत्रवरं व्रजामि ॥५८॥

शेषशयलोचनामृतनदीरयाकुलित लोलमानानाम् ।
आलंबमिवामोद स्तंभद्वयमन्तरङ्गमभियामः ॥५९॥

श्रीरंगान्तर्मन्दिरं दीप्रशेषं श्रीभूमीतद्रम्यजामातृगर्भम् ।
पश्येम श्रीदिव्य माणिक्यभूषा मंजुषायास्तुल्यमुन्मीलितायाः॥६०॥

लीलालताकृपाणी भृंगार पतद्ग्रहार्पितकराग्राः ।
प्रोतावतंसित कुचाः पादाब्जसंवाहिनीर्वयंस्तुमहे ॥६१॥

मुकुलितनळिनास्सकौमुदीका इवसुनिशाविमलादिकानवापि ।
शिरसिकृतनमस्यदेकहस्ता इतरकरोच्चलचामराश्श्रयेयम् ॥६२॥

उत्फुल्लपङ्कजतटाकमिवोपयानि
श्रीरंगराजमिह दक्षिणसव्यसीम्नोः ।
लक्ष्मींविहार रसिकामिव राजहंसीं
छायामिवाभ्युदयिनीं मवनींच तस्याः ॥६३॥

पिबनयन पुरस्ते रंगधुर्याभिधानं
स्थितमिव परिफुल्लत्पुंडरीकं तटाकम् ।
श्रियमपि विहरन्तीं राजहंसीमिवास्मिन्
प्रतिफलनमिवास्याः पश्यविश्वंभरांच ॥६४॥

सौशील्य शीतलमपार कृपातरंग
संप्लावितास्खिल मकृत्रिम भूमिनिम्नम् ।
लक्ष्म्याच वासित मभूम विगाह्माना-
श्रीरंगराज मिषपद्मसरः प्रसन्नम् ॥६५॥

सिंहासने कमलया क्षमयाच विश्व मेकातपत्रयितुमस्मदसून्निषण्णम् ।
ळक्ष्मी स्वयंवर सनाथितयौवनश्रीसौन्दर्य सम्पदवालिप्त मिवालिहीयम्॥

आपादमूल मणिमौळि समुल्लसंत्या
स्वातन्त्र्यसौहृद तरंगितयांगभंग्या ।

सख्यंसमस्तजनचेतसि सन्दधानं
श्रीरंगराज मनिमेष मनुश्रयास्म ॥६७॥

क्षितिकमलनिवासाकल्पवल्लीसलीलो-
ल्लुठनदशदिशोद्यद्यौवनारम्भजृम्भः ।
श्रममपहरतां मे रंगधामेति तत्त-
द्रूरमयफलनम्रः पत्रलः पारिजातः ॥६८॥

संभाषमाणमिव सर्ववशंवदेन मन्दस्मितेन मधुरेणच वीक्षणेन ।
दिव्यास्त्र पुष्पित चतुर्भुज मत्युदारं रंगास्पदं ममशुभाश्रय माश्रयाणि ॥

एते शंख गदा सुदर्शन भृतः क्षेमंकराबाहवः
पादद्वंद्वमिदं शरण्यमभयं भद्रंच वो हेजनाः ।
इत्यूचिष्यभयंकरे करतले स्मेरेण वक्त्रेण त-
द्व्याकुर्वन्निव निर्वहेन्ममधुरं श्रीरंगसर्वंसहः ॥७०॥

अंगै रहंप्रथमिकाचरितात्मदानै रामोदमान नवयौवन सावलेपैः ।
हैपारिजात मिव नूतनतायमान शाखाशतं कथमधीमहि रंगधुर्यम् ॥

आलोका हृदयालवो रसवशा दीशानमीषत्स्मितं
प्रच्छायानिवचांसि पद्मनिलयाचेतश्शरण्यं वपुः ।
चक्षुष्मन्ति गतागतानि तइमे श्रीरंगशृंगारते
भावायौवनगन्धिनः किमपरं सिष्वन्ति चेतांसिनः ॥७२॥

आयत्किरीट मळिकोल्लसदूर्ध्वपुंड्र माकर्णलोचन मनङ्कुशकर्णपाशम् ।
उत्फुल्लवक्षसमुदायुधबाहु मर्हश्रीविंच रंगपतिमब्जपदम्भजामः ॥

अब्जन्यस्तपदाब्जमञ्चितकटीसंवादिकौशेयकं
किंचित्ताण्डवगन्धिसंहननकं निर्व्याजमन्दस्मितम् ।
चूडाचुम्बिमुखाम्बुजं निजभुजाविश्रान्त दिव्यायुधं
श्रीरंगेशरदश्शतं ततइतः पश्येम लक्ष्मीसखम् ॥७४॥

अग्रे तार्क्ष्येण पश्चादहिपति शयनेनात्मना पार्श्वयोश्च
श्रीभूमिभ्यामतृप्त्यानयनचुळकनैस्सेव्यमानामृतौघम् ।
वक्षेणाविस्स्मितेनस्फुरदभयगदाशंखचक्रैर्भुजाग्रै-
र्विश्वस्मैतिष्ठमानं शरण मशरणा रंगराजं भजामः ॥७५॥

आर्तापाश्रयमार्थिकल्पक मसह्यागस्करक्ष्मातलं
सद्यस्संश्रितकामधेनु मभियत्सर्वस्वमस्मद्धनम् ।
श्रीरंगेश्वरमाश्रयेम कमलाचक्षुर्मही जीवितं
श्रीरंगे स सुखाकरोतु सुचिरं दास्यंच धत्तां मयि ॥७६॥

स्वफण वितानदीप्र मणिमालि सुदामरुचि
प्रदिम सुगन्धिभोग सुखशायित रंगधनम् ।
मदभरमन्थरोल्लसित निश्वसितोत्तरळं
फणिपति डोलिकातळिम माश्वसिमः प्रणताः ॥७७॥

वटदळ देवकीजठर वेदशिरः कमला
स्तनशठगोपवाग्वपुषि रंगगृहे शयितम् ।
वरदमुदारदीर्घभुजलोचनसंहननं
पुरुषमुपासिषीय परमं प्रणतार्तिहरम् ॥७८॥

उदधिपरमव्योम्नोर्विस्मृत्य पद्मवनालया
विनिमयमयीं निद्रां श्रीरंगनामनि धामनि ।
फणिपरिबृढस्फार प्रश्वास निश्वसितक्रम
स्खलित नयनं तन्वन्मन्वीत नः परमः पुमान ॥७९॥
जलधिमिवनिपीतं नीरदेनाद्रिमब्धौ
निहितमिव शयानं कुञ्जरं वाऽद्रिकुञ्जे ।
कमलपदकराक्षं मेचकंधाम्निनीले
फणिन मधिशयानं पूरुषं वन्दिषीय ॥८०॥
श्रीरंगेशय इहशर्मनिर्मिमीता माताम्राधर पदपाणिविद्रुमो नः ।
कावेरीलहरिकरोपलाळ्यमानो गम्भीराद्भुत इवतर्णकोऽर्णवस्य ॥
सिञ्चेदिमञ्जजन मिन्दिरयातटित्वा-
न्भूषामणि द्युतिभिरिन्द्र धनुर्दधानः ।
श्रीरंगधामनि दयारस निर्भरत्वा-
दद्रौशयालुरिव शीतलकालमेघः ॥८२॥
आमौळिरत्नमकरात्पुनराचपद्भ्यां धामक्रमोन्नम दुदार मनोहरांगम् ।
श्रीरंगशेषशयनं नयनैः पिबामः पश्यन्मनःप्रवणमोघ मिवामृतस्य ॥
अरविन्दित मंघ्रिपाणि वक्रै रपितापिञ्छित मञ्चितांग कान्त्या ।
अधरेणच बन्धुजीवितं श्रीर्नियतं नन्दनयेत रंगचंद्रम् ॥८४॥
अन्योन्य रंजकरुचोऽनुपमानशोभा
दिव्यस्रगम्बर परिष्करणांगरागाः ।

संस्पर्शतः पुलकिताइव चिन्मयत्वा-
द्रंगेन्दु कान्तिमधिका मुपबृंहयन्ति ॥८५॥

द्रुतकनकज गिरि परिमिळ दुदधि प्रचलितलहरीवदहमहमिकया ।
स्नपयति जनमिम मपहरति तमः फणिशय मरतक मणिकिरणगणः॥

भोगीन्द्र· निश्वसितसौरभवर्धित श्रीनित्यानुषक्त परमेश्वरभावगन्धि ।
सौरभ्य माप्लुतदिशावधिं रंगनेतु रानन्दसम्पदि निमज्जयते मनांसि ॥

रंगभर्तुरपि लोचन चर्चां साहसावळिषु लेखयमानम् ।
पुष्पहास इति नामदुहानं सौकुमार्य मतिवाङ्मनसं नः ॥८८॥

एकैकस्मिन् परमवयवेऽनन्त सौन्दर्यमग्नं
सर्वं द्रक्ष्ये कथमिति मुधामामथा मन्द चक्षुः ।
त्वं सौभ्रात्रव्यतिकरकरं रंगराजांगकानां
तल्लावण्यं परिणमयिता विश्वपारीणवृत्तिम् ॥८९॥

वपुर्मंदारस्य प्रथम कुसुमोल्लाससमयः
क्षमालक्ष्मीभृंगी सकल करणोन्मादनमधु ।
विकासस्सौन्दर्यस्रजि रसिकतासीधुचुळुको
युवत्वं रंगेंदोस्सुरभयति नित्यंसुभगताम् ॥९०॥

किरीटचूडरत्नराजि राधिराज्यजल्पिका ।
मुखेन्दुकान्ति रुन्मुखं तरंगितेव रंगिणः ॥९१॥

शिखारत्नोद्दीप्रं दिशिदिशिच माणिक्यमकरी
लसच्छृंगं रंगप्रभुमणिरीटंमनुमहे ।

समुत्तुंगस्फीतं चिदचिदधिराज्यश्रियइव
प्रियाक्रीडं चूडामणिमपि नितम्बं तमाभितः ॥९२॥

विहरतु मयि रंगिण श्रूलिका भ्रमरक तिलकोर्ध्वपुण्ड्रोज्वलम् ।
मुख ममृत तटाकचन्द्राम्बुज स्मयहरशुचिमुग्धमन्दास्मितम् ॥९३॥

मुखपुण्डरीक मुपरित्रिकण्टकं तिलकाश्च केसरसमा स्समौक्तिकाः ।
इह रंगभर्तु रभियन्मधुव्रत प्रकरश्रियं भ्रमरकाणि बिभ्रति ॥९४॥

हृदयं प्रसादयतिरंगपते र्मधुरोर्ध्वपुण्ड्रतिलकं ललितम् ।
अळिकार्धचन्द्रदळसंवलिता ममृतस्त्रुतिं यदभिशंकयते ॥९५॥

सरसीरुहे समवनाम्यमदा दुपरिप्रनृत्यदळिपङ्क्तिनिभे ।
स्फुरतोभ्रुवावुपरि लोचनयो स्सविलासलास्यगति रंगभृतः ॥९६॥

स्मरशरनळिनभ्रमान्नेत्रयोः परिसरनमदिक्षुचापच्छवि ।
युगमुदयति रंगभर्तुर्भ्रुवो र्गुरुकुलमिव शार्ङ्गनृत्तश्रियः ॥९७॥

कृपया परया करिष्यमाणे सकलाङ्गंकिल सर्वतोऽक्षिनेत्रे ।
प्रथमं श्रवसीसमास्तृणाते इतिदैर्घ्येण विदन्तिरंगनेतुः ॥९८॥

श्रवो नासारोधात्तदवधिकडोलायितगते
विशालस्फीतायद्रुचिर शिशिराताम्रधवळे ।
मिथोबद्धस्पर्धस्फुरितशफरद्वंद्वललिते
क्रियास्तां श्रीरंगप्रणयिनयनाब्जे मयिदयाम् ॥९९॥

करुणामृत कूलमुद्वहैषा प्रणमत्स्वागतिकी प्रसन्नशीता ।
मयिरंगधनोपकर्णिकाक्ष्णो स्सरितोर्वीक्षणवीचिसन्ततिस्स्तात् ॥१००॥

विलसतिनासाकल्पक वल्लीमुग्धेव रंगनिलयस्य ।
स्मितमपि तन्नवकुसुमं चुबुकर्कपोलंच पल्लवोल्लसितम् ॥१०१॥

नयनशफरविद्धौ कर्णपाशावरुद्धौ रुषइवलुठतोर्चि मंजरीरुद्रिरंतौ ।
परिमिळदलकाळीशैवलामंसवेला मनुमणिमकरोद्धौ रंगधुर्यामृताब्धेः॥

अधरमधुराम्भोजं तत्कर्णपाशमृणालिका
वलयमभिमामास्तां रङ्गेन्दुवक्त्रसरश्श्रियम् ।
नयनशफरंनासाशैवालवल्लरिकार्णिका
मकरमल्लकश्रेणीपर्यन्तनीलवनावलि ॥१०३॥

रमयतु समांकण्ठ इश्रीरंगनेतुरुदञ्चित
क्रमुकतरुणग्रीवाकम्बुप्रलम्बमलिम्लुचः ।
प्रणयविलसल्लक्ष्मीविश्वंभरा करकन्दळी
कनकवलयक्रीडासङ्क्रान्तरेखइवोल्लसन् ॥१०४॥

अधिष्ठानस्तम्भौ भुवनपृथुयन्त्रस्य कमला
करेणोराळानावरिकरिघटोन्माथमुसलौ ।
फणीन्द्र स्फीतस्रग्व्यतिकरितसंदिग्धविभवौ
भुजौमे भूयास्ता मभयमभिरंग प्रणयिनः ॥१०५॥

प्रतिजलधितो वेलाशय्यां विभीषणकौतुका-
त्पुनरिवपुरस्कर्तुं श्रीरंगिणः फणिपुंगवे ।
समुप दधतः काञ्चित्काञ्चित्प्रसारयतो भुज-
द्वयमपि सदादानश्रद्धालुदीर्घमुपास्महे ॥१०६॥

कुसुमभरालसौ स्फटिक वेदिशयौ विटपा-
वमरतरोःपरं परिहसत्पृथुरंगभुजः ।
बहुमणि मुद्रिकाकनककङ्कणदोर्वलयैः
किसलयि दोर्द्वयं फणिनि निर्भरसुप्तमिमः ॥१०७

मद्रक्षाव्रतकौतुके सुकटके विश्रान्ति कर्णेजपे
शार्ङ्गज्याकिणकर्कशिम्नि सुमनस्स्रङ्मोहनैर्मार्दवे ।
दोर्द्वंद्वंबहुशः प्रलोभ्यकमलालीलोपधानंभव-
त्तच्चित्रालकमुद्रितं विजयते श्रीरंगसंसंगिनः ॥१०८॥

भवार्तानां वक्त्रामृतसरसि मार्गंदिशदिव
स्वयंवक्त्रेणेदं वरदमिति संदर्शितमिव ।
कराम्भोजं पङ्केरुहवनरुषा पाटलमिव
श्रयामि श्रीरंगेशायितु रुपधानीकृतमहम् ॥१०९॥

किरीटं श्रीरंगेशायितु रुपधानीकृतभुजो
विधीशाधीशत्वा द्घटत इति संस्पृश्य वदति ।
निहीनानांमुख्यं शरणमिति बाहुस्तदितर -
स्स्फुटं ब्रूते पादाम्बुज युगळमाजानुनिहितः ॥११०॥

मलयज शशिलिप्तं मालतीदामतल्पं
सुमणिसरवितानं कौस्तुभस्वास्तिदीपम् ।
दनुज वृषविषाणोल्लेखचित्रंच लक्ष्मी
ललित गृहमुपासे रंगसर्वंसहारः ॥१११॥

हारस्फारित फेन मंशुलहरी मालर्धि मुक्ताफल-
श्रेणीशीकर दुर्दिनं ततइतोऽप्याकीर्ण रत्नोत्करम् ।
आविःकौस्तुभ लक्ष्मिरंगवसते निस्सीमभूमाद्भुतं
वक्षोमन्दर मथ्यमानजलधिश्लाघं विलोकेमहि ॥११२॥

वक्षस्थल्यां तुलसि कमलाकौस्तुभैर्वैजयन्ती
सर्वेशत्वं कथयतितरां रंगधाम्नस्तदास्ताम् ।
कूर्मव्याघ्री नखपरिमिळ त्पंचहेती यशोदा
नद्धामौग्ध्याभरण मधिकं नस्समाधिं धिनोति ॥११३॥

कियान्भरो मम जगदण्ड मंडली त्यतृप्तितः कशितमिवोदरंविभोः ।
रिराक्षिषोचित जगतीपरम्परां परामिव प्रथयति नाभिपङ्कजम् ॥

त्रिविध चिदाचिद्वृन्दं तुंदावलम्बि वलित्रयं
विगणय दिवैश्वर्यं व्याख्याति रंगमहेशितुः ।
प्रणतवशतां ब्रूते दामोदरत्वकरःकिण
स्तदुभयगुणाकृष्टं पट्टंकिलोदरबन्धनम् ॥११५॥

त्रयोदेवास्तुल्या स्त्रितयमिद मद्वैत मधिकं
त्रिकादस्मात्तत्वं परमिति वितर्कान् त्रिघटयन् ।
विभोर्नाभीपद्मोविधिशिवनिदानं भगवत-
स्तदन्यद्भूभङ्गीपरवदिति सिद्धान्तयति नः ॥११६॥

गर्भेकृत्वागोप्तुमनन्तं जगदन्त मज्जद्भ्रम्या वांछति साम्यंनतुनाभिः ।
उत्क्षिप्यैतत्प्रेक्षितु मुद्यद्भ्रमिभूयं नाभीपद्मो रंहति रंगायतनाब्धेः ॥

मदमिव मधुकैटभस्य रम्भा करभकरीन्द्र कराभिरूप्यदर्पम् ।
स्फुटमिव परिभूय गर्वगुर्वोः किमुपमिमीमहि रङ्गकुंजरोर्वोः ॥
कटीकान्ति संवादि चातुर्यनीवी लसद्रत्न कांची कलापानुलेपम् ।
महाभ्रं लिहन्मेरु माणिक्यसानू रिवाभाति पीताम्बरं रङ्गबन्धोः ॥
भर्मस्थलांशुपरिवेष इवाम्बुराशे स्सन्ध्याम्बुवाह निकुरुम्ब मिवाम्बरस्य।
शंपाकदम्बकमिवाम्बुमुचो मनोनः पीताम्बरं पिबति रङ्गधुरन्धरस्य ॥
वैभूषण्यां कान्ति राङ्गीनिमग्ना विष्वग्ध्रीची कापिसोन्मादवृत्तिः ।
जाने जानुद्वंद्ववार्ताविवर्तो जातश्श्रीमद्रंगतुंगालयस्य ॥१२१॥
श्रीरंगेशयजंघे श्रीभूम्यामर्शहर्षकण्टाकिते ।
तत्केळिनळिनमांसळ नाळद्वयललितमाचरतः ॥१२२॥
वन्दारुबृन्दारकमौळिमाला युंजानचतःकमलाकरेभ्यः ।
सङ्क्रान्तरागाविव पादपद्मौ श्रीरंगभर्तु र्मनवै नुवैच ॥१२३॥
यद्बृन्दावनपाण्डितं दधिरवैर्यत्ताण्डवं शिक्षितं
यल्लक्ष्मीकरसौख्यसाक्षि जलजप्रस्पर्धमानार्थियत् ।
यद्भक्तेष्वजलस्थलक्षमपि यद्दूत्य प्रसंगोत्सुकं
तद्विष्णोः परमंपदं वहतु न श्श्रीरंगिणो मंगळम् ॥१२४॥
शिंजान श्रुतिशिंजिनी मणिरवै र्वज्रारविन्दध्वज-
च्छत्रीकल्पक शंखचक्र मुकुरै स्तैस्तैश्च रेखामयैः ।
ऐश्वर्येणजयं त्रिविक्रममुखं घुष्यद्भि राम्रेडितं
श्रीरंगेशय पादपंकजयुगं वन्दामहे सुन्दरम् ॥१२५॥

पुनानिभुवनान्यहं बहुमुखीति सर्वांगुळी
झुलज्झलित जाह्नवी लहरिबृन्द सन्देहदाः ।
दिवानिशिच रंगिणश्चरणचारुकल्पद्रुम-
प्रवाळ नवमंजरी नखरुची र्विगाहेमहि ॥१२६॥

श्रीरंगेंदोः पदकिसलये नीलमंजीरमैत्र्या
वंदे वृंतप्रणयि मधुपव्रातं राजर्षिजैत्रे ।
नित्याभ्यर्चा नर्तविधिमुखस्तोमसंशय्यमानै-
र्हेमांभोजै र्निबिडनिकटे रामसीतोपनीतैः ॥१२७॥

इति हरितकुलतिलक श्रीवत्सांक मिश्रसूनो श्श्रीरंगराज दिव्याज्ञालब्ध
श्रीपराशर भट्टारकापरनामधेयस्य श्रीरंगराजस्य कृतिषु
श्रीरंगराजस्तवे पूर्वशतकं संपूर्णम् ॥

---

## ॥ श्रीरङ्गराजस्तवे ॥

### उत्तरशतकम्

हर्तुं तमस्सदसतीच विवेक्तु मीशो मानं प्रदीपमिव कारुणिकोददाति ।
तेनावलोक्यकृतिनः परिभुंजतेतं तत्रैव केऽपि चपलाश्शलभीभवन्ति॥

यावेदबाह्यास्मृतयोऽर्हदादे र्वेदेषु याः काश्च कुदृष्टयस्ताः ।
आगस्कृतां रंगनिधे त्वदध्व व्यन्धंकारिण्यः स्मृतवान्मनुस्तत् ॥२॥

प्रत्यक्षप्रमथन पश्यतोहरत्वा न्निर्दोषश्रुति विमतेश्च बाह्यवर्त्म ।
दुस्तर्कप्रभवतयाच वक्तृदोष स्पृष्ट्याच प्रजहतिरंगविद वृद्धाः ॥३॥

अवयवितयेदं कुर्वाणे बहिष्करणैर्वपु-
र्निरवयवकोऽहंकाराहः पुमान्करणातिगः ।
स्फुरतिहिजनाः प्रत्यासत्तेरिमौ नविविंचते
तदधिकुरुतां शास्त्रं रंगेशते परलोकिनि ॥४॥

प्रत्यक्षा श्रुतिरर्थधीश्च नतथादोषस्तदर्थःपुन-
र्धर्माधर्म परावरेश्वर मुखः प्रत्यक्षबाध्योनच ।
तच्चार्वाकमतेऽपि रंगरमण प्रत्यक्ष वत्सा प्रमा
योगोन्मीलित धीस्तदर्थमथवा प्रत्यक्षमीक्षेत सः ॥५॥

नस दस दुभयंवा नोभयस्मा द्वहिर्वा
जगदिति नकिलैकां कोटि माटीकते तत् ।
इति निरुपधि सर्वसर्विकातोनिषेध-
न्वरद सुगतपाश श्चोरलावं विलाव्यः ॥६॥

प्रतीतिश्चेदिष्टा न निखिल निषेधोयदिनको
निषेद्धातो नेष्टोनिरुपधि निषेधस्सदुपधौ ।
निषेधेऽन्यत्सिद्ध्ये द्वरद घटभंगेशकलव-
त्प्रमा शून्येपक्षे श्रुतिरपि मतेऽस्मि न्विजयताम् ॥७॥

योगाचारो जगदपलपत्यत्र सौत्रांतिकस्त-
द्वीवैचित्र्या दनुमितिपदं वक्ति वैभाषिकस्तु ।
प्रत्यक्षंतत्क्षणिकयति ते रंगनाथत्रयोऽपि
ज्ञानात्मत्व क्षणभिदुरते चक्षते तान् क्षिपामः ॥८॥

जगद्भंगुरं भंगुराबुद्धिरात्मेत्यसद्वेत्त्रभावे तथावेद्यवित्त्योः ।
क्षणध्वंसतश्च स्मृति प्रत्यभिज्ञा दरिद्रं जगत्स्या दिदं रंगचन्द्र ॥९॥

अहमिद मभिवेद्यी त्यात्मवित्त्योर्विभेदे
स्फुरतियदितदैक्यं बाह्यमप्येकमस्तु ।
प्रमितिरपि मृषास्या न्मेयमिथ्यात्ववादे
यदितदपि सहेरन् दीर्घ मस्मन्मशायुः ॥१०॥

एत द्रामास्त्रं दलयतु कलिब्रह्ममीमांसकांश्च
ज्ञप्तिर्ब्रह्मैतज्ज्वलदपि निजाविद्ययाबंभ्रमीति ।
तस्यभ्रान्ति तां श्लथयति जिताद्वतांवेद्यस्तुजीवो
यद्यद्दृश्यंतद्वितथमितिये ज्ञापयांचक्रु रङ्गाः ॥११॥

अंगीकृत्यतु सप्त भंगि कुसृतिं स्यादस्ति नास्त्यादिकां
विश्वं त्वद्विभवं जगज्जिनमतैनैकान्तमाचक्षते ।
भिन्नाभिन्नमिदं तथाजगदुपे वंध्यासमांम्येतिव-
न्नूनब्रह्मविदरहः परमिदं रंगेन्द्रतेचक्षताम् ॥१२॥

कणचर चरणाक्षौ भिक्षमाणौ कुतर्कै-
श्श्रुतिशिरसि सुभिक्षं त्वज्जगत्कारणत्वम् ।
अणुषुविपरिणाम्यं व्योमपूर्वंच कार्यं
तवभवदनपेक्षं रंगभर्तुर्ब्रुवाते ॥१३॥

वेदेकर्त्राद्यभावा द्बलवतिहि नयै स्त्वन्मुखेनीयमाने
तन्मूलत्वेनमानं तदितरदखिलं जायतेरंगधामन् ।

तस्मात्सांख्यंसयोगं सपशुपतिमतं कुत्रचित्पंचरात्रं
सर्वत्रैतत्प्रमाणं तदिदमवगतं पञ्चमादेववेदात् ॥१४॥

सञ्चष्टे नेश्वरंत्वां पुरुषपरिषदि न्यस्य यद्वान्यपर्या-
त्साङ्ख्योयोगीचकाक्वाप्रतिफलनमिवैश्वर्यमूचेकयाचित् ।
भिक्षौशैव स्सुरांभवमभिमनुते रंगराजातिरागा-
त्त्वांत्वामे व्याभधास्त्वं ननुपरविभवव्यूहनाढ्यम्भविष्णुम् ॥१५॥

इतिमोहनवर्त्मनात्वया प्रथितं बाह्यमतं तृणायमन्ये ।
अथवैदिकवर्मवर्मितानां मनिताहे कुदृशांकिमीशवर्त्म? ॥१६॥

संस्कारं प्रतिसंचरेषु निदधत्सर्गेषु तत्स्मारितं
रूपंनामच तत्तदर्हनिवहे व्याकृत्यरंगास्पद ।
सुप्तोद्बुद्धविरिंच पूर्वजनता मध्याप्यतत्ताद्धितं
शासन्नस्मृत कर्तृकान्वहसि यद्वेदाः प्रमाणंततः ॥१७॥

शिक्षायांवर्ण शिक्षापदसमधिगमोव्याक्रिया निर्वचोभ्यां
छंदश्छंदश्चितौस्या द्रमयति समयंज्यौतिषंरंगनाथ ।
कल्पेऽनुष्ठानमुक्तं ह्युचितगभितयोर्न्यायमीमांसयोस्त्वा-
दर्थव्यक्तिः पुराणस्मृतिषु तदनुगास्त्वांविचिन्वंतिवेदाः ॥१८॥

आदौवेदाः प्रमाणं स्मृतिरुपकुरुतेसेतिहासैः पुराणै-
र्न्यायैस्साधं त्वदर्चाविधि मुपरिपरिक्षीयतेपूर्वभागः ।
ऊर्ध्वोभागस्त्वदीहागुणविभव परिज्ञापनैस्त्वत्पदाप्तौ
वेद्योवेदैश्च सर्वैरहमितिभगवन् स्वेनचव्याचकर्थ ॥१९॥

क्रिया तच्छक्तिर्वा किमपि तदपूर्वं पितृसुर-
प्रसादोवाकर्तुः फलदइति रंगेशकुदृशः ।
त्वदर्चेष्टापूर्ते फलमपि भवत्प्रीतिज मिति
त्रयीवृद्धा स्तत्तद्विधिरपि भवत्प्रेरण मिति ॥२०॥

आम्नातेस्मनिमित्त नित्य विधय स्स्वर्गादि काम्यद्विधि
स्सोमद्गा शठचित्त शास्त्रवशतो पीयोभिचारश्रुतिः ।
सर्वायस्य समस्तशासितु रहो श्रीरंगसर्वस्वते
रक्षाकूतनिवेदिनी श्रुतिरसौ त्वन्नित्य शास्ति स्ततः ॥२१॥

अत्रास्ते निधिरितिव त्पुभर्थभूते सिद्धार्था अपिगुणरूपवृत्तवादाः ।
रंगेशत्वयिसकला स्समन्वयंते नोपासाफलविधिभि र्विशेषएषाम् ॥

देहोदेहिनि कारणे विकृतयो जातिर्गुणाः कर्मच
द्रव्येनिष्ठितरूप बुद्धिवचनास्तात्थ्यात्तथेदंजगत् ।
विश्वंत्वय्यभिमन्यसे जगदिषे ते नाद्वितीयस्ततो
मायोपाधि विकारसंकरकथा कानामरंगेश्वर ? ॥२३॥

स्थित्युत्पत्ति प्रवृत्ति प्रसन नियमन व्यापनैरात्मनस्ते
शेषोऽशेषः प्रपंचो वपुरितिभवत स्तस्यचाभेदवादाः ।
सर्वंखल्वैत दात्म्यंसकलमिदमहं तत्वमस्येवमाद्याः
व्याख्यातारङ्गधामप्रवण विजयिभि र्वैदिकैस्सार्वभौमैः ॥२४॥

सराजकमराजकं पुनरनेक राजं तथा
यथाभिमतराजकं जगदिदंजजल्पुर्जडाः ।

जगाववशचित्रतातरतमत्वतर्कांगिका
श्रुतिश्चिदचिती त्वया वरद नित्यराजन्वती ॥२५॥

ब्रह्माद्यास्सृज्यवर्गे भ्रुकुटिभटतयोद्घाटितानावतार
प्रस्तावेतेननत्वं नचतवसदृशा विश्वमेकातपत्रम् ।
लक्ष्मीनेत्रात्वयेति श्रुतिमुनि वचनैस्त्वत्परैरर्पयाम-
श्श्रीरङ्गाम्भोधिचन्द्रोदयजलमुचितंवादिकौतस्कुतेभ्यः ॥२६॥

दोषोपधावधिसमातिशयानसंख्या निर्लेपमंगळ गुणौघदुघा ष्षडेताः ।
ज्ञानैश्वरी शकन वीर्य बलार्चिषस्त्वां रंगेश भासइव रत्न मनर्घयन्ति ॥

युगपदनिशमक्षैस्स्वैस्स्वतोऽवाक्षकार्ये
नियम मनियमंवा प्राप्यरंगाधिराज ।
करतलवदशेषं पश्यसिस्वप्रकाशं
तदवरणममोघं ज्ञानमाम्नासिषुस्ते ॥२८॥

नयन श्रवणोदृशा शृणोषि ह्यथत रंगपतेमहेशितुः ।
करणैरपिकामकारिणस्ते घटते सार्वपथीन मीक्षणम् ॥२९॥

सार्वज्ञ्येनाज्ञमूलंजगदभिदधतोवारितास्साक्षिमात्रा
त्साङ्ख्योक्तात्कारणन्त्वां परयतिभगवन्नैश्वरीरंगशायिन् ।
अप्रेर्योऽन्यैस्स्वतन्त्रोप्रतिहति सदत्कर्मचैत्र्याविचित्रं
यत्रेच्छालेशतस्त्वं युगपदगणयन्विश्वमाविश्चकर्थ ॥३०॥

कार्येऽनंते स्वतनुमुखतस्त्वामुपादानमाहु-
स्साते शक्ति स्सुकरमितरच्चेति वेलां विलंघ्य ।

इच्छा यावद्विहरति सदारंगराजानपेक्षा
सैवेशानादतिशयकरीसोर्णनाभौविभाव्या ॥३१॥

स्वमहिमास्थितिरीश भृशक्रियोऽप्यकलितश्रमएव बिभर्षियत् ।
वपुरिवस्वमशेषमिदंबलं तवपराश्रितकारणवारणम् ॥३२॥

मृगनाभिगन्ध इवयत्सकलार्थान्निजसन्निधेरविकृतो विकृणोषि ।
प्रियरंगवीर्यमिति तत्तु वदंते सविकारकारण मितोविनिवार्यम् ॥

सहकार्यपेक्षमपि हातुमिह तदनपेक्षकर्तृता ।
रंगधनजयतितेजइति प्रणतार्तिजित्प्रतिभटाभिभावुकम् ॥३४॥

मर्त्योत्थायंविरिंचावधिकमुपरिचोत्प्रेक्ष्यमीमांसमाना
रंगेन्द्रानन्दवल्लीतवगुणनिवहं यौवनानंदपूर्वम् ।
नस्वार्थंप्रष्टुमीष्टे स्वलतिपथपरं मूकलायं निलिल्ये
हंतैवंत्वद्गुणाना मवधिगगनयोःकाकथाचित्तवाचोः ॥३५॥

न्यधायिषतयेगुणाः निधिलिताय सारण्यके-
ष्वमी म्रदिम चातुरी प्रणतचापल क्षांतयः ।
दयाविजयसौन्दरी प्रभृतयोऽपिरङ्गोघव-
ज्जगद्व्ययवद्धतिक्षमा वरदरंगरत्नापणे ॥३६॥

यमाश्रित्यैवात्मम्भरयइवते सगुणगणाः
प्रथन्ते सोऽनन्तस्त्वयशवनशान्तोदितदशः ।
त्वमेवत्वांवेत्थ स्तिमितवितरङ्ग वरदभो
स्वसंवेद्यस्वात्मद्वयसवहुलानन्द भरितम् ॥३७॥

आघ्रायेश्वरगन्धमीशसदृशंमन्या स्तवेन्द्रादयो
मुह्यन्तित्वमनाविलोनिरवधेर्भूम्नः कणेदृत्ययत् ।
चित्रीयेमहि नात्र रंगरसिकत्वं त्वन्महिम्नःपरो
वैपुल्यान्महितस्स्वभाव इतिवाकिन्नाम सात्म्यंनते ? ॥३८॥

षाड्गुण्याद्वासुदेवः परइतिसभवान्मुक्तभोग्योबलाढ्या-
द्बोधात्सङ्कर्षणस्त्वंहरसिवितनुषेशास्त्रमैश्वर्यवीर्यात् ।
प्रद्युम्नस्सर्गधर्मौनयसिच भगवन्शक्तितेजोऽनियुद्धो
बिभ्राणःपासितत्वंगमयसिच तथाव्यूह्यरंगाधिराज ॥३९॥

जाग्रत्स्वप्नाद्यलसतुरीय प्रायध्यातृक्रमवदुपास्यः ।
स्वामिंस्तत्तत्सहपरिबर्ह श्चातुर्व्यूह्यंवहसिचतुर्धा ॥४०॥

अचिदविशेषितान्प्रळयसीमनि संसरतः
करणकळेबरै र्घटयितुं दयमानमनाः ।
वरदनिजेच्छयैव परवानकरोःप्रकृतिं
महदभिमान भूतकरणावळिकोरकिणीम् ॥४१॥

निम्नोन्नतंच करुणंच जगद्विचित्रं कर्तव्यपेक्ष्यसृजत स्तव रंगशेषिन् ।
वैषम्यनिर्घृणतयो नखलुप्रसक्ति स्तद्ब्रह्मसूत्रसचिवाश्श्रुतयोगृणन्ति ॥

स्वाधीने सहकारिकारणगणे कर्तुश्शरीरेऽथवा
भोक्तुस्स्वानुविधापराधविधयो राज्ञो यथाशासितुः ।
दातुर्वार्थिजनेकटाक्षणमिव श्रीरंगसर्वस्वते
स्रष्टुस्सृज्यदशाव्यपेक्षणमपि स्वातन्त्र्यमेवावहेत् ॥४३॥

प्रळयसमयसुप्तं स्वंशरीरैकदेशं
वरदचिदचिदाख्यं स्वेच्छयाविस्तृणानः ।
खचितमिवकलापं चित्रमातत्यधून्व-
न्ननुशिखिनि, शिखीव क्रीडसि श्रीसमक्षम् ॥४४॥

भूयोभूयस्त्वयिहितपरेऽप्युत्पथानात्मनीन-
स्रोतोमग्नानपि पथि नयं स्त्वं दुराशावशेन ।
रुग्णेतोकेस्वइव जननीतत्कषायं पिबन्ती
तत्तद्वर्णाश्रमविधिवशः क्लिश्यसेरंगराज ॥४५॥

सार्वं त्वत्कं सकलचरितं रंगधामन् दुराशा-
पाशेभ्य स्स्यान्नयदि जगतां जातु मूर्खोत्तराणाम् ।
निस्तन्द्रालो स्तवनियमतोनर्तुलिंगप्रवाहा
सर्गस्थेमप्रभृतिषु सदा जागराजाघटीति ॥४६॥

सुहृदिवनिगळाद्यैरुन्मदिष्णुं नृशंसं
त्वमपिनिरयपूर्वैर्दण्डयन् रंगनेतः ।
तदितरमपि बाधात्त्रायसे भोगमोक्ष
प्रदिरापितवदंडापूपिकातस्सुहृत्त्वम् ॥४७॥

धृतिनियमन रक्षा वीक्षणै श्शास्त्रदान
प्रभृतिभि रचिकित्स्यान्प्राणिनः प्रेक्ष्यभूयः ।
सुरमनुजतिरश्चां सर्वधातुल्यधर्मा
त्वमवतरसिदेवोऽजोऽपि सन्नव्ययात्मा ॥४८॥

अनुजनु रनुरूप रूपचेष्टा नयदिसमागम मिन्दिराकरिष्यत् ।
असरस मथवा प्रियम्भविष्णु ध्रुवमकरिष्यतरंगराजनर्म ॥४९॥

गरीयस्त्वंपरिजानन्तिधीरा परंभावं मनुजत्वादिभूष्णुम् ।
अजानन्त स्त्ववजानन्ति मूढा जनिघ्नंते भगवन् जन्मकर्म ॥५०॥

मध्ये विरिञ्च गिरिशं प्रथमावतार
स्तत्साम्यत स्स्थगयितुं तवचे त्स्वरूपम् ।
किंते परत्व पिशुनैरिह रंगधामन्
सत्वप्रवर्तन कृपा परिपालनाद्यैः ॥५१॥

मधुःकैटभश्चेति रोधं विधूय त्रयीदिव्यचक्षु र्विधातुर्विधाय ।
स्मरस्यंग रंगिंस्तुरंगावतार स्समस्तं जगज्जीवयिष्यस्यकस्मात् ॥

रंगधेतिमिरघस्मरशीत स्वच्छहंसतनुरिंदुरिवोद्यन् ।
वेदभाभिरनुजग्रहिथार्तान ज्ञानयज्ञसुधयैवसमृध्यन् ॥५३॥

वटदळमधिशय्यरंगधामन् शयित इवार्णवतर्णकःपदाब्जम् ।
अधिमुख मुदरे जगन्ति मातुं निदधिथ वैष्णव भोग्यलिप्सयावा ॥

उन्मूल्याहर मन्दराद्रि महिना तं सम्बधानामुना
दोर्भि श्चंचलमालिकैश्च दधिनिर्माथं मथानांबुधिम् ।
श्रीरंगेश्वर चन्द्रकौस्तुभसुधा पूर्वंगृहाणेतिते
कुर्वाणस्य फलेग्रहिर्हि कमलालाभेन सर्वश्रमः ॥५५॥

देवीहस्ताम्बुजेभ्यश्चरणकिसलये संवहद्भ्योपहृत्य
प्रत्यस्यानन्तभोगं झटिति चलपुटे चक्षुषीविस्तृणानः ।

आक्षिप्योरश्च लक्ष्म्या स्स्तनकलशकनत्कुंकुमस्तोमपंका-
द्देव श्श्रीरंगधामा गजपति घुषिते व्याकुलस्तात्पुरोनः ॥५६॥

अतन्त्रित चमूपति प्रहित हस्तमस्वीकृत
प्रणीतमणिपादुकं किमिति चाकुलान्तःपुरम् ।
आवाहनपरिष्क्रियं पतगराज मारोहतः
करिप्रवरबृंहिते भगवतस्त्वरायैनमः ॥५७॥

यंपश्यन्विश्वधुर्या धियमसकृदथोमन्धरांमन्यमानो
हुंकारास्फालनांघ्रिप्रहृतिभिरपितंतार्क्ष्यमध्यक्षिपस्त्वं ।
किञ्चोदञ्चन्नुदस्था स्तमथगजपते बृंहितेजृम्भमाणे
देवश्रीरंगबन्धो प्रणमति हि जने कांदिशीकी दशाते ॥५८॥

श्रीरंगेशय शरणं ममासिवात्या व्यालोलत्कमलतटाकतांडवेन ।
स्रग्भूषाम्बरमयथायथं दधानो धिङ्मा मित्यनुगजगर्ज माजगंथ ॥

मीनतनु स्त्वंनाविनिधाय स्थिरचरपरिकर मनुमनुभगवन् ।
वेदसनाभि स्वोक्तिविनोदै रकलित लयभयलव ममु मवहः ॥६०॥

श्रीनयनांभोद्भासुर दीर्घ प्रविपुल सुरुचिर शुाच शिशिर वपुः ।
पक्षनिगीर्णोद्गीर्ण महाब्धि स्थलजलविहरणरतगतिरचरः ॥६१॥

चकर्थ श्रीरंगिन्निखिल जगदाधार कमठो
भवन् धर्मान्कूर्मः पुनरमृत मन्थाचलधरः ।
जगन्धश्रेय स्त्वं मरतकशिलापीठ ललिता
जवादुच्चलक्ष्मीपद किसलय न्याससुलभम् ॥६२॥

हृदिसुररिपो र्दंष्ट्रो त्खाते क्षिपन्प्रळयार्णवं
क्षितिकुचतटी मर्चन् दैत्यास्र कुंकुमचर्चया ।
स्फुटधुतसटाभ्राम्य द्ब्रह्मस्तवोन्मुखबृंहित-
श्शरण मासि मे रांगिं स्त्वं मूलकोलतनु र्भवन् ॥६३॥

नृहरिदशयोः पश्यन्नौत्पत्तिकं घटनाद्भुतं
नर मुत हरिं दृष्ट्वैकैकं समुद्विजतेजनः ।
इतिकिलसिताक्षीरन्यायेन सङ्गमिताङ्गकं
स्फुटसटमहादंष्ट्रं रङ्गेन्द्रसिंह मुपास्महे ॥६४॥

द्विषाण द्वेषोद्यन्नयन वनवह्निप्रशमन
भ्रमल्लक्ष्मीवक्त्रप्रहित मधुगंडूषसुषुमैः ।
नखक्षुण्णाराति क्षतज पटलैराप्लुतसटा-
च्छटास्कंधो रुन्धे दुरित मिह पुंस्पञ्चवदनः ॥६५॥

नखाग्रग्रस्तेऽपि द्विषतिनिजभक्तद्रुहिरुषः
प्रकर्षाद्विष्णुत्वाद्विगुणपरिणाहोत्कटतनुः ।
विरुद्धे वैयग्रीसुघटित समानाधिकरणे
नृसिंहत्वेबिभ्रद्वरद बिभरामासिथ जगत् ॥६६॥

दैत्यौदार्येन्द्रयाच्ञाविहतिमपनयन् वामनोऽर्थीत्विमासी-
र्विक्रान्तेपादपद्मोत्रिजगदणुसमंपांसुलीकृत्यलिल्ये ।
नाभीपद्मश्रमानक्षममिव भुवनग्राममन्यं सिसृक्षु-
स्तस्थौरंगेन्द्रवृत्ते तवजयमुखरोडिंडिमस्तत्रवेदः ॥६७॥

भवान्नामोभूत्वा परशुपरिकर्माभृगुकुला-
दलावीद्भूपाला न्पितृगण मताप्सीत्तदसृजा ।
भुवोभाराक्रान्तं लघु तलमुपाचीक्लृपदिति
द्विषामुग्रंपश्योऽप्यनघममार्जीगणदघम् ॥६८॥

मनुजसमयं कृत्वा नाथा नतेरिथ पद्मया
क्वचन विपिने साचे दन्तर्धिनर्म विनिर्ममे ।
किमथजलधिं बध्वा रक्षो विधीशवरोद्धतं
बलिमुखकुलोच्छिष्टं कुर्वन्निपुं निरपत्रयः ॥६९॥

यद्वूयते विजयापदान गणना कालिंगदन्तांकुरै-
र्यद्विश्लेषलवोऽपि कालियभुवे कोलाहालायाभवत् ।
दूत्येनापि च यस्य गोपवनिताः कृष्णागसां व्यस्मरं
स्तंत्वां क्षेमकृषीवलं हलधरं रंगेश भक्तास्महे ॥७०॥

आकंठवारिभर मन्थरमेघदेश्यं पीताम्बरं कमललोचनपंचहेतिम् ।
ब्रह्मस्तनंधय मयाचत देवकीत्वां श्रीरंगकान्त सुतकाम्यति कावरैवम् ॥

शैलोऽग्निश्चजलांबभूव मुनयोमूढांबभूवुर्जडाः
प्राज्ञामासुरगा स्सगोपममृतामासु र्महाशीविषाः ।
गोव्याघ्रास्सहजांबभूवु रपरेत्वन्यांबभूवुःप्रभो
त्वंतेष्वन्यतमांबभूविथ भवद्वेणुक्वणोन्मादने ॥७२॥

कल्कितनु र्धरणीं लघुयिष्य न्कलिकलुषा न्विलुनासि पुरात्वम् ।
रंगनिकेत लुनीहि लुनीहीत्यखिलमरुंतुद मद्यलुनीहि ॥७३॥

आस्तांते गुणराशिवद्गुणपरीवाहात्मनां जन्मनां
संख्याभौम निकेतनेष्वपि कुटीकुंजेषु रंगेश्वर ।
अर्च्य स्सर्वसहिष्णु रर्चकपरा धीनाखिलात्मस्थितिः
प्रीणीषे हृदयालुभि स्तवतत श्शीलाज्जडीभूयते ॥७४॥

श्रीमद्व्योम नसीम वाङ्मनसयोस्सर्वेऽवताराःक्वचि-
त्काले विश्वजनीनमेतदितिधीश्श्रीरंगधामन्यथ ।
आर्तस्वागातिकैः कृपाकलुषितै रालोकितै रार्द्रय-
न्विश्वत्राण विमर्शनस्खलितया निद्रासिजागर्यया ॥७५॥

सर्गाभ्यासविशालया निजधिया जानन्ननन्तेशयं
भारत्या सहधर्मचाररतया स्वाधीनसंकीर्तनः ।
कल्पानेवबहून्कमंडलुगळद्गङ्गाप्लुतोऽपूजय-
द्ब्रह्मा त्वां मुखलोचनांजलिपुटैः पद्मैरिवावर्जितैः ॥७६॥

मनुकुलमहीपाल व्यानाम्रमौळिपरंपरा
मणिमकरिकारोचि नीराजिताङ्घ्रिसरोरुहः ।
स्वयमथविभोस्वेनश्रीरङ्गधामनि मैथिली
रमणवपुषा स्वार्हण्याराधनान्यसि लम्भितः ॥७७॥

मन्वन्वाये द्रुहिणे चधन्ये विभीषणेनैव पुरस्कृतेन ।
गुणै र्दरिद्राण मिमंजनं त्वं मध्येसरिन्नाथ सुखाकरोषि ॥७८॥

तेजःपरं तत्सवितुर्वरेण्यं धाम्ना परेणा प्रणखात्सुवर्णम् ।
त्वां पुण्डरीकेक्षण मामनन्ति श्रीरङ्गनाथं त मुपासिषीय ॥७९॥

आत्मास्यगन्तुःपरितस्थुषश्च मित्रस्य चक्षु र्वरुणस्यचाग्नेः ।
लक्ष्म्यासहौत्पत्तिक गाढबन्धं पश्येम रंगे शरदश्शतं त्वाम् ॥८०॥

यस्यास्मि पत्यु र्नतमन्तरेमि श्रीरङ्गतुङ्गायतने शयानम् ।
स्वभावदास्येनैच योऽहमस्मि नसन्यजे ज्ञानमयै मखै स्तम् ॥८१॥

आयुःप्रजाना ममृतं सुराणां रंगेश्वगरं त्वां शरणं प्रपद्ये ।
मांब्रह्मणेऽस्मै महसे तदर्थं प्रत्यंचै मेवं युनजै परस्मै ॥८२॥

आर्तिंतितीर्षु रथ रंगपतेधनाय-
न्नात्मम्भरि र्विविदिषु र्निजदास्यकाम्यन् ।
ज्ञानीत्यमूस्सममथा स्सम मत्युदारा-
न्गीतासु देव भवदाश्रयणोपकारान् ॥८३॥

नित्यं काम्यं परमपि कतिचि त्त्वय्यध्यात्मम्वमतिभि रममाः ।
न्यस्यासंगा विदधति विहितं श्रीरंगेंदो विदधतिनचते ॥८४॥

प्रत्यञ्चं स्वं पञ्चविंशपरा च स्सञ्चक्षाणा स्तत्वराशे र्विविच्य ।
युंजानाश्चतम्भ रायां स्वबुद्धौ स्वंवात्वां रंगनाथाप्नुवन्ति ॥८५॥

अथ मृदित कषायाः केचि दाजानदास्य
त्वरितशिथिलचित्ताः कीर्तिचिन्तानमस्याः ।
विदधति ननु पारं भक्तिनिघ्ना लभन्ते
त्वयिकिलततमे त्वं तेषु रङ्गेंद्र किंतत् ? ॥८६॥

उपादत्ते सत्तास्थिति नियमनाद्यै श्चिदचितौ
स्वमुद्दिश्य श्रीमानिति वदतिवागौपनिषदी ।

उपायोपेयत्वे तदिह तव तत्वं नतुगुणा-
वतस्त्वां श्रीरङ्गेशय शरण मव्याज मभजम् ॥८७॥

पटुनैकपराटिकेव क्लृप्ता स्थलयोः काकणिकासुवर्णकोट्योः ।
भवमोक्षणयो स्त्वयैवजन्तुः क्रियते रङ्गनिधे त्वमेव पाहि ॥८८॥

ज्ञानक्रियाभजनसम्पदकिञ्चनोऽहं-
मिच्छाधिकारशकनानुशयानभिज्ञः ।
रंगेश पूर्णवृजिन श्शरणं भवेति
मौर्ख्या द्ब्रवीमि मनसा विषयाकुलेन ॥८९॥

त्वयिसति पुरुषार्थे मत्परेचाह मात्म-
क्षयकरकुहनार्थान् श्रद्दधद्रङ्गचन्द्र ।
जन मखिल महंयुर्वंचयामि त्वदात्म-
प्रतिमभवदनन्य ज्ञानिवद्देशिकस्सन् ॥९०॥

अतिक्रामन्नाज्ञां तव विधिनिषेधेषु भवते
प्यभिद्रुह्य न्वाग्धी कृतिभिरपि भक्ताय सततम् ।
अजानन्जानन्वा भवदसहनीयागसि रत-
स्सहिष्णुत्वा द्रंगप्रवण तव माभूव मभरः ॥९१॥

प्रकुपित भुजगफणानामिव विषयाणा महंछायाम् ।
सतितव भुजसुरविटपि प्रच्छाये रङ्गजीवित भजामि ॥९२॥

त्वत्सर्वशक्ते रधिकास्मदादेः कीटस्य शक्ति र्बत रङ्गबन्धो ।
यत्त्वत्कृपामप्यतिकोशकार न्याया दसौ नश्यति जीवनाशम् ॥९३॥

श्रीरंगेश त्वद्गुणाना मिवास्म द्दोषाणांकः पारदृश्वा यतोऽहम् ।
ओघे मोघोदन्यवत्त्वद्गुणानां तृष्णापूरं वर्षतां नास्मिपात्रम् ॥९४॥

त्वंचेन्मनुष्यादिषु जायमान स्तत्कर्मपाकं कृपयोपभुङ्क्षे ।
श्रीरङ्गशायिन्कुंशलेतराभ्यां भूयोऽभिभूयेमहि कस्यहेतोः? ॥९५॥

क्षमा सापराधेऽ नुतापिन्युपेया कथं सापराधेऽपि दृप्ते मयि स्यात्? ।
तथाप्यत्र रंगाधिनाथानुताप व्यपायं क्षमेता तिवेला क्षमाते ॥९६॥

बलिभुजि शिशुपाले तादृशागस्करेवा
गुणलवसहवासा त्त्वत्क्षमा सङ्कुचन्ती ।
मयि गुणपरमाणू दंतचिन्तानभिज्ञे
विहरतु वरदासौ सर्वदा सार्वभौमी ॥९७॥

दया परव्यसनहरा भवव्यथा सुखायते मम तदहं दयातिगः ।
तथाप्यसौ सुखयति दुःखमित्यतो दयस्व मां गुणमय रङ्गमंदिर ॥

गर्भजन्मजरामृति क्लेशकर्मषड्डूर्मिकः ।
श्वेव देव वषट्कृतं त्वां श्रियोऽर्हमकामये ॥९९॥

अनुकृत्य पूर्वपुंसो रंगनिधे विनयडम्भतोऽमुष्मात् ।
शुनइव मम वरमृद्धे रुपभोगस्त्वद्विलीनायाः ॥१००॥

सकृत्प्रपन्नाय तवाहमस्मीत्यायाचते चा भयदीक्षमाणम् ।
त्वामप्यपास्याहमहं भवामि रंगेश विस्त्रम्भविवेकरेकात् ॥१०१॥

तवभरोऽह मकारिषि धार्मिकै इशरण मित्यपि वाच मुदैरिरम् ।
इति ससाक्षिकयन्निद मद्य मां कुरु भरं तव रंगधुरन्धर ॥१०२॥

दयान्येषां दुःखाप्रसहन मनन्योऽसिसकलै-
र्दयालुस्त्वंनातः प्रणमदपराधानविदुषः ।
क्षमा ते रंगेंदो भवति नितरां नाथ नतमां
तवौदार्यं यस्मा त्तव विभवमर्थिस्वममथाः ॥१०३॥

गुणतुंगतयातवरंगपते भृशनिम्नमिमं जन मुन्नमय ।
यदपेक्ष्यमपेक्षितु रस्यहितत्परिपूरण मीशितु रीश्वरता ॥१०४॥

त्वं मनिपानीयनयेन कर्म धीभक्तिवैराग्यजुषो बिभर्षि ।
रंगेशमां पासि मितंपचंयत्पानीयशालं मरुभूषु तत्स्यात् ॥१०५॥

इति हरितकुलतिलक श्रीवत्सांक मिश्रसूनो श्श्रीरंगराज दिव्याज्ञालब्ध
श्रीपराशर भट्टारकापरनामधेयस्य श्रीरंगराजस्य कृतिषु
श्रीरंगराजस्तवे उत्तरशतकं संपूर्णम् ॥

॥ श्रीरंगराजस्तव स्सम्पूर्णः ॥

---

## ॥ श्रीसुंदरबाहुस्तवः ॥

श्रीवत्सचिह्नमिश्रेभ्यो नमउक्तिमधीमहे ।
यदुक्तयस्त्रयीकण्ठे यान्ति मङ्गलसूत्रताम् ॥

श्रीमन्तौ हरिचरणौ समाश्रितोऽहं श्रीरामावरज मुनीन्द्रलब्धबोधः ।
निर्भीकस्तत इह सुंदरोरुबाहुं स्तोष्ये तच्चरण विलोकनाभिलाषी ॥

सुंदरायतभुजं भजामहे वृक्षषण्डमयमद्रिमाश्रितम् ।
यत्र सुप्रथितनूपुरापगातीर्थमर्थितफलप्रदं विदुः ॥२॥

क्वचित्त्वरितगामिनी क्वचन मन्दमन्दालसा
क्वचित्स्खलितविह्वला क्वचन फेनिला सारवा ।
पतंत्यपि किल क्वचिद्व्रजति नूपुराह्वा नदी
सुसुन्दरभुजाह्वयं मधु निपीय मत्ता यथा ॥३॥

उदधिगमन्दराद्रिमथिमन्थन लब्धपयो
मधुररसेन्दिराह्व सुधसुन्दरदोःपरिघम् ।
अशरण मादृशात्मशरणं शरणार्थिजन-
प्रवणधियं भजेम तरुषण्डमयाद्रिपतिम् ॥४॥

शशधररिङ्खणाढ्यशिख मुच्छिखरप्रकरं
तिमिरनिभप्रभूत तरुषण्डमयं भ्रमदम् ।
वनगिरि मावसन्त मुपयामि हरिं शरणं
भिदुरितसप्तलोकसुविशृङ्खलशङ्करवम् ॥५॥

यत्तुङ्गशृङ्ग विनिषङ्गिसुराङ्गनानांन्यस्तोर्ध्वपुण्ड्रमुखमण्डन मण्डितानाम्
दर्पण्यभूद्गत मपाङ्कशशाङ्कपृष्ठं तद्धाम सुन्दरभुजस्य महान्वनाद्रिः ॥

यदीयशिखरागतां शशिकलां तु शाखामृगा
निरीक्ष्य हरशेखरीभवन मामृशंतस्ततः ।
स्पृशन्ति न हि देवतांतरसमाश्रितेति स्फुटं
स एष सुमहातरुव्रजगिरिर्गृहं श्रीपतेः ॥७॥

सुन्दरदोर्दिव्याज्ञालम्भनकातरवशानुयायिनी करिणि ।
प्रणयज कलहसमाधि यत्र वनाद्रि स्सएष सुन्दरदोष्णः ॥८॥

स एष सौन्दर्यनिधे धृतश्रियो वनाचलो नाम सुधाम यत्र हि ।
भुजङ्गराजस्य कुलस्य गौरवान्नखण्डिताः कुण्डलिनश्शिखण्डिभिः ॥

वृषगिरिरय मच्युतस्य यस्मिन् स्वमत मलङ्घयितुं परस्परेभ्यः ।
खगपतिचरणौ खगाश्शपंते भुजगपतेर्भुजगाश्च सर्वएव ॥१०॥

हरिकुलमखिलं हनूमदङ्घ्रिं स्वकुलपजाम्बवतस्तथैव भल्लाः ।
निजकुलपजटायुषश्च गृध्रास्स्वकुलपतेश्च गजा गजेन्द्रनाम्नः ॥११॥

वकुळधरसरस्वतीविषक्तस्वररस भावयुतासु किन्नरीषु ।
द्रवति दृषदपि प्रसक्तगानास्विह वनशैलतटेषु सुन्दरस्य ॥१२॥

भृङ्गी गायति हंसतालनिभृतं तत्पुष्णती कोकिला-
प्यूद्गायस्यथवल्लितल्लजमुखादास्रं मधु स्यन्दते ।
निष्पन्दस्तिमिताः कुरङ्गततय श्शीतं शिलासैकतं
सायाह्ने किल यत्र सुन्दरभुजस्तस्मिन्वनक्ष्माधरे ॥१३॥

पीताम्बरं वरद शीतल दृष्टिपात माजनुलम्बिभुज मायतकर्णपाशम् ।
श्रीमन्महावनगिरीन्द्रनिवासदीक्षं लक्ष्मीधरं किमपि वस्तु ममाविरस्तु॥

जनिजीवनाप्ययविमुक्तयो यतो जगतामिति श्रुतिशिरस्सु गीयते ।
तदिदं समस्तदुरितैकभेषजं वनशैलसंभवमहं भजेमहि ॥१५॥

सद्ब्रह्मात्मपदैस्त्रयीशिरसि यो नारायणोक्त्या तथा
व्याख्यातो गतिसाम्यलब्धविषयानन्यत्वबोधोज्वलैः ।
निस्तुल्याधिकमाद्वितीयममृतं तं पुण्डरीकेक्षणं
प्रारूढश्रियमाश्रये वनगिरेः कुंजोदितं सुन्दरम् ॥१६॥

पतिं विश्वस्यात्मेश्वरमिति परं ब्रह्म पुरुषः
परंज्योतिस्तत्त्वं परमिति च नारायण इति ।
श्रुति र्ब्रह्मेशादींस्तदुचितविभूतींस्तु गृणती
यमाहारूढश्री स्स वनगिरिधामा विजयते ॥१७॥

पृथिव्याद्यात्मान्तं नियमयति यस्तत्त्वनिकरं
तदन्तर्यामी तद्वपु रविदित स्तेन्न भगवान् ।
स एष स्वैश्वर्यं न विजहद्दशेषं वनगिरिं
समध्यासीनो नो विशतु हृदयं सुन्दरभुजः ॥१८॥

प्रत्यगात्मनि कदाप्यसंभवद्भूमभूमिमभिवक्ति यं श्रुतिः ।
तं वनाद्रिनिलयं सुसुन्दरं सुन्दरायतभुजं भजामहे ॥१९॥

वन्देय सुन्दरभुजं भुजगेन्द्रभोगसक्तं महावनगिरिप्रणयप्रवीणम् ।
यं तं विदुर्दहर मष्टगुणोपजुष्टमाकाशमौपनिषदीषु सरस्वतीषु ॥२०॥

यत्स्वायत्तस्वरूपस्थितिकृतिकनिजेच्छानियाम्यस्वशेषा-
नंताशेष प्रपंच स्तत इह चिदिवाचिद्वपुर्वाचिशब्दैः ।
विश्वैश्शब्दैः प्रवाच्यो हतवृजिनतया नित्यमेवानवद्य-
स्तं वंदे सुन्दराह्वं वनगिरिनिलयं पुण्डरीकायताक्षम् ॥२१॥

गुणजं गुणिनो हि मङ्गलत्वं प्रमितं प्रत्युत यत्स्वरूपमेत्य ।
तमनंतसुखावबोधरूपं विमलं सुन्दरबाहु माश्रयामः ॥२२॥

अतिपतितावधि स्वमहिमानुभवप्रभव-
स्सुखकृतनिस्तरङ्गजलधीयितनित्यदशम् ।

प्रतिभटमेव हेयनिकरस्य सदाऽप्रतिमं
हरिमिह सुन्दराह्व मुपयामि वनाद्रितटे ॥२३॥

सदा षाड्गुण्याख्यैः पृथुलबलविज्ञानशकन
प्रभावीर्यैश्वर्यैरवधिविधुरैरेधितदशम् ।
द्रुमस्तोमक्ष्माभृत्परिसरमहोद्यानमुदितं
प्रपद्येऽध्यारूढश्रिय मिममहं सुन्दरभुजम् ॥२४॥

सौशील्याश्रितवत्सलत्व मृदुतासौहार्द साम्यार्जवै-
र्धैर्य स्थैर्यसुवीर्य शौर्य कृतिता गांभीर्य चातुर्यकैः ।
सौन्दर्यौचित सौकुमार्य समता लावण्य मुख्यै र्गुणै-
र्देव श्श्रीतरुषण्डशैलनिलयो नित्यं स्थितस्सुन्दरः ॥२५॥

येष्वेकस्य गुणस्य विप्रुडपि वै लोकोत्तरं स्वाश्रयं
कुर्या त्तादृशवैभवै रगणितै र्निस्सीमभूमान्वितैः ।
नित्यै र्दिव्यगुणै स्ततोऽधिकशुभस्यैकास्पदात्माश्रयै-
रित्थं सुन्दरबाहुमस्मि शरणं यातो वनाद्रीश्वरम् ॥२६॥

सदा समस्तं जगदीक्षते हि यः प्रत्यक्ष दृष्ट्या युगपद्ध्रुवा स्वतः ।
स ईदृशज्ञाननिधिर्निधिस्तु नरसिंहाद्रिकुंजेषु चकास्ति सुन्दरः ॥

ऐश्वर्यतेजोबलवीर्यशक्तयः कीदृग्विधास्सुंदरबाहु संश्रयाः ।
योऽसौ जगज्जन्मलयस्थिति क्रियास्सङ्कल्पतोऽल्पादुपकल्पयत्यजः ॥

यत्कल्पायुत भोगतोऽपि कृशतां यायान्न तावत्फलं
येष्वेकस्य तथाविधै स्सततजै रंहोभि रुत्सीमभिः ।

अस्तादाविह संसृतावुपचितै श्छन्नं सुसन्नं जनं
सन्नत्या क्षमते क्षणाद्वनगिरिप्रस्थाप्रियस्सुंदरः ॥२९॥

यज्जातीयो यादृशो यत्स्वभावः पादच्छायां संश्रितो योऽपि कोऽपि।
तज्जातीयस्तादृशस्तत्स्वभावश्शिक्ष्यत्येनं सुंदरो वत्सलत्वात् ॥३०॥

निहीनो जात्या वा भृशमकुशलैर्वा स्वचरितैः
पुमान्वै यः कश्चिद्बहुतृणमपि स्यादगुणतः ।
भजन्तं तं पश्येद्भुजगपतिना तुल्यमपि यो
वनाद्रिप्रस्थस्थस्स मम शरणं सुंदरभुजः ॥३१॥

एकैकमंगळगुणानुभवाभिनन्दमोहाक्रियानिति च सुंदरदोष्णि कृष्णे ।
ते ये शतं त्विति नियंतुमनाश्श्रुतिर्हि नैवैष वाङ्मनसगोचर इत्युदाह ॥

अब्जपादमरविंदलोचनं पद्मपाणितलमंजनप्रभम् ।
सुन्दरोरुभुजमिन्दिरापतिं वन्दिषीय वरदं वनाद्रिगम् ॥३३॥

कनकमरतकांचन द्रव्याणां मथनसमुत्थितसारमेलनोत्थम् ।
जयति किमपि रूपमस्य तेजो वनगिरिनंदनसुन्दरोरुबाहोः ॥३४॥

किन्नु स्वयं स्वात्मविभूषणं भवन्नसावलङ्कार इतीरितो जनैः ।
वर्धिष्णुबालद्रुमषण्डमण्डितं वचनाचलं वा परितः प्रसाधयन् ॥३५॥

सुखस्पर्शैर्नित्यैः कुसुमसुकुमारांगसुखदै-
स्सुसौगंध्यैर्दिव्याभरणगणदिव्यायुधगणैः ।
अलङ्कार्यैं स्सर्वैं र्निगदित मलङ्कार इति य-
स्समाख्यानं धत्ते स वनगिरिनाथोऽस्तु शरणम् ॥३६॥

मकुटमकुटमालोत्तंसचूडाललाम-
स्वलकतिलकमाला कुण्डलै स्सोर्ध्वपुंड्रैः ।
मणिवरवनमालाहारकेयूरकण्ठ्यै-
स्तुलसिकटककाञ्चीनूपुराद्यैश्च भूषैः ॥२७॥

असिजलजरथांगेशशार्ङ्गकौमोदकीभ्या-
मगणितगुणजालैरायुधे रप्यथान्यैः ।
सततविततशोभं पद्मनाभं वनाद्रि-
कृतवनसुखलीलं सुंदरं वन्दिषीय ॥३८॥

आजानजस्वगनबन्धुरगंधलुब्धभ्राम्यद्विदग्धमधुपालिसदेशकेशम् ।
विश्वाधिराज्यपरिबर्हकिरीटराजं हे सुंदरस्य बत सुंदरमुत्तमाङ्गम् ॥

अन्धं तमस्तिमिरानिर्मितमेव यत्स्या-
त्तत्सारसाधितसुतन्त्वतिवृत्तवार्तम् ।
ईशस्य केशव गिरेरळकाळिजालं
तत्तुल्यकुल्यमधुपाढ्यमहावनस्य ॥

जुष्टाष्टमीकज्वलदिन्दुसान्निभं धृतोर्ध्वं पुण्ड्रं विलसद्विशेषकम् ।
भूम्रा ललाटं विपुलं विराजते वनाद्रिनाथस्य समुच्छ्रितश्रियः ॥

सुचारु चापद्वय विभ्रमं भ्रुवोर्युगं सुनेत्राह्वसहस्रपत्रयोः ।
उपांतगं वा मधुपावलीयुगं विराजते सुंदरबाहु संश्रयम् ॥४२॥

अदीर्घमप्रेमदुघं क्षणोज्वलं नचोर मंतःकरणस्य पश्यताम् ।
अनुब्जमब्जं नु कथं निदर्शनं वनाद्रिनाथस्य विशालयोर्दृशोः ॥

प्रश्च्योतत्प्रेमसारामृतरसचुळकप्रक्रमप्राक्रियाभ्याम्
निक्षिप्तालोकितोर्मिप्रसरणमुषितस्वांतकान्ताजनाभ्याम् ।
विश्वोत्पत्ति प्रवृत्तिस्थिति लयकरणैकांतशान्तक्रियाभ्यां
देवोऽलङ्कारनामा वृषगिरिनिलयो वीक्षतामीक्षणाभ्याम् ॥४४॥

प्रेमामृतौघपरिवाहिमहाक्षिसिन्धु-
मध्ये प्रबद्धसमुदञ्चितसेतुकल्पा ।
ऋज्वी सुसुन्दरभुजस्य विभाति नासा
कल्पद्रुमांकुरनिभा वनशैलभर्तुः ॥

व्याभाषिताभ्यधिकनन्दनमन्दनार्घिमंदस्मितामृतपरिस्रवसंस्तवाढ्यम् ।
आभाति विद्रुमसमाधरमास्यमस्य देवस्य सुंदरभुजस्य वनाद्रिभर्तुः॥

यशोदांगुल्यग्रोन्नमितचुबुकाघ्राणमुदितौ
कपोलावद्यापि ह्यनुपरत तद्धर्ष गमकौ ।
विराजेते विष्वग्वितत सहकारासवरस
प्रमाद्यद्भृंगाढ्यद्रुमवनगिरेस्सुंदरहरेः ॥४७॥

व्यालम्बिकुण्डलमुदग्रसुवर्णपुष्पनिष्पन्नकल्पलतिकायमळानुकारम् ।
यत्कर्णपाशयुगळं निगळं धियां न स्सोऽयं सुसुंदरभुजो वनशैलभूपा ॥

सदंससंसंजितकुंडळान्तिकावतीर्णकर्णाभरणाढ्यकन्धरः ।
सुबन्धुरस्कन्धनिबन्धनो युवा सुसुंदरस्सुंदरदोर्विराजते ॥४९॥

व्यूढगूढ भुजजत्रुमुल्लसत्कम्बुकन्धरधरं धराधरम् ।
वृक्षषण्डमयभूभृतस्तटे सुंदरायतभुजं भजामहे ॥५०॥

मंदरभ्रमणविभ्रमोद्भटास्सुंदरस्य विलसन्ति बाहवः ।
इन्दिरासमभिनंदभन्दना श्चंदनागरुविभूषभूषिताः ॥५१॥

ज्याकिणांकपरिकर्मधर्मिणो भान्ति सुंदरभुजस्य बाहवः ।
पारिजातविटपायितर्धयः प्रार्थितार्थपरिदानदीक्षिताः ॥५२॥

सागराम्बरतमालकाननश्यामलर्धय उदारपीवराः ।
शेषभोगपरिभोगभागिन स्तान्निभावनागेरीशितुर्भुजाः ॥५३॥

अहमहमिकाभाजो गोवर्धनोद्धातिनर्माणि
प्रमथनविधा वब्धेर्लब्धप्रबन्धसमक्रियाः ।
अभिमतबहूभावाः कान्ताभिरंभणसंभ्रमे
वनगिरिपते र्बाहा श्शुंभन्ति सुंदरदोर्हरेः ॥५४॥

श्रीमद्वनाद्रिपतिपाणितलाब्जयुग्म मारूढयोर्विमलशङ्खरथाङ्गयोस्तु ।
एकोऽब्जमाश्रित इवोत्तमराजहंसः पद्मप्रियोऽर्कइव तत्समितो द्वितीयः

लक्ष्म्याः पदं कौस्तुभसंस्कृतं च श्रीवत्सभूमिर्विमलं विशालम् ।
विभाति वक्षो वनमालयाऽऽढ्यं वनाद्रिनाथस्य सुसुंदरस्य ॥५६॥

सौन्दर्यामृत सारपूरपरिवाहा वर्तगर्तायितं
यातः किञ्च विरिञ्चि सम्भवनभूम्यम्भोजसम्भूतिभूः ।
नाभि श्शुम्भति कुम्भिकुम्भनिभ निर्भातस्तन स्वर्वधू-
सम्भुक्त द्रुमषण्डशैलवसते रारूढलक्ष्म्या हरेः ॥५७॥

सुंदरस्य किल सुंदरबाहोश्श्रीमहातरुवनाचलभर्तुः ।
हन्त यत्र निवसन्ति जगन्ति प्रापितकृशिमतत्तनुमध्यम् ॥५८॥

पिष्टदुष्टमधुकैटभकीटौ हस्तिहस्तयुगळाभसुवृत्तौ ।
राजतः क्रमकृशौ च सदूरू सुंदरस्य वनभूधरभर्तुः ॥५९॥

यौवनवृषककुदोद्भेद निभं नितरां भाति विभोरुभयं जानु शुभाकृतिकम् ।
सुंदरभुजनाम्नो मन्दरमथिताब्धेश्चंदनवनविलसत्कंदरवृषभपतेः ॥

अधोमुखन्यस्तपदारविंदयोरुदंचितोदात्तसुनाळसन्निभे ।
विलंघ्य जंघे क्वनु रंहतो दृशौ वनाद्रिनाथस्य सुसुंदरस्य मे ॥६१॥

सुसुंदरस्यास्य पदारविंदे पादारविंदाधिकसौकुमार्ये ।
अतोऽन्यथा ते बिभृयात्कथं नु तदासनं नाम महस्रपत्रम् ॥६२॥

सौंदयमार्दवसुगंधरसप्रवाहैरेते हि सुंदरभुजस्य पदारविंदे ।
अम्भोजडम्भपरिरम्भणमभ्यजैष्टां तद्धि पराजित मिमे शिरसा बिभर्ति॥

एते ते बत सुंदराह्वयजुषः पादारविन्दे शुभे
यन्निर्णेज समुत्थितत्रिपथगास्रोतस्सु किंचित्किल ।
धत्तेऽसौ शिरसा ध्रुवस्तदपरं स्रोतो भवानीपति-
र्यस्यास्याळकनंदिकेति निजगुर्नामैवमन्वर्थकम् ॥६४॥

आम्नायकल्पलतिकोत्थसुगंधि पुष्पं योगीन्द्रहार्दसरसीरुहराजहंसम ॥
उत्पक्वधर्म सहकारफलप्रकांडं वंदे सुसुन्दरभुजस्य पदारविंदम् ॥

सुसुंदरस्यास्य तु वामनाकृतेः क्रमत्रयप्रार्थिनि मानसे किल ।
इमे पदे ताव दिहासहिष्णुर्नाविचक्रमाते त्रिजगत्पदद्वये ॥६६॥

सौन्दर्यसारामृत सिंधुवीचिश्रेणीषु पादांगुळिनामिकासु ।
न्यक्कृत्य चन्द्र श्रिय मात्मकान्त्या नखावळी शुंभति सुंदरस्य ॥

योजातकाशिमा मली च शिरसा संभावितश्शम्भुना
सोऽयं यच्चरणाश्रयी शशधरो नूनं नखव्याजतः ।
पूर्णत्वं विमलत्वमुज्वलतया सार्धं बहुत्वं तथा
यातस्तं तरुषण्डशैलनिलयं वंदामहे सुंदरम् ॥६८॥

यस्याः कटाक्षणमनुक्षण मीश्वराणा-
मैश्वर्यहेतुरिति सार्वजनीनमेतत् ।
श्रीस्सेति सुंन्दरनिषेवणतो निराहु-
स्त्वां हि श्रियश्श्रिय मुदाहुरुदारवाचः ॥६९॥

दिव्याचिन्त्यमहाद्भुतोत्तमगुणै स्तारुण्यलावण्यक-
प्रायै रद्भुत भावगर्भसतता पूर्वप्रियै र्विभ्रमैः ।
रूपाकारविभूतिभिश्च सदृशीं नित्यानपेतां श्रियं
नीळां भूमिं मपीदृशीं रमयिता नित्यं वनाद्रीश्वरः ॥७०॥

अन्योन्यचेष्टितनिरीक्षणहार्दभाव प्रेमानुभावमधुर प्रणयप्रभावः ।
आजन्मनव्यतरदिव्यरसानुभूतिस्त्वां प्रेयसीं रमयिता वनशैलनाथः ॥

सुंदरस्य वनशैलवासिनो भोगमेव निजभोगमाभजन् ।
शेष एष इति शेषताकृतेः प्रीतिमानहिपतिस्स्वनामनि ॥७२॥

वाहनासनवितानचामराद्याकृतिः खगपतिस्त्रयीमयः ।
नित्यदास्यरतिरेव यस्य वै ह्येष सुंदरभुजो वनाद्रिगः ॥७३॥

वनाद्रिनाथस्य सुसुंदरस्य वै प्रभुक्तशिष्टाश्यथ सैन्यसत्पतिः ।
समस्तलोकैकधुरंधरस्सदा कटाक्षवीक्षोऽस्य च सर्वकर्मसु ॥७४॥

छत्र चामरमुखाः परिच्छदास्सूरयः परिजनाश्च नैत्यगाः ।
सुंदरोरुभुजमिंधते सदा ज्ञानशक्तिमुख नित्यसद्गुणाः ॥७५॥

द्वारनाथगणनाथतल्लजाः पारिषद्यपदभागिनस्तथा ।
मामकाश्च गुरवः पुरातनास्सुंन्दरं वनमहीध्रगं श्रिताः ॥७६॥

ईदृशैः परिजनैः परिच्छदैर्नित्यसिद्ध निजभोग भूमिगः ।
सुंन्दरो वनगिरेस्तटेषु वै रज्यते सकलदृष्टिगोचरः ॥७७॥

आक्रीडभूमिषु सुगंधिषु पौष्पिकीषुवैकुंठधामानि समृद्धिषु वापिकासु ।
श्रीमल्लतागृहवतीषु यथा तथैव लक्ष्मीधरस्सजति सिद्धगिरेस्तटीषु ॥

आनंदमन्दिरमहामाणिमंटपान्त-
र्लक्ष्म्या भुवाप्यहिपतौ सह नीळया च ।
निस्संख्यनित्यनिजदिव्यजनैकसेव्यो
नित्यं वसन् सजाति सुंदरदोर्वनाद्रौ ॥७९॥

प्रत्यर्थिनि त्रिगुणक प्रकृते रसीम्नि वैकुंठधामानि पराम्बरनाम्नि नित्ये।
नित्यं वसन्परमसत्वमये‌ऽप्यतीतयोगीन्द्र वाङ्मनस एष हरिर्वनाद्रौ॥

लोकांश्चतुर्दश दधत्किल सुंदरस्य
पङ्क्तीगुणोत्तरित सप्तवृतीदमण्डम् ।
अंडानि चास्य सुसदृंशि परश्शतानि
क्रीडाविधेरिह परिच्छदतामगच्छन ॥८१॥

सुरनरतिर्यगादिबहुभेदकभिन्नमिदं
जगदथ चांडमंडवरणानि च सप्त तथा ।

गुणपुरुषौ च मुक्तपुरुषाश्च वनाद्रिपते-
रुपकरणानि नर्मविधये विभजंति विभोः ॥८२॥

ज्ञानिनस्सततयोगिनस्तु ये सुंदराङ्घ्रिपरभक्तिभागिनः ।
मुक्तिमाप्य परमां परे पदे नित्यकिङ्करपदं भजन्ति ते ॥८३॥

देवस्य सुंदरभुजस्य वनाद्रिभर्तुर्हि शीलवत्व मथवाऽश्रितवत्सलत्वम् ।
ऐशस्वभाव मजहद्भिरिहावतारैर्योऽलंचकार जगदाश्रिततुल्यधर्मा ॥

सिद्धाद्रिनाथ तव वाङ्मनसातिवृत्तं
रूपं त्वतीन्द्रियमुदाह रहस्यवाणी ।
एवं च न त्वमिह चे त्समवातरिष्य-
स्तद्ज्ञानभक्ति विधयोऽद्य मुधाऽभविष्यन् ॥८५॥

ये भक्ताभव देकभोगमनसोऽनन्यात्मसंजीवना-
स्तत्संश्लेषणतद्विरोधिनिधनाद्यर्थं वनाद्रीश्वर ।
मध्येऽण्डं यदवातरस्सुरनराद्याकारदिव्याकृति-
स्तेनैव त्रिदशैर्नरैश्च सुकरं स्वप्रार्थितप्रार्थनम् ॥८६॥

श्रीमन्महावनगीरीश विधीशयोस्ते-
मध्येतु विष्णुरिति यः प्रथमावतारः ।
तेनैव चेत्तव महिम्नि जनाः किलान्धा-
स्त्वन्मतस्वभाव मवगम्य कथम्भजेयुः ॥८७॥

हे देव सुन्दरभुज त्व मिहाण्डमध्ये
सौलभ्यतोऽपि सदृशं चरितं महिम्नः ।

अङ्गीकरोषि यदि तत्र सुरैरमीभि-
स्साम्यान्निकर्षे परिपालनमेव साधु ॥८८॥

इहावतीर्णस्य वनाद्रिनाथ ते निगूहतस्त्वं महिमानमैश्वरम् ।
उमापतेः किं विजयः प्रियङ्करः प्रियङ्करा वेन्द्रजिदस्त्रबन्धना ॥

पुच्छोत्पुच्छनमूर्छनोद्धति धुतव्यावर्तितावर्तव
त्संवर्तार्णव नीरपूरविलुठत्पाठीन दिव्याकृतैः ।
सिह्माद्रीशन वैभवन्तवकथं स्वालक्ष्मालक्ष्यते
पद्माक्षस्य जुगुक्षतोऽपि विभवं लक्ष्मीधराधोक्षज ॥९०॥

साचलावटतटाकदीर्घिका जान्हवीजल विवर्धितःक्षये ।
शृङ्गसङ्गमित नौर्मनोरभू रग्रतोऽण्डजवपुर्हिसुन्दर ॥९१॥

प्रळयजनीरपूर परिपूरित स्वानिलयावसन्नवदन-
भ्रमदशरण्यभूत शरणार्थिनाकिशरणम्भवन्स्वकृपया ।
चलदुदधीरिताम्बुकलुषी क्रियात्व्यगमनस्वपृष्ठविधृता
चलकुल एषमीनतनुरत्र सुन्दरभुजोवनाद्रिनिलयः ॥९२॥

स्वपृष्ठेपृष्ठाद्रिभ्रमणकरणैः किंचफाणिनो
विकृष्टिव्याकृष्टिव्यतिविधुतदुग्धाब्धिचलितैः ।
अविस्पन्दोनन्दन्विकसदरविन्देक्षणरुचिः
पुराभूस्सिह्माद्रेःप्रियतमहरे कच्छपवपुः ॥९३॥

जगत्प्रलीनेपुनरुद्दिधीर्षत स्सिंहक्षितिक्षिन्निलयस्थसुन्दर ।
पुरावराहस्य तवेय मुर्वरा दंष्ट्राह्वयेन्दोःकिललक्ष्मलक्षिता ॥९४॥

नवायुः पस्पन्देययतु रथवास्तंशाशिरवी
दिशोऽनश्यन्विश्वाप्यचलदचलासाचलकुला ।
नभश्चप्रश्चयोति कथितमपिपार्थो नरहरौ
त्वयिस्तम्भे शुम्भद्वपुषिसतिहेसुन्दरभुज ॥९५॥

अराळंपाताळंत्रिदशनिलयःप्रापितलयो
धरित्रीनिर्धूता ययुरपिदिशःकामपिदिशम् ।
अजृम्भिष्टांभोधिर्घुमुघुमितिघूर्णन्सुरारिपो-
र्विभिन्दाने वक्षस्त्वयिनरहरौ सुन्दरभुज ॥९६॥

नखक्रकचकप्रथिक्रथितदैत्यवक्षस्थली-
समुत्थरुधिरच्छटा च्छुरिताविंबितंस्वंवपुः ।
विलोक्यरुषितःपुनःप्रतिमृगेन्द्रशङ्कावशा-
द्यएषनरकेसरीसइह दृश्यतेसुन्दरः ॥९७॥

क्षितिरियं जनिसंहृतिपालनै र्निगिरणो द्विरणोद्धरणैरपि ।
वनगिरीश तवैव सतीकथं वरदवामन भिक्षणमर्हति ? ॥९८॥

भार्गवःकिलभवन्भवान्पुरा कुन्दसुन्दर वनाचलेश्वर ।
अर्जुनस्य बलदर्पितस्य तुच्छेत्स्यतिस्मरति बाहुकाननम् ॥९९॥

आज्ञातवात्रभवती विदितात्रयीसा धर्मन्तदुक्तमखिलेन वनाद्रिनाथ ।
अन्यूनमाचरितु मास्तिकशिक्षणार्थ मत्रावतीर्यकिल सुन्दरराघवोऽभूः॥

वनगिरिपति रीशितेति देवै स्त्रिपुरहरात्रिपुरघ्न चापभङ्गात् ।
व्यगणिपरशुरामदर्शितस्य स्वकधनुषः परिमर्शदर्शनाच्च ॥१०१॥

अनवाप्त मत्रकिललिप्स्यतेजनैर्नचलब्धमेतदिह भोक्तुमिष्यते ।
अनवाप्तमत्रकिल नास्तिरामत ज्जगति त्वया तृण मैवक्षि सुन्दर ॥

शिखरिषु विपिनेष्वप्यापगास्वच्छतोया-
स्वनुभवसिरसञ्ञोदण्डकारण्यवासात् ।
तदिहतदनुभूतौ साभिलाषोऽद्यराम
श्रयसिवनगिरीन्द्रं सुन्दरीभूयभूयः ॥१०३॥

उपवन तरुषण्डैर्मण्डिते गण्डशैल-
प्रणयिभवदुदन्तो द्रायिगन्धर्वसिद्धे ।
वनगिरि तटभूमि प्रस्तरे सुन्दरत्वं
भजसि नु मृगयानानुद्रवश्रान्तिशान्तिम् ॥१०४॥

कूलेऽब्धेःकिलदक्षिणस्य निवसन्दूरोत्तराम्भोधिगान्
दैत्यानेकपतत्रिणाच्छिन्न इतीयं किंवदन्तीश्रुता ।
तत्रैवेश्वरमम्भसां व्यजयथास्तस्माद्वनाद्रीश्वर
श्रीमन्सुन्दरसेतुबन्धनमुखाः क्रीडास्तवाडम्बरम ॥१०५॥

रघुकुलतिलकत्वं जातुचिद्यातुधान-
च्छलमृगमृगयायांसम्प्रसक्तः पुराऽभूः ।
तदुपजनितखेदच्छेदनायाद्यगाय-
न्मधुकरतरुषंडं रञ्यसेकिंवनाद्रिम् ? ॥१०६॥

हेसुन्दरैकतरजन्मनि कृष्णभावे द्वेमातरौ च पितरौच कुले अपिद्वे ।
एकक्षणादनुगृहीतवतःपरन्ते नीळाकुलेन सदृशीतव रुक्मिणीच ॥

त्वंहिसुन्दरयथास्तनन्धयः पूतनास्तनमधास्तदानुकिम् ।
जीर्णमेवजठरेपयोविषं दुर्जरंवदतदात्मनासह ॥१०८॥

आश्रितेषु सुलभोभवन् भवान् मर्त्यतां यदिजगामसुन्दर ।
अस्तु नाम तदुलूखले किय द्दामबद्धइति किं तदारुदः? ॥१०९॥

सुंदरोरुभुजनंदनंदन स्त्वंभवान्भ्रमरविभ्रमालकः ।
मन्दिरेषु नवनीततज्जं वल्लवीधिय मुतव्यचूचरः ॥११०॥

काळियस्यफणतांशिरस्तुमे सत्कदंब शिखरत्वमेयवा ।
वष्टिजुष्टवन शैलसुंदर त्वत्पदाब्जयुगमर्पितंययोः ॥१११॥

गूहितस्य महिमापि सुंदर त्वं व्रजेकिमिति शक्रमाक्रमीः ।
सप्तरात्रमधधाश्चकिं गिरिं पृच्छतश्चसुहृदः किमक्रुधः? ॥११२॥

हेनंदनंदन सुसुंदरसुंदराङ्ग बृन्दावनेविहरत स्तववल्लवीभिः ।
वेणुध्वनिश्रवणतस्तरुभिस्सदावै सप्रावभि जंतुविलाय महो विलिल्ये ॥

गायंगायंवनगिरिपतेस्त्वंहिबृंदावनांत-
गोपीसंघैर्विहरसियदा सुंदरव्यूढबाहो ।
रासारंभोत्सवबहुरस प्रेमसीमन्तिनीनां
चेतश्चेतस्तवचतुतदाकांदशामन्वभूताम् ? ॥११४॥

इंगितं निमिषितंच तावकं रम्यमद्भुतमति प्रियंकरम् ।
तेनकंसमुखकीट शासनं सुंदराल्पक मपिप्रशस्यते ॥११५॥

वाराणसीदहन पौण्ड्रक भौमभंग कल्पद्रुमाहरण शंकरजृम्भणाद्याः ।
अन्याश्चभारतबलक्कथनादयस्ते क्रीडास्सुसुंदर भुजश्रवणामृतानि ॥

त्वंहिसुंदरवनाद्रिनाथ ते वेंकटाह्वय महीध्रमूर्धनि ।
देव सेवितपदाम्बुजद्वय स्संश्रतेभ्य इह तिष्ठसेसदा ॥११७॥

हस्तिशैलनिलयो भवन्भवान् सांप्रतं वरदराजसाह्वयः ।
इष्टमर्थ मनुकंपयादधद्विश्वमेत्र दयसेहि सुंदर ॥११८॥

मध्येक्षीरपयोधि शेषशयने शेषेसदासुन्दर
त्वं तद्वैभवमात्मनोभुविभवद्भक्तेषुवात्सल्यतः ।
विश्राण्याखिलनेत्रपात्रमिहसन्सह्योद्भवायास्तटे
श्रीरंगे निजधाम्नि शेषशयने शेषेवनाद्रीश्वर ॥११९॥

कल्कीभविष्यन्कलिकल्कदूषितान् दुष्टानशेषान्भगवन्नहानिष्यसि ।
सएषतस्यावसरस्सुसुंदर प्रशाधिलक्ष्मीश समक्षमेवनः ॥१२०॥

ईदृशास्त्वदवतारसत्तमा स्सर्वएवभवदाश्रितान् जनान् ।
त्रातुमेवनकदाचिदन्यथा तेनसुंदर भवन्तमाश्रये ॥१२१॥

त्वामामनन्तिकवयः करुणामृताब्धिं
त्वामेवसंश्रितजनिघ्न मुपघ्न मेषाम् ।
एषांत्रजन्निहहिलोचन गोचरत्वं
हेसुन्दराह्वपरिचस्करिषेवनाद्रिम् ॥१२२॥

अशक्यंनोकिंचित्तव नचनजानासि निखिलं
दयालुः क्षन्ताचास्यहमपिचनागांसितरितुम् ।
क्षमोऽतस्त्वंचैष ह्यगतिरितिच क्षुद्रइतिच
क्षमस्वैतावन्नोबलमिहहरे सुन्दरभुज ॥१२३॥

लङ्कायुद्धहतान्हरीन् द्विजसुतं शम्बूकदोषान्मृतं
सान्दीपन्यभिजं मृतं द्विजसुतान् बालांश्चवैकुण्ठगान् ।
गर्भेचार्जुनिसम्भवं व्युदधर स्वेनैवरूपेणय-
स्त्वाभीष्टं ममभद्ररोश्वददमेतोकिं वनाद्रीश्वर ? ॥१२४॥

आयोध्यगान्सपशुकीटतृणांस्तुजन्तून्
किंकर्मणोनुव्रतकीदृशवेदनाढ्यान् ।
सायुज्यलभ्यत्रिभवान्निजनित्यलोका-
न्सांतानिका नगभयो वनशैलनाथ ॥१२५॥

हरितवारणभूयसभाह्वयं करिगिरौवरद स्त्वमपूर्विकाम् ।
दृश मलम्भय एहि सुन्दर स्फुटमदाश्वपरश्शतमीदृशः ॥१२६॥

इहचदेव ददासिवरान्परान् वरद सुन्दरसुन्दरदोर्धर ।
वनगिरेरभितस्तटमावसान्निखिललोचनगोचरवैभवः ॥१२७॥

इदमिमेश्शृणुमामलयध्वजं नृपमिहस्वयमेवहिसुन्दर ।
चरणसात्कृतवानितितद्वयं वनगिरीश्वरजातमनोरथाः ॥१२८॥

विज्ञापनां वनगिरीश्वर सत्यरूपा मङ्गीकुरुष्वकरुणार्णवमामकीनाम् ।
श्रीरङ्गधामनि यथापुर मेषसोऽहं रामानुजार्यवशगःपरिवर्तिषीय ॥

किञ्चेदञ्चविरिञ्चिभावन वनाद्रीशप्रभोसुन्दर
प्रत्याख्यानपराङ्मुखोवरदतां पश्यन्नवश्यंशृणु ।
श्रीरङ्गश्रियमन्वहंप्रगुणयंस्त्वद्भक्तभोग्यांकुरु
प्रत्यक्षंसुनिरस्तमेवविदधत्प्रत्यर्थिनांप्रार्थनम् ॥१३०॥

कृष्णामृतवारिधे वृषपते हंसत्यसङ्कल्पन
श्रीमत्सुन्दरयोग्यताविरहितानुत्सार्यसद्वत्सल ।
श्राम्यन्साधुजनैः कृतांस्तुनिखिला नेवापचारान्क्षणा-
द्भाग्यामनिशङ्कुरुष्वभगवन् श्रीरङ्गधामाश्रियम् ॥१३१॥

इत्थंभूयोभूयः पुनरपिच भूयःपुनरपि
स्फुटंविज्ञाप्स्यामीत्यगति रबुधोऽनन्यशरणः ।
कृतागा दुष्टात्मा कलुषमति रस्मीत्यनवधे-
र्दयायास्तेपात्रं वनगिरिपते सुन्दरभुज ॥१३२॥

इति हरितकुलतिलक श्रीरामिश्र सोमसुत्सूनो श्रीरंगराज दिव्याज्ञालब्ध
पराङ्कुशपरनामधेयस्य श्रीवत्सांकस्य कूराधिनाथस्य कृतिषु
श्रीसुन्दरबाहुस्तव स्सम्पूर्णः ॥

## ॥ देहळीशस्तुतिः ॥

श्रीमान्वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥

विक्रम्य येन विजितानि जगन्ति भूम्ना
विश्वस्य यं परमकारणमामनन्ति ।
विश्राणयन्प्रणयिनां विविधान्पुमर्थान्
गोप्ता स मे भवतु गोपपुराधिराजः ॥१॥

देहळ्यधीश्वर तवेदृशमीश्वरत्वं तुष्टूषतां दिशति गद्गदिकानुबन्धम् ।
वाचालयस्यथ च मां क्वचन क्षपायां क्षान्तेन दान्तकविमुख्यविमर्दनेन॥

त्वच्चक्रवद्दुतमनेहसि घूर्णमाने निम्नोन्नतक्रमनिदर्शितनेमिवृत्ताः
आराध्य गोपनगरे कृपयोदितं त्वां स्वाराज्यमग्र्यमलभन्त सुरासुरेन्द्राः॥

आकल्पपुष्पसुभगोन्नतबाहुशाखः
पादे सदा परिपचेलिमसत्फलस्त्वम्
पण्णातटस्पृशि मृकण्डुतपोवनेऽस्मिन्
छायनिलीनभुवनोऽसि तमालशाखी ॥४॥

चक्रस्य दैत्यदनुजादिषु वामभावं शङ्खस्य चाश्रितजनेष्वपि दक्षिणत्वम्॥
व्यक्तं प्रदर्शयसि गोपपुराधिराज व्यत्यस्य नूनमनयोः करसंप्रयोगम् ।

दीपेन केनचिदशीतरुचा निशीथे स्नेहोपपन्नपरिशुद्धगुणार्पितेन ।
दृष्ट्वावकाशनिबिडं ददृशुर्भवन्तं स्वाध्याययोगनयनाः शुचयः कवीन्द्राः॥

कासारपूर्वकविमुख्यविमर्दजन्मा पण्णातटेक्षुसुभगस्य रसो बहुस्ते ।
त्वत्पादपद्ममधुनि त्वदनन्यभोग्ये नूनं समाश्रयति नूतनशर्करात्वम्॥

वैरोचनेः सदसि वामनभूमिकावान्
विक्रान्तिताण्डवरसेन विजृम्भमाणः ।
चक्रे भवान्मकरकुण्डलकर्णपाशः
श्यामैकमेघभरितामिव सप्तलोकीम् ॥८॥

चित्रं न तत्त्रिषु मितानि पदेषु धत्ते
विश्वान्यमूनि भुवनानि विशङ्कटेषु ।
भक्तैः समं क्वचिदसौ भवनैकदेशे
माति स्म मूर्तिरमिता तदिहाद्भुतं नः ॥ ॥९॥

…प्रिय त्वयि तथा परिवर्धमाने मुक्तावितानविततिस्तव पूर्वमासीत् ।
…वलिः परमथो रशनाकलापस्तारागणस्तदनु मौक्तिकनूपुरश्रीः ॥

…भ्रोचितं प्रकटयन्प्रथमाश्रमत्वं
…गाजिनं यवनिकां कृतवान्प्रियायाः ।
…व्यक्ताकृतेस्तव समीक्ष्य भुजान्तरे तां
त्वामेव गोपनगरीश जना विदुस्त्वाम् ॥११॥

…कुर्वतां तव पदं चतुराननत्वं पादोदकं च शिरसा वहतां शिवत्वम् ।
एकत्र विक्रमणकर्मणि तद्द्वयं ते देहळ्यधीश युगपत्प्राथितं पृथिव्याम् ॥

भ…ोपरोधसह पादसरोजतस्ते मन्दाकिनी विगळिता मकरन्दधारा ।
…स्त्रिवर्गमपवर्गमपि क्षरन्ती पुण्या बभूव पुरशासनमौळिमाला ॥

त्रि…ान्तिकेतुपटिका पदवाहिनी ते
…न्य स्वन्त्युपैति नतजीवित शिंशुमारम् ।
…तानपादिममृतांशुमशीतभानुं
हे…ाचलं पशुपतिं हिमवन्तमुर्वीम् ॥१४॥

वे…ःकमण्डलुजलैर्विहितार्चनं ते पादाम्बुजं प्रतिदिनं प्रतिपद्यमाना ।
…त्रप्रिय त्रिपथगादिसरिद्वराणां पण्णा बभूव भुवने बहुमानपात्रम् ॥

स्व…च्छन्दविक्रमसमुन्नमितादमुष्मात्स्रोतस्त्रयं यदभवत्तव पादपद्मात् ।
वे…ळभूतसरसामपदिश्य वाचं प्रायेण तत्प्रसवभूमिमवाप भूयः ॥

…ापरेण भवता विहितोपरोधानाराधकाननुपरोधमुदञ्चयिष्यन् ।
तारेण पादनखरेण तदाण्डमध्ये घण्टापथं कमपि नूनमवर्तयस्त्वम् ॥

कामाविलेऽपि करुणार्णवबिन्दुरेकः क्षिप्तः स्वकेळितरसा तव देहळीश।
तत्संततेरुभयथा विततिं भजन्त्याः संसारदावदहनं शमयत्यशेषम् ॥

नीडोदरान्निपतितस्य शुकार्भकस्य त्राणेन नाथ विहरन्निव सार्वभौमः।
आदाय गोपनगराधिपते स्वयं मां क्रीडादयाव्यतिकरेण कृतार्थय त्वम्॥

लीलाशकुन्तमिव मां स्वपदोपलब्ध्यै
स्वैरं क्षिपन्दुरितपञ्जरतो गुणस्थम् ।
तत्तादृशं कमपि गोपपुरीविहारिन्
संतोषमुल्लळय सागरसंभवायाः ॥२०॥

वातूलकल्पवृजिनप्रभवैर्मदीयां वैयाकुलीं विषयसिन्धुतरङ्गभङ्गैः ।
दासोपमर्दसह दुर्निरसां त्वदन्यैरन्वीक्ष्य गाढमनुकम्पितुमर्हसि त्वम्॥

एनस्विनीमिति सदा मयि जायमानां
देहळ्यधीश दृषदोऽपि विलापयन्तीम् ।
नाथे समग्रशकने त्वयि जागरूके
किं ते सहेत करुणा करुणामवस्थाम्? ॥२२॥

आत्मोन्नतिं परनिकर्षमपीह वाञ्छन्
निम्ने विमोहजलधौ निपतामि भूयः ।
तन्मामुदञ्चय तवोन्नतपादनिम्नं
देहळ्यधीश गुणितेन दयागुणेन ॥२३॥

अक्षीणकल्मषरसोऽपि तवानृशंस्याल्लक्ष्मीसमक्षमपि विज्ञपयाम्यभीतः।
भक्तोपमर्दरासिक स्वयमल्पबुद्धेर्यन्मन्यसे मम हितं तदुपाददीथाः ॥

मन्ये दयार्द्रहृदयेन महाधनं मे
दत्तं त्वयेदमनपायमकिंचनत्वम् ।
येन स्तनंधयमिव स्वहितानभिज्ञं
स्वीकरोषि निजपादसरोरुहे माम् ॥२५॥

दुर्वारतीव्रदुरितप्रतिवावदूकै-
रौदार्यवद्भिरनघस्मितदर्शनीयैः ।
देहळ्यधीश्वर दयाभरितैरपाङ्गै-
र्वाचं विनापि वदसीव मयि प्रसादम् ॥२६॥

अयमनवमसूक्तैरादिभक्तैर्यथाव-
द्विशदितनिजतत्त्वो विश्वमव्यादभव्यात् ।
रथचरणनिरूढव्यञ्जनानां जनानां
दुरितमथनलीलादोहळी देहळीशः ॥२७॥

इयमवितथवर्णा वर्णनीयस्वभावा-
द्विदितनिगमसीम्ना वेङ्कटेशेन गीता ।
भवमरुभुवि तृष्णालोभपर्याकुलानां
दिशतु फलमभीष्टं देहळीशस्तुतिर्नः ॥२८॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु देहळीशस्तुतिः संपूर्णा ॥

---

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥

## ॥ वेगासेतुस्तोत्रम् ॥

श्रीमान्वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥

एकं वेगवतीमध्ये हस्तिशैले च दृश्यते ।
उपायफलभावेन स्वयं व्यक्तं परं महः ॥१॥

ईष्टे गमयितुं पारमेष सेतुरभङ्गुरः ।
यत्र सारस्वतं स्रोतो विश्राम्यति विशृङ्खलम् ॥२॥

जयति जगदेकसेतुर्वेगवतीमध्यलक्षितो देवः ।
प्रशमयति यः प्रजानां प्रथितान्संसारजलधिकल्लोलान् ॥३॥

विभातु मे चेतसि विष्णुसेतुर्वेगापगावेगविघातहेतुः ।
अम्भोजयोनेर्यदुपज्ञमासीदभङ्गरक्षा हयमेधदीक्षा ॥४॥

चतुराननसप्ततन्तुगोप्ता सरितं वेगवतीमसौ निरुन्धन् ।
परिपुष्यति मङ्गळानि पुंसां भगवद्भक्तिमतां यथोक्तकारी ॥५॥

श्रीमान्पितामहवधूपरिचर्यमाणः
शेते भुजङ्गशयने स महाभुजङ्गः ।
प्रत्यादिशन्ति भवसंचरणं प्रजानां
भक्तानुगन्तुरिह यस्य गतागतानि ॥६॥

प्रशमितहयमेधव्यापदं पद्मयोनेः
श्रितजनपरतन्त्रं शेषभोगे शयानम् ।

शरण मुपगताः स्मः शान्तनिःशेषदोषं
शतमखमणिसेतुं शाश्वतं वेगवत्याः ॥७॥

अनघमुपगतानां सोऽयमादेशकारी
शमयति परितापं संमुखः सर्वजन्तोः ।
शतगुणपरिणामः संनिधौ यस्य नित्यं
वरवितरणभूमा वारणाद्रीश्वरस्य ॥८॥

काञ्चीभाग्यं कमलनिलयाचेतसोऽभीष्टसिद्धिः
कल्याणानां निधिरविकलः कोऽपि कारुण्यराशिः ।
पुण्यानां नः परिणतिरसौ भूषयन्भोगिशय्यां
वेगासेतुर्जयति विपुलो विश्वरक्षैकहेतुः ॥९॥

वेगासेतोरिदं स्तोत्रं वेङ्कटेशेन निर्मितम् ।
ये पठन्ति जनास्तेषां यथोक्तं कुरुते हरिः ॥१०॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु वेगासेतुस्तोत्रं सम्पूर्णम् ॥

---

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥

---

## ॥ पांडुरंगस्तोत्रम् ॥

महायोगपीठे तटे भीमरथ्यावरं पुण्डरीकाय दातुं मुनींद्रैः ।
समागत्य तिष्ठंतमानंदकंदं परब्रह्मलिंगं भजे पांडुरंगम् ॥१॥
तडिद्वाससं नीलमेघावभासं रमामंदिरं सुंदरं चित्प्रकाशम् ।
वरं त्विष्टिकायां समन्यस्तपादं परब्रह्मलिंगं भजे पांडुरंगम् ॥२॥
प्रमाणं भवाब्धेरिदं मामकानां नितंबः कराभ्यां धृतो येन तस्मात् ।
विधातुर्वसत्यै धृतो नाभिकोशः परब्रह्मलिंगं भजे पांडुरंगम् ॥३॥
स्फुरत्कौस्तुभालंकृतं कंठदेशे श्रियाजुष्टकेयूरकं श्रीनिवासम् ।
शिवं शांतमीड्यं वरंलोकपालं परब्रह्मरूपं भजे पांडुरंगम् ॥४॥
शरच्चंद्रबिंबाननं चारुहासं लसत्कुंडलाक्रांतगंडस्थलांगम् ।
जपारागबिंबाधरं कंजनेत्रं परब्रह्मलिंगं भजे पांडुरंगम् ॥५॥
किरीटोज्वलत्सर्वदिक्प्रांतभागं सुरैरार्चितं दिव्यरत्नैरनर्घ्यैः ।
त्रिभंगाकृतिं बर्हमाल्यावतंसं परब्रह्मलिंगं भजे पांडुरंगम् ॥६॥
विभुं वेणुनादं चरंतं दुरंतं स्वयं लीलया गोपवेषं दधानम् ।
गवां बृंदकानंदनं चारुहासं परब्रह्मलिंगं भजे पांडुरंगम् ॥७॥
अजं रुक्मिणीप्राणसंजीवनं तं परं धाम कैवल्यमेकं तुरीयम् ।
प्रसन्नं प्रपन्नार्तिहं देवदेवं परब्रह्मलिंगं भजे पांडुरंगम् ॥८॥
स्तवं पांडुरंगस्य वै पुण्यदं ये पठंत्येकचित्तेन भक्त्या च नित्यम् ।
भवांभोनिधिं तेऽपि तीर्त्वांऽतकाले हरेरालयं शाश्वतं प्राप्नुवंति ॥९॥

इति श्रीमच्छङ्कराचार्य विरचितं पांडुरंगाष्टकं संपूर्णम् ॥

## ॥ अथ जगन्नाथाष्टक प्रारंभः ॥

कदाचित्कालिंदीतटविपिनसंगीतकवरो
मुदा गोपीनारीवदनकमलास्वाद मधुपः ।
रमाशंभु ब्रह्माऽमरपति गणेशाऽर्चितपदो
जगन्नाथस्वामी नयनपथगामी भवतुमे ॥१॥

भुजे सव्ये वेणुं शिरसि शिखिपिंछं कटितटे
दुकूलं नेत्रान्ते सहचरकटाक्षं विदधते
सदा श्रीमद्वृंदावनवसतिलीलापरिचयो जगन्नाथस्वामी० ॥२॥

महांभोधेस्तीरे कनकरुचिरे नीलशिखरे
वसन्प्रासादांतस्सहजबलभद्रेण बलिना ।
सुभद्रामध्यस्थस्सकलसुरसेवावसरदो जगन्नाथस्वामी० ॥३॥

कृपा पारावार स्सजलजलदश्रेणिरुचिरो
रमावाणी सोमस्फुरदमलपद्मोद्भवमुखैः ।
सुरेंद्रैराराध्यः श्रुतिगणशिखागीतचरितो जगन्नथस्वामी ॥४॥

रथारूढो गच्छन्पथि मिलितभूदेवपटलैः
स्तुतिप्रादुर्भावं प्रतिपद मुपाकर्ण्य सदयः ।
दयासिंधुर्बंधुस्सकलजगतां सिंधुसुतया जगन्नाथस्वामी० ॥५॥

परब्रह्मापीडः कुवलयदलोत्फुल्लनयनो
निवासी नीलाद्रौ निहितचरणोऽनन्तशिरसि ।
रसानन्दो राधासरसवपुरालिङ्गनसुखो जगन्नाथस्वामी० ॥६॥

न वै प्रार्थ्यं राज्यं न च कनकतां भोगविभवं
न याचेऽहं रम्यां निखिलजनकाम्यां वरवधूम् ।
सदा काले काले प्रमथपतिना गीतचरितो जगन्नाथस्वामी० ॥७॥

हर त्वं संसारं द्रुततरमसारं सुरपते
हर त्वं पापानां विततिमपरां यादवपते ।
अहो दीनानाथं निहितमचलं पातुमचलं
जगन्नाथस्वामी नयन पथगामी भवतुमे ॥८॥

इति श्रीमत्परमहंस परिव्राजकाचार्यस्य
श्रीगोविन्द भगवत्पूज्यपादशिष्यस्य श्रीमच्छङ्कर भगवतः कृतौ
श्रीजगन्नाथाष्टकं सम्पूर्णम् ॥

## ॥ अथ गोविन्दाष्टक प्रारम्भः ॥

सत्यं ज्ञानमनन्तं नित्यमनाकाशं परमाकाशं
गोष्ठप्राङ्गणरिङ्खण लोलमनायासं परमायासम् ।
मायाकल्पितनानाकारमनाकारं भुवनाकारं
क्ष्मानाथमनाथं प्रणमत गोविंदं परमानन्दम् ॥१॥

मृत्स्नामत्सीहेति यशोदा ताडनशैशवसंत्रासं
व्यादितवक्त्रा लोकितलोका लोकचतुर्दश लोकालिम् ।
लोकत्रयपुरमूलस्तम्भं लोकालोक मनालोकं
लोकेशं परमेशं प्रणमत गोविन्दं परमानन्दम् ॥२॥

त्रैविष्टपरिपुवीरघ्नं क्षितिभारघ्नं भवरोगघ्नं
कैवल्यं नवनीताहारमनाहारं भुवनाहारम् ।
वैमल्यस्फुटचेतोवृत्ति विशेषाभास मनाभासं
शैवंकेवलशान्तं प्रणमत गोविन्दं परमानन्दम् ॥३॥

गोपालं भूलीलाविग्रहगोपालं कुलगोपालं
गोपीखेलन गोवर्धनधृति लीलाविलसित गोपालम् ।
गोभिर्निगदितगोविन्दस्फुट नामानं बहुनामानं
गोपीगोचरपथिकं प्रणमत गोविन्दं परमानन्दम् ॥४॥

गोपीमण्डलगोष्ठीभेदं भेदावस्थमभेदाभं
शश्वद्गोखुर निर्धूतोत्कृत धूळीधूसरसौभाग्यम् ।
श्रद्धाभक्तिगृहीतानन्दमचिन्त्यं चिंतितसद्भावं
चिन्तामणिमहिमानं प्रणमत गोविन्दं परमानन्दम् ॥५॥

स्नानव्यापृत योषिद्वस्त्रमुपादायागमुपारूढं
व्यादित्संतीरथ दिग्वस्त्रा उपदातीरप कर्षन्तम् ।
निर्धूतद्वयशोकविमोहं बुद्धं बुद्धेरन्तःस्थं
सत्तामात्रशरीरं प्रणमत गोविन्दं परमानन्दम् ॥६॥

कान्तं कारणकारणमादि मनादिं काल मनाभासं
कालिंदीगतकाळीयशिरस्सु मुहु नृत्यंतं सुहसंतम् ।
कालं कालकळातीतं कलिताशेषं कलिदोषघ्नं
कालत्रयगतहेतुं प्रणमत गोविंदं परमानंदम् ॥७॥

बृन्दावन॰ रे बृन्दारकगण बृंदाराधित
कुंदाभा॰ रमंदस्मेर सुधानंदं सुहृदानदम् ।
नंद्याशे ॰मुनि मानस वंद्यानंद पदद्वंद्वं
नन्द्याशेष गुणाब्धि प्रणमत गोविंदं परमानंदम् ॥८॥

गोविंदाष्टकमेतदधीते गोविंदार्पितचेता यो
गोविंदाच्युत माधव विष्णो गोकुलनायक कृष्णेति ।
गोविंदांघ्रिसरोजध्यानसुधाजलधौत समस्ताघं
गोविंदं परमानंदामृतमंतस्स्थं स तमभ्येति ॥९॥

इति श्रीमच्छङ्कराचार्य सद्गुरुविरचितं
श्रीगोविंदाष्टकं संपूर्णम् ॥



## ॥ अथ वेङ्कटेशाष्टकप्रारम्भः ॥

श्रीवेङ्कटेशपदपङ्कजधूलिपङ्क्तिः संसारसिन्धुतरणे तरणिर्नवीना ।
सर्वाघपुञ्जहरणाय च धूमकेतुः पायादनन्यशरणं स्वयमेव लोकम् ॥

शेषाद्रिगेह तव कीर्तितरङ्गपुञ्ज आभूमिनाकमभितः सकलान्पुनानः ।
मत्कर्णयुग्मविवरे परिगम्यसम्यक्कुर्यादशेषमनिशं खलु तापभङ्गम् ॥

वैकुण्ठराज सकलोऽपि धनेशवर्गो नीतोऽपमानसरणिं त्वयि विश्वसित्रा ।
तस्मादयं न समयः परिहासवाचामिष्टं प्रपूर्य कुरु मां कृतकृत्यसङ्घम् ॥

श्रीमन्नरास्तु कतिचिद्धनिकांश्च केचि-
त्क्षोणीपतीन्कतिचिदत्र च राजलोकान् ।

राधयन्तु मलशून्यमहं भवन्तं
श्याणलाभजननाय समर्थमेकम् ॥४॥

र्मीपतित्वमखिलेश तव प्रसिद्ध-
त्र प्रसिद्धमवनौ मदकिंचनत्वम् ।
ग्रोपयोगकरणाय मया त्वया च
र्यः समागम इदं मनसि स्थितं मे ॥५॥

शेषाद्रिनाथ भवताऽयमहं सनाथः
सत्यं वदामि भगवंस्त्वमनाथ एव ।
तस्मात्कुरुष्व मदभीप्सितकृत्यजाल-
मेव त्वदीप्सितकृतौ तु भवान्समर्थः ॥६॥

द्धो यदा भवसि तत्क्षणमेव भूपो रङ्कायते त्वमसि चेत्खलु तोषयुक्तः।
पायतेऽथ निखिलश्रुतिवेद्य रङ्क इच्छाम्यतस्तव दयाजलवृष्टिपातम्॥
ङ्गीकृतं सुविरुदं भगवंस्त्वयेति मद्भक्तपोषणमहं सततं करोमि ।
विष्कुरुष्व मयि तत्सततं प्रदीने चिन्ताप्रहारमयमेव हि योग्यकालः॥

सर्वासु जातिषु मयातु समत्वमेव निश्चीयते तव विभो करुणाप्रवाहात्।
प्रह्लादपाण्डुसुतवल्लवगृध्रकादौ नीचो न भाति मम कोऽप्यत एव हेतोः॥
संभाविताास्तु परिभूतिमथ प्रयान्ति धूर्ता जयं हि कपटैकपरा जगत्याम्।
प्राप्तेतु वेङ्कटविभो परिणामकालेस्याद्वैपरीत्यमिव कौरवपाण्डवानाम् ॥

श्रीवेङ्कटेश तव पादसरोजयुग्मे संसारदुःखशमनाय समर्पयामि ।
भास्वत्सदष्टकमिदं रचितं रसाक्तं प्राभाकरोहमनिशं विनयेन युक्तः॥

श्रीशालिवाहनशके शरकाष्टभूमि
(१८१५) संख्यामितेऽथ विजयाभिधवत्सरेऽयम् ।
श्रीकेशवात्मज इदं व्यतनोत्समल्पं
स्तोत्रं प्रभाकर इति प्रथिताभिधानः ॥१२॥

इति गार्ग्यकुलोत्पन्न-यशोदागर्भज-केशवात्मजप्रभाकर-कृतिषु ।
श्रीवेङ्कटेशाष्टकं स्तोत्रं समाप्तिमगमत् ॥

श्रीकृष्णदासतनुजस्य मया तु गङ्गा-
विष्णोरकारि किल सूचनयाऽष्टकं यत् ।
तद्वेङ्कटेशमनसो मुदमातनो तु
तद्भक्तलोकनिवहाननपंक्तिगं सत् ॥

पित्रोर्गुरोश्चाप्यपराधकारिणो भ्रातुस्तथाऽन्यायकृतश्च दुर्गताः ।
तेषु त्वयाऽथापिकृपा विधीयतां सौहार्दवश्येन मया तु याच्यते ॥

इति श्रीवेङ्कटेशाष्टकं समाप्तम् ॥



Printed at the 'Vavilla Press', Madras:—1927.

## ॥ क्रय्यपुस्तकानि ॥

| | रू. | आ. |
|---|---|---|
| संस्कृतबालशिक्षा आन्ध्रलिप्यासमलंकृता, श्रीरामायणसंग्रहसहिताच संस्कृतान्ध्राक्षर जिज्ञासूनामत्युपयोगिनी | ० | ३ |
| सरस्वतीप्रार्थना, श्यामलादण्डकम्, नवरत्नमाला च | ० | २ |
| शब्दमञ्जरी, (दृढपत्रात्मिका) | ० | ६ |
| संस्कृतान्ध्रवर्णबोधिनी पत्रफलका .... | ० | २ |
| यजुर्वेदसन्ध्यावन्दनम् .... | ० | २ |
| महाकविबोधायनकृतभगवदज्जुकनाटकम् .... | ० | ६ |
| रामकर्णामृतम् .... | ० | ८ |
| बालरामायणम् .... | ० | ३ |
| विवेकचूडामणिः .... | ० | ८ |
| श्रीकृष्णकर्णामृतम् .... | ० | ६ |
| ,, आंग्लानुवादसहितम् .... | १ | ८ |
| शिवकवचम् ... | ० | २ |
| शिवानन्दलहरी .... | ० | २ |
| आदित्यहृदयम् ... | ० | २ |
| श्रीगोविन्दद्वादश (चतुर्दश) मञ्जरिकास्तोत्रम् ... | ० | १ |
| हिन्दी तेलुगु बालशिक्षा ... | ० | ३ |
| ,, प्रथमवाचकम् ... | ० | ८ |
| भर्तृहरिशतकत्रयम्, मूलम् ... | ० | ४ |

| | | रू. | अ. |
|---|---|---|---|
| श्रीलक्ष्मीनारायणहृदयम् | ... | ० | ३ |
| ब्रह्मसूत्राणि, मूलमात्रम् | ... | ० | ३ |
| श्रीदक्षिणामूर्तिस्तोत्रम् | ... | ० | १ |
| पञ्चसूक्तानि | ... | ० | २ |
| रुद्रनमकचमकम् | ... | ० | २ |
| सौन्दर्यलहरीस्तोत्रम् | .... | ० | २ |
| यजुर्वेदाह्निकम् | .... | ० | ६ |
| श्रीवैष्णवाह्निकम् | ... | ० | ८ |
| सूर्यनमस्कारमन्त्राः ऋग्युचब्रह्मयज्ञसहितास्सस्वराश्च | | ० | १ |
| लक्ष्मीनृसिंहस्तोत्रम् | ... | ० | १ |
| मुकुन्दमाला | ... | ० | १ |
| भगवद्गीता मूलमात्रम् | ... | ० | ४ |
| विष्णुसहस्रनामस्तोत्रम् नामावळीसाहितम् | .... | ० | ४ |
| ललितासहस्रनामस्तोत्रम् ,, | .... | ० | ६ |
| लक्ष्मीसहस्रनामस्तोत्रम् ,, | ... | ० | ४ |
| सुब्रह्मण्यसहस्रनामस्तोत्रम् ,, | ... | ० | ४ |
| शिवसहस्रनामस्तोत्रम् ,, | ... | ० | ४ |
| वेङ्कटेशसहस्रनामस्तोत्रम् ,, | ... | ० | ४ |
| अन्नपूर्णासहस्रनामस्तोत्रम् ,, | ... | ० | ४ |
| आंजनेयसहस्रनामस्तोत्रम् ,, | .... | ० | ४ |
| गणपतिसहस्रनामस्तोत्रम् ,, | .... | ० | ४ |

| | | रू. | अ. |
|---|---|---|---|
| ...ामसहस्रनामस्तोत्रम् नामावलीसहितम् | ... | ० | ४ |
| श्रीकृष्णसहस्रनामस्तोत्रम् ,, | .... | ० | ४ |
| गोपालसहस्रनामस्तोत्रम् ,, | ... | ० | ४ |
| लक्ष्मीनृसिंहसहस्रनामस्तोत्रम् ,, | .... | ० | ४ |
| बटुकभैरवसहस्रनामस्तोत्रम् ,, | ... | ०. | ४ |
| रघुवंशमहाकाव्यम्, सव्याख्यानम् | ... | | |


## ॥ विक्रमार्कचरित्रम् ॥

भो महाशयाः, अस्मन्मुद्रणशालायामिदानीं देवनागरलिप्यामपि ग्रन्थाः मुद्राप्यन्ते [illegible] चिरमेव तत्रभवतां भवताम् ॥

सुप्रसिद्धेषु गद्यग्रन्थेषु संस्कृतभाषाप्रविविक्षूणां विक्रमार्कचरित्रम्, भोजचरित्रमित्यु-[illegible]तेषु मुख्यौ ॥ दाक्षिणात्यपाठानुसारेण मुम्बापुर्यादिपत्तनेषु मुद्रितयोरनयोः पुस्तकयो-[illegible]भावादिदानीं विक्रमार्कचरित्रं दाक्षिणात्यपाठानुसारेणान्ध्रलिप्यां ग्रन्थलिप्यां च मुद्रित-[illegible] कृत्य सुंदरायसाक्षरैः दृढचिक्कणपत्रेषु संमुद्य विक्रेयमस्ति । आंग्लपाठशालायां [illegible] माणवकानामुपकाराय, आंग्लानुवादसहिता, अकाराद्यनुक्रमणिका (Glossary) संयोजितास्ति । पाठशालाध्यापकाः सर्वेऽपि माणवकानेतत्पुस्तकक्रयणाय प्रोत्साह्य एतादृशग्रन्थमुद्रणाय प्रोत्साहयेयुरस्मानिति प्रार्थयामहे ॥

भोजचरित्रमपि त्वरितमेव प्रकटिष्यते ॥ इत्थं भवद्विधेयाः ।

**वाविळ्ळ रामस्वामिशास्त्रुलु अण्ड् सन्स्,**

[illegible] रू. ०—१०—० व्यापकाः.

## ॥ अभिज्ञानशाकुन्तलं नाम नाटकम् ॥

भोभास्सेचेतसः, आधुनिकीकिल काचन विज्ञापना,

इदंकिल राघवभट्टकृतव्याख्यया, श्रीनिवासाचार्यरचित व्याख्यया च सहितं दाक्षिणात्यौत्तरिक पाठभेदादिसंकलितं सहृदय हृदयाह्लादनचातुरीधुरीणरसालङ्कारादिपरिष्कृतं च नाटकं स्फुटतर देवनागरलिप्या मुद्राप्यमाणं सदचिरादेवास्मन्मुद्रणालये प्रचाराह भविष्यतीति ॥

---

## ॥ बृहत्स्तोत्ररत्नाकरः ॥

### ॥ द्वितीयभागः ॥

भोस्सहृदयाः, विज्ञापयामो वयं किमपि भवतस्,

अयमप्यस्मन्मुद्रणालये देवनागरीलिपिविलक्षण मुद्रणे सर्वमतपरिग्रहक्षमैः सर्वदा सुलभसङ्ग्रहणैः कवच, हृदय, पूजा मन्त्राष्टोत्तर शतसहस्रनामादिसंवलितैश्च कैश्चन स्तोत्रजालैस्संयोजितः सार्वजनीन पारायणादिसौकर्य सम्पिपादयिषया मुद्राप्यमाणस्सन्नचिरेणैव प्रचारं गमिष्यतीति ।

इत्थं भवद्विधेयाः

वाविळ्ळ. रामस्वामिशास्त्रुलु अण्ड् सन्स्,

१२, एस्प्लनेड्, चेन्नपुरी

